ॐ श्रीरस्तु ।

श्रीमते हयग्रीवाय नमः ।

श्रीमते निगमान्तमहागुरवे नमः ।

# सङ्कल्पसूर्योदये चतुर्थोऽङ्कः ।

ततः प्रविशति कामो वसन्तश्च

कामः—सखे वसन्त

इक्षुः पेशलमीदृशं मम धनुः पुष्पाण्यमी सायका
स्तंत्रीमंजुलनिस्वना मधुकरश्रेणी शुभा शिंजिनी ।
भीरुस्सन्नबलाजनो मम बलं तथ्यं परं कथ्यते
सोहं निर्जितशूलभृत्प्रभृतिकस्संकल्पसिद्धोदयः ॥ १ ॥

---

अथेदानीं अङ्कास्येन अर्थोपक्षेपकेन अङ्कमवतारयति तत इत्यादि-।

अङ्कान्तपात्रै रङ्कास्यं छिन्नाङ्कार्थस्य सूचनं

इत्यङ्कास्य लक्षणं अत्र पूर्वाङ्कान्ते ।

अवस्कन्दन् विश्वं सुमुखिमधुना साकमधुना ।
विधत्तं दुर्दान्तो बिविधमपनीतं रतिपतिः ॥

इत्युक्ताभ्यां मदनवसन्ताभ्यां तत्रास्मत्प्रतिपक्षस्य सौप्तिकसचाहसमयं सूचयत इति । विवेकेनोक्तस्य सौप्तिकस्य सूचनात्कामस्तावत्स्ववैभवमाह ।

इक्षुरिति-पेशलं सुन्दरं तन्त्र्या इव मञ्जुलः मनोज्ञं निस्वनो यस्यास्तथोक्ता शिञ्जिनी ज्या उक्तं सर्वं तथ्यं कथ्यते निर्जिता शूलभृत् प्रभृतयो येन स तथा सङ्कल्पमात्रादेव सिद्ध उदयोऽभ्युदयो यस्य स तथा ॥ १ ॥

अपि च,

त्वयिसंभृतशस्त्रास्त्रे सहायेममसंस्थिते ।
महतापश्यमोहेन विश्वमेकातपत्रितं ॥ २ ॥

वसन्तः—किमुच्यतेकामः खल्वसि,

कामंकामंकामपिसिद्धिं करणैःस्वैः
कारंकारं कर्मनिषिद्धंविहितं वा ।
न्यस्यन्तित्वय्यद्भुतसीम्निप्रतिबुद्धाः
कामोकार्षीन्मन्युरकार्षीदितिनाम ॥ ३ ॥

अपि च,

विषमनयनमुख्यैर्विक्रमक्रीडितन्ते
सुरपतिभवनानिस्वैरसञ्चारभूमिः ।
उदधिवलयितेयं क्षोणिरुद्यानसीमा
कथमिवमदनत्वं वर्ण्यसेकान्तिसिन्धुः ॥ ४ ॥

कामः—सखे, सर्वलोकविदितमात्मनोऽपिवैभवमनुचिन्तय, यदेतत्

प्रख्यातस्त्वयिसंभवस्सुमनसांविश्वं त्वयानन्द्यते
मुख्यस्त्वंकिलषड्विधेषु ऋतुषु ज्योतिस्त्वदेवाश्रयं ।

---

त्वयि इति—संभृतानि शस्त्रास्त्राणि येन तस्मिन् त्वयि मयि सहाये सम्यक् स्थिते सति महतामोहेन विश्वं जगदेकातपत्रितं एकातपत्रं कृतं ॥ २ ॥

वीक्ष्यमाणातिशयाभिप्रायेण कामो सखल्विति—। कोसावतिशयइत्यत आह—

कामंकाममिति—॥कामपि यां काञ्चित् सिद्धिं कामंकाममभिलष्याभिलष्य स्वै करणैरिन्द्रियै र्निषिद्धं विहितं वा कर्म कारङ्कारं कृत्वा कृत्वा अद्भुतसीम्नि त्वयि कामोकार्षीन्मन्युरकार्षीदितिन्यस्यन्ति नाम प्रसिद्धो ह्येतदिति भावः ॥ ३ ॥

अन्यदप्याह अपिचेति—।

विषमेति—॥ विषमनयनमुख्यैः त्रिलोचनप्रधानैः ते तव विक्रमक्रीडितं पराक्रम लीला सुरपतीनां ब्रह्मादीनां भवनानिस्थानानि स्वैरसञ्चारस्य स्वच्छन्द सञ्चारस्य भूमिः कान्तीनां सिन्धुः अपारं निधानमत एव मदनमदहेतोस्त्वं कथमिव वर्ण्यसे तव महिमापारत्वादयमेवंविध इति परिछिद्य वर्णयितुमशक्यस्त्वमिति भावः ॥ ४ ॥

प्रख्यात इति—॥ सुमनसां पुष्पाणां शोभनमनसां च सम्भवस्त्वयि प्रख्यात

यत्रश्रीर्धूतपंकजा सचपरस्त्वत्संश्रयोमाधवः
कामस्तेसचिवः कएव भविताकालोत्तमस्त्वत्समः ॥५॥

अपि च,

वसंतस्त्वं वह्निर्मलयपवनस्सारथिरसा
वशोकादिर्ज्वालामधुकरगणो धूमपटली ।
सुधासूतिस्नेहस्तदिहजितनिर्वाणवचसो
विरक्तिस्तेदाह्यंद्रुहिणगिरिशादेरपिसतः ॥ ६ ॥

वसन्तः—महावीरमकरकेतन मादृशामतिशयस्त्वदर्थैव, यथा

ऋतवोहिमत्प्रधानास्तवैवनानाश्रशिल्पिनस्स्रष्टाः ।
विजयसमयं शशांको विश्रमकालं व्यनक्तिदिवसेशः ॥७॥

---

विश्वं जगत् त्वयानन्दयते तुष्यति षड्विधाः प्रकाराः येषां तेषु षड्विधेषु ऋतुषु त्वंमुख्यः ऋतूनां कुसुमाकर इतिगीतत्वात् ज्योतिः ज्योतिष्टोमः त्वदेकाश्रयं त्वमेव मुख्यः आश्रयो यस्यतत्तथा ।

वसन्तेवसन्ते ज्योतिषा यजेतेति श्रुतेः यत्रधूतानि पंकजानि ययासा श्रीर्लक्ष्मीः शोभा च परः उत्कृष्टः माधवः विष्णुः वैशाखश्च त्वत्संश्रयो यस्य स तथा अतएव कालोत्तमः त्वत्समः कएव भविता नकोपि त्वत्समो भविष्यतीतिभावः ॥ ५ ॥

तमेव अग्नित्वेन रूपयति अपिचेति -॥

वसन्तः इति—॥ हे वसन्त त्वं वह्निः असौमलयपवनः सारथिः तद्वेश प्रापकः अशोकः कंकेलिरादिर्यस्य स तथा आदिशब्देन आम्रादिर्गृह्यते ज्वाला शोणिम्ना ज्वालात्वं मधुकरगणस्य धूमपटलीत्वं नीलिम्ना सुधासूतिः चन्द्र सस्नेहस्तैलादिः तस्मात्कारणादिह जगतिजितमपास्तं निर्वाणवचसांतव्यवहारः यस्य तस्य ते द्रुहिणगिरिशादेरपि सतः सज्जनस्य विरक्तिर्दाह्य एवन्तेन सतां वैराग्यमुन्मूलितं भवतीति भावः ॥ ६ ॥

मादृशानां मत्समानां । उक्तमेवार्थं विशदयति—।

ऋतव इति—॥ नानास्त्राणां विविधास्त्राणां शिल्पिनः स्रष्टारः सृष्टाविधिनेतिशेषः शशांकः विजयसमयं व्यनक्तिदिवसेशः विश्रामकालं व्यनक्ति ॥ ७ ॥

कामः—आस्तामयमन्योन्यप्रशंसनविस्तरः अवधातव्यं राजकृत्ये

वसन्तः—यदुच्यते वयस्येन, तदिह समानभावयोस्समाधिप्रवण पुरुषचेतःक्षोभणे शृंगारोद्दीपनविभावकृत्यंमय्यायत्तं भवतापुनरालम्बन विभावसंपत्तिरुपपादनीया,

कामः—सुहृत्संमतमहमिदानीमाचरामि, अयं खल्वपरिचितशुभाश्रयधारणाभिलाषी पुरुषश्चिरपरिचितसुखालम्बने सुखेनसंमुखयितुंशक्यते अस्तिहिदेवासुरसिद्धगन्धर्वविद्याधरकिन्नरकिंपुरुषमानुषादिसर्वपुरुषचक्षुः प्रत्यक्षं स्वतः पुरुषार्थभूतंसुखेोचनाभिधानं ब्रह्मनचैतदनुपपन्नं

परमानन्ददायिन्यः प्रजानांसृष्टिहेतवः ।
ब्रह्मलक्षणशालिन्योनकथं ब्रह्मयोषितः ॥ ८ ॥

वसन्तः—सखे, अत्यन्तसमतस्त्वदभिमतोयमर्थः स्त्रियोब्रह्मेति प्रथममामनन्ति उतवापुमानितितुवैभवादुक्तिः ।

---

अन्योन्य प्रशंसायाः विस्तारः अवधातव्यं सावधानतया स्थातव्यं ।

समाधौ प्रवणस्यपुरुषस्य चेतःक्षोभणे शृंगाररसस्योद्दीपनविभावे यत्कृत्यमस्ति मिय्यायत्तं आलंबनविभावसंपत्तिः आलंबनविभावस्य संपत्तिः समृद्धिमुपपादयितुंयोग्या अत्रविभावः कथ्यते तत्र रसोद्दीपनकारणमालंबनोद्दीपनात्मा सद्विधा परिकीर्तितः ।

आलंबन विभावश्च द्विधैव परिगीयते ।
नायिकाविषयश्चैकस्तथान्यो नायकाश्रयः
आलंबनगुणश्चैव तच्चेष्टा तदलंकृतिः ।
तटस्थाचेति विज्ञेयाश्चतुर्थोद्दीपनक्रमाः ॥

इत्यादिक्रमनुसन्धेयं ।

अपरिचिते एतावन्तं कालमनभ्यस्ते शुभाश्रये धारणाचित्तस्यधारणं तदभिलाषिक तशुभालंबनमित्यत्राह—अस्तिहीति—।

सुखे चनाभिधानं ब्रह्मेत्येतच्च नानुपपन्नं ॥ परमेति ॥ मोक्षपटत्व जगत्कारणत्वे किलब्रह्मलक्षणे तदुभयसंपन्ना योषितः कथं न ब्रह्म चेत्यर्थः । अयमर्थो न केवलमनुमानात्सिद्धिः ॥ ८

अपि च,

अलसललितमन्दं स्पन्दनं लोचनानां
अकृतकरमणीयावृत्तयो विभ्रमाणां ।
अपि तरुणवधूनामाहरेयुर्मुनीन्द्रान्
शतमपि च विधूय ब्रह्मणां शाश्वतानाम् ॥ ९ ॥

कामः—(सहर्षं) सखे वसन्त अवितथमेवैतदभिलप्यते ततश्च

अयमप्सरसांगणः प्रनृत्यन्
विशिखाधारविकल्प्यमानदृष्टिः ।
अभिगच्छतु मंक्षु मत्प्रयुक्तः
पुरुषं कांक्षितपुण्यहीनयोगम् ॥ १० ॥

वसन्तः—वयस्य पुष्पधन्वन् त्वदादेशवर्तिनीषु मत्तकाशिनीषु सिद्धं नः समीहितं अत्र हि

स्वादुगीतमधुमोहितश्रुतेः
चारुनृत्तवशवर्त्तिचक्षुषः ।

---

अपितु वेदान्तादपीत्याह त्रय्यश्चेति । त्वदभिमते एवार्थो यस्यस तथोक्तः कोसौ त्रय्यन्त इत्यत्राह स्त्रियो ब्रह्मेति—।

स्त्रीणां ब्रह्मत्वस्य प्रथमोपात्तत्वात् अत्रैवास्यतात्पर्यमिति वदन्ति । प्रथमं मामनन्ति वेदान्ता इतिदोषः । वैभवोक्तिः अर्थवादः । अन्यदप्याह—

अलसेति—॥ अलसं क्रीडाध्वश्रमादिना सायासं ललितं प्रेमार्द्रमन्तर्विचलत्तारं ललितमित्युक्तलक्षणं मन्दमल्पप्रचारं नयनानां स्पन्दनं चलनं अकृतकरमणीया स्वभावरमणीया विभ्रमाणां वृत्तयश्च शाश्वतानां ब्रह्मणां शतमपि विधूय मुनीन्द्रानाहरेयुः मुनीन्द्राणामपि मनांसि स्त्रीणां विभ्रमा आहरेयुरित्यर्थः ॥ ९ ॥

अयमिति ॥ प्रनृत्यन् विशिखानां बाणानामाधारेण धारासंपातेन विकल्प्यमानादृष्टिर्यस्यस तथा मत्प्रयुक्तः अयमप्सरसांगणः कांक्षितः इष्टः पुण्यहीन पुण्यविधुरो योगो यस्यतं पुरुषमभिगच्छति ॥ १० ॥

त्वदादेशवर्तन्त इति त्वदादेशवर्तिन्यः तासु मत्तकाशिनीषु स्त्रीषु समीहित सिद्धिमुपपादयति ।

भावभेदभृतकीकृतात्मनो
योगिनस्त्यजति यौवतं नधीः ॥ ११ ॥

कामः—विचिन्त्यसरोषहासं

यदिमामवमत्य संयतेत
व्यवसायान्वयदर्पितो विवेकः ।
वनिताशतवञ्चितस्य पुंसः
स्वयमाधास्यति सौभरेरवस्थाम् ॥ १२ ॥

वसन्तः—किमत्राद्भुतं विश्वविदितं हि भवतो वीरायितं

विकस्वरसुरद्रुमप्रसवशस्त्रमाध्वीमद
भ्रमद्भ्रमरसुन्दरीनिकरसंभृतज्याभृतः ।
प्रहृष्टपरभृत्प्रियापणववेणुवीणादिभिः
क्वणद्भिरुपघुष्यते कुसुमधन्वनो विक्रमः ॥ १३ ॥

---

**स्वाद्विति**—॥ स्वादु मनोज्ञं यत् गीतं गानं तदेव मधु तेन मोहिता मुग्ध श्रुतिः श्रोत्रं यस्य तस्य चारुणः सुन्दरस्य नृत्तस्य वशवर्ती अधीनं चक्षुर्यस्य तस्य भावभेदानां रसभेदानां भृतकीकृतात्मनः भृत्यायितचित्तस्य योगिनः धीः यौवतं युवतिसमूहं न त्यजति ॥ ११ ॥

तत्प्रातिकूल्यस्मरणात्क्रोधः । तद्दौर्बल्यस्मरणजनितावज्ञया हासः ॥

**यदिति**—॥ व्यवसायस्य अन्वयेन संपर्केण दर्पितः गर्वितः विवेकः मामवमत्य संयतेत यदि वनिताशतेन वञ्चितस्य पुंसः सौभरेरवस्थां स्त्रीसंभोगैकप्रवणतां स्वयमेवं आधास्यति संपादयिष्यति ॥ १२ ॥

विश्वविदितं विश्वप्रसिद्धं वीरायित मेव विशदयति— ।

**विकस्वरेति** ॥ विकस्वराणि विकसितानि सुरद्रुमप्रसवान्येव शस्त्राणि बाणास्तेषां माध्व्या मधुना योमदः तेन भ्रमन्तीनां भ्रमरसुन्दरीणां मधुपाङ्गनानां निकरेण समूहेन संभृतां संपादितां ज्यां मौर्वीं बिभर्तीति ज्याभृत तस्य हे विक्रम प्रहृष्टाः परभृत्प्रियाः कोकिलवध्वः पणवः वेणुः वंशनालः वीणादिभिः क्वणद्भिरुपघुष्यते आदिशब्देन तालादयो गृह्यन्ते ॥ १३ ॥

तदिह लघुव्यापारलभ्येवस्तुनित्वया त्वरितेनप्रयतितव्यं

माभूदमोघविशिखैर्नमितन्धनुस्ते

मौर्वी चमाभवतुपुंखितचित्रपुंखा ।

मद्दर्शितैरपि सखेबिभियाद्विवेकः

शाखानिषङ्गनिहितैश्शतशस्त्वदस्त्रैः ॥ १४ ॥

काम:—महत्यांतपक्षमैवंमन्दोत्साहेन च भवितव्यं दृश्यतेहि

भिन्नप्रद्योतनिष्पाद्येतमसामपसारणे ।

सहस्रेणकरैस्सार्द्धमुदेतिदिवसेश्वरः ॥ १५ ॥

अपि च

तिष्ठतुसंग्रामकथाद्यूते-

पुरुषस्यवादमात्रेवा ।

भवतिपरिभूतिलेशेकतिकति-

विपदोनिदर्शिताःकविभिः ॥ १६ ॥

---

लघुना व्यापारेण लभ्ये वस्तुनि प्रतिपक्ष जयरूपेत्वरितेन त्वया प्रयतितव्यं लघुव्यापारलभ्यत्वमेव दर्शयति– ।

माभूदिति ॥ अमोघाः विशिखाः बाणाः यस्य तत्तथा तेधनुर्नमितं नतं नाभूत मौर्वीच पुंखिताः समृद्धाश्चित्राः नानावर्णाः पुंखाः शरा यस्यां सामाभुवन्तु शाखा एव निषङ्गाः तूणीराः तेषुनिहितैः शतशः असंख्यैः त्वदस्त्रैः पुष्पैरपि विवेकः बिभीयात् ॥ १४ ॥

प्रतिपक्षे महति सति एवं मन्दोत्साहेन मा भवितव्यं किंतु महोत्साहेनैव भवितव्यं लघुव्यापारलभ्येपि वस्तुनि महतां गुरुव्यापारसाहित्य दृश्यते हीत्यर्थः । तदेवाह– ।

भिन्नेति–॥ भिन्नप्रद्योतेन निष्पाद्ये तमोपसारणे दिवसेश्वरः सहस्रेण करैः सार्धमुदेति ॥ १५ ॥

महोत्साहेन भवितव्यमित्यत्र हेत्वन्तरमाह– ।

तिष्ठत्विति–॥ पुरुषस्य संग्रामकथा युद्धप्रसंगः तिष्ठतु द्यूते वादमात्रे वा परिभूतेः परिभवस्य लेशम्भवति सति कविभिः कतिकति विपदः नदर्शिताः अनेका विपदोनिदर्शिता इत्यर्थः ॥ १६ ॥

वसन्तः—किमित्येवमात्मप्रभावमवमत्यपरावरविश्वपरिभाविनस्ते कुतश्चित्परिभूतिलेशमाशंकसे नखलुशलभास्सहस्रमपि सहस्रकिरणमभिभवन्ति

अद्यच

**विपुलसुषुमापत्तौनृत्यद्विहारतुरंगमे**
**मधुमदसमारम्भस्तम्बेरमस्थगितान्तरे ।**
**रतिरसरथोत्सेधे कश्चिद्विधित्सितसंयमः**
**क्वचनभवतस्कन्धावारेनजीवति जीवति ॥१७॥**

नचेदानीं पुरुषस्समाधिसौधमधिरूढः यतस्तेतस्मिन्मनोरथप्रतिहतिशंका दृश्यते हि ।

**स्मरतिमहतामातङ्कानां मनस्कुरुतेग्रहान्**
**प्रसजति परब्रह्मप्राप्तौप्रसक्तिमपेक्षते ।**

---

अवरे अपकृष्टाःपरे उत्कृष्टाः तद्रूपविश्वभाविनः उक्तमर्थं दृढयति न खल्विति—

न केवलं परिभूत्यभाव एव अपितु त्वदग्रे प्रतिपक्षो न भवतीत्याह—

**विपुलेति—॥** विपुला अधिका सुषुमा कान्तिरेव पत्तिः पदातिर्यस्मिन् तस्मिन् नृत्यन्तो विहारतुरङ्गमाः विहाराः विभ्रमा एव तुरङ्गमाः यस्मिन्तस्मिन् मधुना आसवेन मदः तस्यारम्भः सएव स्तंबेरमः गजः एकवचनं जात्यभिप्रायः तेस्थगितं तरोहितमन्तरमवकाशः यस्मिन्तस्मिन् । रतौ क्रीडायां रसाः प्रीतयस्त एव रथाः तेषां उत्सेधः उच्छ्रायो यस्मिन्तस्मिन् भगवतः स्कन्धावारे सेनानिवेशे जीवति सति विधित्सितः विधातुमिष्टः संयमः प्रणिधिर्यस्य स तथा कश्चिदपि क्वचन न जीवति ॥ १७ ॥

समाधिरेव सौधं तदिदानीं नाधिरूढश्च यतः समाधिसौधारोहणात् तस्मिन्पुरुषे मन एव रथः तस्य प्रतिहतिशङ्का रथस्य सौधारोहण संभवात् दृश्यते हीत्येतत्-

प्रणिधिरित्यनेन संबध्यते ।

**स्मरतीति—॥** महतामातङ्कानां स्मरति कर्मणि षष्ठि ग्रहान्मनस्कुरुते ग्रहादिकं मनसि धत्ते परब्रह्मप्राप्तौ प्रसजति प्रसक्तोभवति प्रसक्तिं भगवत्प्रसादमपेक्षते भगवत्प्राप्तिः तत्प्रसादादृते नसेत्स्यतीति बुध्या भोगा एव उदन्वान् तस्मिन्भिन्नि

अभिनिविशते भोगोदन्वत्यपत्रपते पुनः
प्रणिधिरधुनासिद्धापायः सितासितपद्धतिः ॥ १८ ॥

तथाहि

सोऽयमसमग्रयोगे पुरुषे सर्वोऽस्त्रमोक्षसमयो मे ।
रथवैगुण्यविलक्षे राधेये फल्गुनस्येव ॥ १९ ॥

वसन्तः—भवतु नामैवं भगवतस्समीचीनमभीहितसिद्धिः

विरक्तिकपटक्रमाद्वृजिनकोटिभिर्दुर्दमे
परप्रणिधिकर्दमे पतितुमेकतानः पुमान् ।
त्वदस्त्रगणताडनत्रुटितगर्वनिर्वेदवान्
भवप्रणिधिसेवितं भजतु भोगवर्गं पुनः ॥ २० ॥

अपि च

मलयपवनज्योत्स्नामल्लीमधुव्रतकूजित
प्रभृतिविजयस्कन्धावारप्रधानपताकया ।

---

शते अभिनिविष्टो भवति पुनः अपत्रपते लज्जते अतः अधुना प्रणिधिः सितासित पद्धतिः व्यक्ताव्यक्तमार्गः तत एव सिद्धापायः ॥ १८ ॥

प्रियसखेन वसन्तेन । सैात्तिकस्यावसरः सन्दर्शितः । तदेवाह ।

स इति—॥ पुरुषे असमग्रः असंपूर्णो योगः समाधिर्यस्य तस्मिन् मे सर्वोऽस्त्रः मोक्षसमयः सोऽयं राधेयस्यासमग्रयोगत्वमसंपूर्णसाधनत्वं रथस्य वैगुण्यमधःपातः तेन विलक्षे व्रीडिते राधेये कर्णे फल्गुनस्यार्जुनस्येव ॥ १९ ॥

भगवतः समीहितसिद्धिः इष्टसिद्धिः समीचीना भवतु । उक्तमेव विशदयति ।

विरक्तीति—॥ विरक्तेः वैराग्यस्य कपटानां वञ्चनानां क्रमात् पारंपर्येण वृजिनकोटिभिः पापसमूहैः दुर्दमे अविनाश्ये परप्रणिधिः परमात्मविषयप्रणिधिः स एव कर्दमः तस्मिन् पतितुमेकतानः एकाग्र इत्यर्थः पुमान् त्वदस्त्रगणैः ताडनेन त्रुटितः विच्छिन्नः गर्वः यस्य स तथा स एव निर्वेदवान् भवप्रणिधिना कामविषय समाधिना सेवितं भोगवर्गं पुनर्भजतु ॥ २० ॥

अन्यदप्याह अपिचेति— ॥

हसितलपितक्रीडाचित्रैरनुष्भुदभिख्यया
युवतिकथयायोगी सव्यपसङ्गमुपैति कः ॥ २१ ॥

कामः—सखे सर्वथानूनमविचक्षणोविवेकः यत्सागरतरणगगनातिलङ्घनमरीचिकाचर्वणमहीतलमज्जनादिवदशक्यमेवसमाधिलाभमाधिव्याधिशालिनः पुरुषस्य बालिशइवसाधयितुमीहते

अपि च

पुरुषमजहद्भोगश्रद्धापुरस्कृतसंभ्रमं
विषयमदिरास्वादक्षीबंविमोचयितुं स्थितः ।
अमृतमिलितद्राक्षावल्लीफलद्रवसंपदा
ममरतरुणीबिंबोकानामवैतिनवैभवम् ॥ २२ ॥

दृश्यतां पुनरियमुभयतः पाशारज्जुः

---

मलयपवनेति—॥ मलयपवनः मलयानिलः ज्योत्स्ना चन्द्रातपः मल्ली मल्लिकाकुसुमानि मधुव्रतानां कूजितं झंकारः एतत्प्रभृतिकस्य विजयस्कन्धावारस्य विजयार्थसेनायाः प्रधानपताकया मुख्यध्वजभूतया हसितं हासः लपितव्य भाषणं क्रीडा विभ्रमाः एतान्येव चित्राणि तैरनुष्भुदभिख्यया अत्यजत्कान्त्या युवतिकथया क कोवा योगीसव्यपसंगं वैराग्यमुपैति ॥ २१ ॥

कथमविचक्षणत्वमित्यताह यदिति—॥ मरीचिकायाः मृगतृष्णायाः चर्वणं भक्षणं महीतले मज्जनं अवगाहनं आदिशब्देन ज्वालाग्रसनादिग्रहणं आधिमनःपीडा व्याधिः शरीरपीडा ।

अविचक्षणत्वे हेत्वन्तरमाह अपिचेति—॥

पुरुषमिति—॥ अजहत्भोगश्रद्धया अत्यजता भोगादरेण पुरस्कृतः संभ्रम उद्योगो यस्यतं युवतिरेव मदिरा तस्यास्वादः पानं तेन क्षीबंमत्तं पुरुषं मोचयितुं स्थितः कृतसंकल्पः विवेकः अमृतेन सुधया मिलितं मिश्रं यद्द्राक्षावल्लीफलं तद्द्रवस्य तद्रसस्य संपद इव संपदो येषां तेषां अमरतरुणी बिंबोकानां देवस्त्रीविभ्रमाणां वैभवं नावैति न जानाति ॥ २२ ॥

उभयतः पाशारज्जुरियं दृश्यतां । उक्तार्थमेव विशदयति—

विवेकावष्टम्भादुपजनितवैराग्यविभवो
यदिक्रुद्ध्येन्मह्यं भवतिसकथंक्रोधविजितः ।
अथत्यक्तक्रोधोयदि कथमपक्रामयतुमां
मुधाकामक्रोधप्रशमनकथामूढमनसां ॥ २३ ॥

ततः प्रविशतिविकृतवेषः क्रोधः-

क्रोधः--ससम्भ्रममुपसृत्य स्वस्तिसुहृदेस्वैरसंचारविजितविवेकविभवाय कुसुमधन्वने कः खल्वसौविवेकवशवर्ती कामक्रोधप्रशमनकथा वृथा जल्पमुपपादयति ( विकटंपरिक्रम्य, साट्टहासं )

अयमहमुद्भटप्रथनचारभटारभटी
नटपतिरुत्थितः कथमुदेतिविवेककथा ।
यदनुविधायिदैत्यभयसंज्वरितासुमुधा
सुरसुभटीपयोधरतटीषुपटीररसः ॥ २४ ॥

विवेकेति-॥ विवेकावष्टंभात् आश्रयेण उपजनितः वैराग्यस्य विभवोयस्य सतथा मह्यं यदि क्रुद्ध्येत् क्रोधविजितः क्रोधेनविजितः कथं न भवति क्रोधविजितो-भवत्येवे त्यर्थः । अथ शब्दः पश्चात्तरं द्योतयति त्यक्तक्रोधो यदि मां कथमपक्रामयतु मद्विषयकोपाभावे मां कथमतिक्रामेत् अतः मूढमनसां कामक्रोध प्रशमनकथा काम-क्रोधयोः प्रशमनप्रसंगः मुधा वृथा प्रसंगमात्रमेव नतु तत्संभव इति भावः ॥ २३ ॥

एवं प्रसक्तस्य क्रोधस्य प्रवेशमाह तत इति-॥ विकृतवेष इति रोषाधिक्य-द्योतनं ।
स्वैरसंचारेण विजितं विवेकवैभवं यस्य तस्मै विवेकस्य वशेवर्तत इति वशवर्ती कामक्रोधप्रशमनकथायाः वृथाजल्पं व्यर्थजल्पं उपपादयति असौ कः खलु कीदृश इत्यर्थः । विकटं विस्तृतं यथाभवति तथापरिक्रम्य दर्पेण अट्टहासं स्वातिशयं वर्णयति ।

अयमिति-॥ उद्भटे क्रूरे प्रथने युद्धे चारः संचारो यस्य भटस्य तस्यारभट्यां उद्धतनृत्ते नटपतिः नर्तकः अयमहमुत्थितः अत्र विवेककथा कथं समुदेत् मम सन्निधौ नोदेति इतिभावः यस्यमम अनुविधायिभ्यः अनुवर्तिभ्यः दैत्येभ्योयद्भयं तेन संज्वरितासु संजात तापासु सुरसुभटीनां देववीरपत्नीनां पयोधराणां कुचाना तटीषु प्रदेशेषु पटीररसः चंदनपंकः मुधाव्यर्थो भवति । मदनुवर्तिदैत्यनिमित्तभीतितप्तासु सुराङ्गनाकुचतटीषु निक्षिप्त चन्दनपङ्कः क्षणेन पांशुर्भवति नतु तापशान्तय इति भावः ॥ २४ ॥

कामः—(स्वागतं प्रियसुहृदे मत्प्रतिपक्षनियतमन्यवे मन्यवे महारथायसमागतोऽसि च स्वामिकार्यनिर्वहणसमयमनुचिन्त्य मत्साहाय्यकमनोरथेनवर्तयसि च स्ववशेवशिनोमहेश्वरादीन् अहोजितंमहाराजेन ।

किं च

मुधारम्भेऽडम्भे मयि च मदनेमुक्तकदने
मितोत्साहेमोहेवृजिनगहने व्याप्तदहने ।
अवज्ञालेशाद्यैरपिखलुभवानिन्धनशतैः
प्रदीप्तः प्रत्यञ्चं प्रणिधिमुपरोद्धुं प्रभवति ॥ २५ ॥

वसन्तः—नन्वसौपवनपावकसमागमः यद्युतकामस्यनवचसंगतं तदिहकिमिति सामग्रीसंभवेसाध्यसंपत्तावुदास्यते, अनुसरतिखलूत्साहमभिलषितसिद्धिः एतदेवचेदानीमात्मसंभवेन प्रियसुहृदापुनः पुनरभिहितमभिमतप्रतिलम्भनमनुपश्यामि ।

---

मत्प्रतिपक्षे नियतः स्थिरो मन्युः कोपो यस्य तस्मै मन्यवे क्रोधाय स्वागः शोभनं आगतमागमनं किमितिशेषः । मत्साहायिकमनोरथे मत्साहायिके साहायिकं साहायककृत्यं तस्मिन्मनोरथेन आशया वशिनः जितेन्द्रियानपि महेश्वरादीन् आदिशब्देन दुर्वासप्रभृतयो गृह्यन्ते स्ववशे त्वदधीनतायां वर्तयसि । महाराजेन महामोहेन । तत्कथमित्यपेक्षायां त्वमेवं विधः खल्वित्याह—।

**मुधारम्भेति** ॥ डम्भे मुधारम्भे व्यर्थारम्भे मदने मुक्तकदने त्यक्तपीडे मोहेमितोत्साहे अल्पोत्साहे वृजिनमेवगहनं वनं तस्मिन्व्याप्तदहने व्याप्तस्सर्वत्रप्रसृतः दहनः यस्मिन्तथासति पापाटव्यां दग्धायामपीत्यर्थः अवज्ञायाः अवमत्याः लेशः स्वल्पांशः तदाद्यैरपीन्धनशतैः प्रदीप्तः प्रज्वलितः प्रत्यञ्चमन्तर्मुखं प्रणिधिमुपरोद्धुं प्रभवति शक्नोति । अतो महाराजेन जितमितिभावः ॥ २५ ॥

कामक्रोधयोः सङ्गमः पवनपावकयोः समागम इवदुस्सह इतिभावः । सामग्रीभेदानां साधनभेदानां सम्भवे सति साध्यसम्पत्तौ किमित्युदास्यते उदासीनतया स्थीयते । उत्साह एवकार्यं इत्याह **अनुसरतीति**—।

एतद्वक्ष्यमाणं प्रियश्चासौ सुहृच्चतेनात्मसम्भवेन कामेन पुनः पुनरभिहितं अभिमतस्यप्रतिलम्भनं प्रापकं । तत्किमित्यत आह **यद्युतेति**—॥

यद्युत

रतिपतिवारयोषिदनुपालितरत्नलता
स्तबकविलोभनीयललितस्तनभारनताः ।
अमरमृगेक्षणाः परिचरन्तु विरक्तिधनं
मदनधनुर्गुणभ्रमरमन्थरतारदृशः ॥ २६ ॥

कामः—सखे कालोचितकार्यप्रतिसंधायकः खलु कालतत्त्वज्ञोऽसि तदेनमेव विबुधपतिनगरवेशनारीपुरस्सरं नासीरयोधमहमधिज्यधनुरनुव्रजामि त्वमपि परितः परिवृतदृष्टिः पार्ष्णिमभिरक्षन् सावधानमन्वायेथाः

सर्वे तेतथानुसर्पन्ति

वसन्तः—श्रूयतामयमिह महामोहसमरसैनिकधुरंधराभ्यां मन्मथप्रतिघाभ्यां मामकोव्याहारः अयमेवावसरस्संयमारम्भं सौप्तिकेन संस्थापयितुं यत्र समुत्थितं चतुरुदधिव्रक्षणं चान्द्रमसं महः अद्यखलु पुरतस्सरन्त्यमी मुग्धयुवतिमुखचन्द्राः किंकरस्य कुमुदिनीपतेरुदयवार्ताहराः कतिचन 'करणाङ्कुराः—

---

रतिपतिवारयोषिदिति—॥ रतिपतेः वारयोषिद्भिः वेश्याभिः अनुपालितायाः वर्धितायाः रत्नलतायाः रत्नमयालतायाः स्तबक इव लोभनीय ललितश्चयस्तनभारः तेन नताः अमरमृगेक्षणाः अप्सरसः मदनधनुषोगुणमौर्व्यः ते चते भ्रमराश्च तैव मन्थराः सुन्दराः तारादीर्घाश्चदृशः यासां ताः तथोक्ता विरक्तिः धनं यस्य तंपुरुषं परिचरन्तु ॥ २६ ॥

सखे क्रोध कालोचितस्य कार्यस्यप्रतिसन्धायकः स्मारकः कालतत्त्वज्ञः कालश्रेष्ठाः विबुधपतिनगरवेशनार्यः अप्सरसः पुरस्सरा अग्रेसरा यस्य तं नासीरयोधं सेनामुखसुभटमेनं वसन्तं अधिज्यमारोपितमौर्वीकं धनुर्यस्य स तथा पार्ष्णिं पृष्ठभागमभिरक्षन् अन्वीयेथाः अनुगच्छेत्यर्थः ।

महामोहस्य समरे धुरन्धराभ्यां धूर्वहाभ्यां मदनप्रतिघाभ्यां कामक्रोधाभ्यां व्याव्हारः उक्तिः । संयमस्य समाधेरारम्भं सौप्तिकेन संस्थापयितुं मारयितुमयमेवावसर यत्रावसरे चतुरुदधिव्रक्षणं चतुर्णां उदधीनां वर्धकं चान्द्रमसं महः ज्योत्स्ना समुत्थितं मुग्धानां युवतीनां मुखान्येव चन्द्राः तत्किंकरस्य उदयवार्तां आहरन्तीति उदयवार्ताहराः ।

अमी च

तिमिमुखपीतमुक्तसितसागर पूरनिभा
रजनिविलासहासललिताहरिणाङ्ककराः ।
शुभघनसारमिश्रहरिचन्दनपङ्करुचः
स्फुटमनुलेपयन्तिपुरुहूतदिशासुदृशं ॥ २७ ॥

अपि च

प्रथमस्य कान्तिमद्रेः
पश्यतमेतेनभाविता शशिना ।
मदजलकलङ्कभाजा
करटिनइवकर्णशंखेन ॥ २८ ॥

क्रोधः—सखेशम्बरासुरसूदन सूनृतवादी सोयं सुरभिः

अद्यहि

हरेरिह दिगन्तरे हसितदुग्धसिन्धुद्युतिः
श्रियंकुमुदवासिनीं प्रजनयत्यसौचन्द्रिका ।

---

तिमीति—॥ तिमीनां मत्स्यविशेषाणां मुखैः पीतः पुनर्मुक्तश्च यस्सित सागरः तस्य पूराणां प्रवाहाणां निभाः तुल्याः रजनि रात्र्याः विलासेन भासइवललिताः सुन्दराः शुभेन घनसारेण मिश्रः यश्च हरिचन्दनपङ्कः तस्य रुच इव रुचाः येषां ते तथा हरिणाङ्कस्य चन्द्रस्य कराः पुरुहूतदिशैवसुदृक् तामनुलेपयन्ति स्फुटम् ॥ २७ ॥

अन्यदाप्याह अपिचेति—॥

प्रथमस्येति— प्रथमस्य प्राचीनस्याद्रेः शशिना भावितां कान्तिं मदजलकलङ्कं मदजलेन जातं कलङ्कं मालिन्यमभजतीति तत्भाक् तेन कर्णशङ्खेन भाविता करटिनः गजस्य कान्तिमिव पश्यतं अवलोकयतं ॥ २८ ॥

सूनृतं सत्यहितं तद्वक्तुंशीलमस्यास्तीति सूनृतवादी । तदेव विशदयति—

हरेरिति—॥ इहहरेः इन्द्रस्य दिगन्तरे प्राच्यांदिशीत्यर्थः हसितस्यसंजात हास्य दुग्धसिन्धोः द्युतिरिव द्युतिः यस्यास्सासौ चन्द्रिका कुमुदवासिनीं कुमुदस्यान श्रियं प्रजनयति कुमुदशोभामुत्पादयति । मधुराणां तारकाणां नक्षत्राणां उन्मीलन-

मनागिव विवर्तितं मधुरतारकोन्मीलने
निशामय निशामुखे तिमिरकन्दलं कुन्तलम् ॥२९॥

कामः—संभावनीयः खल्वसौ बहुलतरतमःपटलपाटनपटीयस्तर किरणस्समाक्रान्तपशुपतिजटामण्डलस्स खलु तारकेश्वरः

अयं च

कुर्वन्कामपि कौमुदीं कुमुदिनीसंमोददानव्रती
सान्द्रानन्दरथाङ्गनामतरुणीसन्तापचिन्तामणिः ।
शृङ्गारागमदेशिकस्त्रिजगतामानन्दनाडिन्धमो
रुन्धे सर्वदिशां निरन्तरतमस्तन्द्रालुतां चन्द्रमाः ॥३०॥

अपि च

पदे विष्णोरेषा प्रभवमधिगम्य प्रसृमरा
स्फुरत्ताराफेनस्तबकपरिपाटीपरिगता ।
चरन्ती पूर्वाद्रेरमरतटिनीसंप्लवसखी
तमिस्राकालिन्दीं शबलयति चन्द्रांशुपटली ॥३१॥

---

मुद्गमो यस्मिंस्तस्मिन् निशामुखे सन्ध्यायां च मनागल्पं विवर्तितं कुन्तलमिव स्थितं तिमिरकन्दलं तमोबृन्दं निशामय पश्य ॥ २९ ॥

बहुलं सान्द्रं यत्तमःपटलं तमस्समूहस्य पाटने पटीयस्तरः अतिशयेन पटीयान् किरणो यस्य स तथा समाक्रान्तः पशुपतेर्जटामण्डलो येन स तथा तारकाणां नक्षत्राणां ईश्वरः ।

कुर्वन्निति—॥ कुमुदिनीनां संमोदस्य दाने व्रतं नियमो अस्यास्तीति व्रती सान्द्रातङ्कानां रथाङ्गनाम्नां तरुणीनां चक्रवाकस्त्रीणां सन्तापस्य चिन्तामणिः प्रदाता शृंगारागमस्य कामशास्त्रस्य देशिक उपदेष्टा त्रिजगतां आनन्दनाडिन्धमः आनन्द जनकनाडीधमनपरः आनन्दहेतुरिति यावत् चन्द्रमाः सर्वासां दिशां निरन्तरेण तमसां तन्द्रालुतां जडतां रुन्धे ॥ ३० ।

पदेति—॥ विष्णोः पदे वियति चरणे च प्रभवमुत्पत्तिमधिगम्य प्रसृमरा प्रथमानाः स्फुरन्त्यः तारा एव फेनस्तबक डिण्डीरमण्डलानि तेषां परिपाटीभिः प्रक्रियाभिः परिगता पूर्वाद्रेः पूर्वाचलस्य चरन्ती प्रसरन्ती अतएव अमरतटिनी संप्लवस्य सखा समाना चन्द्रांशुपटली तमिस्रा तमः स इव कालिन्दी तां शबलयति ॥ ३१ ॥

सखे क्रोध पश्य मे सहायसंपत्तिं

ताराकान्तः प्रियसुहृदयं चन्द्रिके यं वयस्या
बाणारम्भाद्बहुमतिपदं बान्धवो मे वसन्तः ।
त्वं च त्राता विपदुपगमे क्रोध दुर्वारवेगः
को वा मह्यं कुसुमधनुषे तिष्ठते जीवितार्थी ॥ ३२ ॥

क्रोधः—सखे अनुकूलो हि विधिः किं वा मनानुकूलयति

अपि च

विजेतुकामः कामं त्वां निष्काम इति का कथा ।
त्वन्निवर्तननिष्कामः सकामस्त्वय्यनुज्झिते ॥ ३३ ॥

कामः—अलमनेन विलम्बहेतुना व्याक्षेपेण उपक्रान्तसमाधिरस्माभिरुप सर्पणीयः पुरुषः ( सर्वे तथा कुर्वन्ति )

वसन्तः—पश्यतमेनं परमपुरुषचरणयुगलनिगलिताशयं परिहृत बहिर्विषयरागं प्रतिपक्षकारिणा विवेकेन प्रचोदितं प्रक्रान्त योगं पुरुषं—

---

सहायसम्पत्तिं सहायसम्पदं तामेवाह—

**ताराकान्त इति**—॥ ताराकान्तः चन्द्रः बाणानामारम्भात् सृष्टेः बहुमतिपदं बहुमतेः बहुमानस्य पदं स्थानं हे क्रोध दुर्वारः वारयितुमशक्यः वेगो यस्य स तथा त्वञ्च विपदुपगमे प्राप्तौ त्राता अतः कुसुमधनुषे मह्यं जीवितार्थी को वा तिष्ठते आत्मानं प्रकाशयंस्तिष्ठति नकोऽप्यग्रे तिष्ठतीत्यर्थः ॥ ३२ ॥

किं वा न नानुकूलयति सर्वमनुकूलमेव करोति । अन्यदप्याह अपिचेति—॥

**विजेतुकामः इति**—॥ हे काम त्वां विजेतुं कामः इच्छा यस्य स तथा त्वन्निवर्तने तव निवर्तने निष्काम आशारहितः त्वय्यनुज्झिते अत्यक्ते सकाम एव भवति ॥ ३३ ॥

व्याक्षेपः प्रसङ्गान्तरम् उपक्रान्तः आरब्धः समाधिर्येन स तथा ।

परमपुरुषस्य भगवतः चरणयुगले निगलितं मानसं यस्य तं परिहृतः बहिर्विषयेषु शब्दादिषु राग इच्छा यस्य तं प्रतिपक्षं युक्ततया ज्ञानं करोतीति तत्कारी तेन पुरुषं पश्यतं ।

अयं हि

भयस्थानग्रन्थान्परिपठति निद्राति च मुहुः
स्वमात्मानं पश्यत्युपचरति देहञ्च विधिना ।
निवृत्तिं दुःखाब्धेरभिलषति रज्यत्यपि सुखे
द्विधावृत्त्या दुःख्यन् पुरुष इह डोलायित इव ॥३४॥

कामः—सखे क्रोध अयं खलु संक्षोभणीयदशामनतिक्रान्त इति समर्थितं वसन्तेन दूरावधूतबाह्याभ्यन्तरवैरिभिरपि दुर्जेया अस्मत्सहायिनी अनादिसन्ततिसिद्धविचित्रप्ररोहा वैषयिकी वासना ।

भवत्वतिपतिष्यतो भवपयोधिमेकान्ततो
रतिस्सह मुमुक्षया ललितभाषितं योगिभिः ।
तदप्यवसरे क्वचित्सपदि पार्ष्णिमालम्बते
ममत्वशतवासनारचितवारबाणं मनः ॥ ३५ ॥

भयेति—॥ भयस्थानानि भयजनकान् ग्रन्थान् आध्यात्मिकादितापत्रयप्रतिपादनद्वारा भयहेतून् ग्रन्थान् परिपठति अनेन सत्वगुणोन्मेषो दर्शितः मुहुर्निद्राति च अनेन तमोगुणोन्मेषः स्वमात्मानं स्वस्वरूपं पश्यति देहं चोपचरति दुःखान्येव अब्धि तस्यां निवृत्तिमभिलषति सुखे रज्यति रागवान्भवति एवं द्विविधया वृत्त्या द्विप्रकारवर्त्तनेन दुःख्यन् पुरुषः डोलायित इव ॥ ३४ ॥

संक्षोभणयोग्यां दशां अनतिक्रान्तः पुरुष इति समर्थितं वसन्तेन दूरे अवधूत बाह्या आन्तराश्च वैरिणो यैस्तैः बाह्या मलयमरुतादयः आन्तराः कामक्रोधादयः पुरुषैरिति शेषः अनादिसन्तत्या सिद्धः विचित्रः प्ररोहो अङ्कुरो यस्यास्सा तथा वैषयिकी शब्दादिगोचरा वासना ।

तदेव उपपादयति तथाहीति—॥

भवत्विति—॥ भवपयोधिं संसारसमुद्रं अतिपतिष्यतः पुरुषस्य मुमुक्षया सह रतिरेकान्ततः भवतु मुमुक्षयासाकं भगवति प्रीतिर्निश्चयेनास्तु तदपि तथापि योगिभिः ललितया मृदुत्वेन भाषितं उक्तं ममत्वशते वासनयारचितं वारबाणं कञ्चुकं यस्य तत्तथा मनः क्वचिदवसरे पार्ष्णिमालम्बते आकर्षति पुरुषस्य मुमुक्षया सह भगवत्प्रीतौ वर्त्तमानायामपि चञ्चलं मनः ममकारशतवासनावृतं सत् तदनन्वेतीतिभावः ॥३५॥ ।

वसन्तः—इदमप्यपरमवधारणीयमरातिजनभयंकराभ्यां भवद्भ्यां सर्वसङ्गनिवृत्तस्यापि संमानागतिस्समाधिपरिपन्थिनी अतएवखलु अनुचिन्तितहिरण्यगर्भवचसस्संवर्त्तभरतविदुरादयो दुरितोच्छेदकारणं जनावमानमिच्छन्तउन्मत्तचर्यामभ्यनैषुः तदिदानीं यावदयमवमानापेतामादीत ततः पूर्वमेवसंमानभङ्गादिकं दूरीकृत्यप्रसभं चित्तप्रवेष्टव्यं क्रोधेन—

अथवा

शृणोतिकथयत्यसौ परिचिनोतिसंपृच्छते
समर्चयतिगायति स्पृशतिपश्यतिस्तौति च ।
इतीर्वनियतादरो मुरभिदंघ्रिसेवारसे
नभेत्तुमिहशक्यते स्थिरविवेकदुर्गस्थितः ॥ ३६ ॥

अपि च

वितथपरिग्रहत्यजननिर्वृतबुद्धिरसौ
तदितरसंग्रहेपि विधिनैवपरन्नियतः ।

---

अरातिजनस्य वैरिजनस्य भयंकराभ्यां संमाननायाः आगतिः प्राप्तिः अनुचिन्तितं अनुसंहितं हिरण्यगर्भस्य वचो यैस्ते तथा

संमानना परां हानिं योगर्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिंचविन्दति ॥
तस्माच्चरेत वै योगी सतां वर्त्म नदूषयन् ।
जना यथावमन्येरन् गच्छेरन् नैवसंगतिं ॥

इत्यादिकं हिरण्यगर्भवचः अभ्यनैषुः अभिनयन्तिस्म । अयंयावत् अवमानापेतां आददीत इदानीं तावदिदानीमेव ततः पूर्वमेव संमानभंगादिकं दूरीकृत्यप्रवेष्टव्यं

शृणोतीति—॥ असौ हरिगुणान्परेभ्यः शृणोति श्रोतृभ्यः कथयति स्वयं परिचिनोति ज्ञानिनः संपृच्छते हरिंसमर्चयति तद्गुणान् गायति तत्पादौ स्पृशति तद्वपुः पश्यति तमेव स्तौति च स्थिरे विवेकएव दुर्गे स्थितस्सन् मुरभिदः अंघ्र्योः सेवायाः रसे प्रीतौ इतिवदुक्तप्रकारेण नियतादरो भवति अतएव भेत्तुंन शक्यते ॥ ३६ ॥

वितथेति —॥ वितथाः व्यर्थाः परि गृह्यन्तइति परिग्रहाः गृहक्षेत्रादयः तेषां जनेननिर्वृता तुष्टा बुद्धिर्यस्य सतथा तेभ्य इतरे तदितरेषां परिग्रहाणां संग्रहेपि

उपनतमपिधर्म्यमुपभोगमपोह्यभज
त्यजगरवृत्तिमात्रमवधीरितभूतहृतिः ॥ ३७ ॥

कामः—( सविलज्जस्मितं ) सखेनूनमप्रगल्भद्दवसंयामसमयेसाध्वस-मवलम्बसे कालोपपन्नकार्यंनप्रतिसन्धत्से

ऋतुश्रेष्ठस्त्वन्नस्सुहृदमितभोगार्हविभवः
स्वयंकामस्सोहंसुरनरतिरश्चस्स्ववशयन् ।
अयंक्रोधः क्रूरप्रकृतिरसहन्नस्मदहितं
त्रिभिः कार्यंद्रौणिप्रभृतिविहितं सौप्तिकमिह॥३८॥

वसन्तः—सखे प्रतिसंहितकार्यएवाहमस्मि अवस्कन्दसमयमति क्रामतिपुरुषेकथमस्माभिरमोघवृत्तिभिर्भवितव्यमितितुविमृशामिपाटच्चर-लुण्ठितेषु भवनेषु जाग्रतोपि यामिकाः किमुपकरिष्यन्ति ।

---

विधिना शास्त्रेणैव परंनियतः नियतं निर्धूतः उपनतं प्राप्तं धर्म्यं धर्मादनपेतमु भोगं विषयानुभवं अपोह्य अवधीरिता निरस्ताभूतहृतिः भूतहिंसा येन सतथा अंज-गरवृत्तिमात्रं भजन्ति ॥ ३७ ॥

एवमस्य दुर्धर्षत्वात् स्वमनोषितं न सिद्ध्यतीतिलज्जा परेष्ववज्ञयास्मितं ताभ्यां सहितं यथाभवति तथा । साध्वसं भयं न प्रतिसंधत्से न स्मरसीत्यर्थः ॥

किं तत्कार्यमित्यत आह ।

ऋत्विति—॥ ऋतूनां श्रेष्ठः अमितानां भोगानामर्हो योग्यो विभवः संपत् यस्य तथा त्वं नः अस्माकं सुहृत् मित्रं सुरनरतिरश्चः स्ववशयन स्ववशान् स्वाधीनान् कुर्वन् अस्मदहितं पुरुषंमहन् अस्माभिस्त्रिभिः द्रौणिरश्वत्थामा तत्प्रभृतिभि-र्विहितं सौप्तिकं कार्यम् ॥ ३८ ॥

प्रतिसंहितं अनुस्मृतं कार्यं येन सतथा अवस्कन्दनं पीडनं तत्समयं पुरुषे अति-क्रामति । अमोघा सफला वृत्तिर्व्यापारो येषां तैः अस्माभिः कथं भवितव्यमिति तु विमृशामि । सौप्तिकसमयातिक्रमे अस्मद्व्यापारो व्यर्थस्स्यादिति विमृशामीति भावः । उक्तेऽर्थे दृष्टान्तमाह पाटच्चरेति—। पाटच्चरैः चौरैः लुण्ठितेषु सत्सु यामिकाः जाग्रतः अनिद्राणा अपि किमुपकरिष्यन्ति न किञ्चिदपीत्यर्थः ।

अयं हि

प्रचेतुमनघांवृत्तिमपचेतुमपक्रियां ।
भजतेविश्वकर्त्तारं भिषज्यन्तमिवातुरः ॥ ३९ ॥

क्रोधः—(ससंरम्भं) श्रोतव्यमेतत्सुरभिणासुहृदा च कामेनमामकं-मनीषितनिष्पादनकौशलं यद्युत

जमदग्निमुखान् परित्यजन्
परिगृह्णन्दशकन्धरादिकाम् ।
विनिपातितवानुपायतः
पुरुषानद्भुतपौरुषानहम् ॥ ४० ॥

वसन्तः—प्रख्यातमिदमित्यम्भवतश्चातुर्यं तथाप्यत्यन्तवीतरागेकइव तवावकाशः ।

---

कुत इत्यत आह अयंहि—इति ।

प्रचेतुमिति—॥ अनघांनिर्दोषां वृत्तिं प्रचेतुं संपादयितुं अपक्रियां विपरीत वृत्तिं अपचेतुं त्यक्तुं भिषज्यन्तमातुर इव विश्वकर्तारं भजते निवृत्तिधर्म सिद्ध्यर्थं प्रवृत्तिधर्मसिद्ध्यर्थञ्च भगवन्तमेवाश्रयतीति भावः ॥ ३९ ॥

ससंरंभं सोत्साहं सुहृदेति पदं उभयत्रान्वेति । मनीषितस्य निष्पादने उत्पादने कौशलं सामर्थ्यं तत्किमित्यत आह ।

जमदग्नेति—॥ जमदग्निमुखान् जमदग्निप्रभृतीन परित्यजन जमदग्निरपि भ्रान्तमपि हैहयं नशशाप एवमन्येपिकेचित्क्षमावन्तः दशकन्धरादिकान रावणप्रभृतीन गृह्णन रावणादयोहिति ।

छिद्याभज्येयमप्येवं न नमेयं कथंचनेति ।

क्रोधवशाः अद्भुतं पौरुषं पराक्रमो येषां तान पुरुषान् उपायतोविनिपातित वान् ॥ ४० ॥

इत्थं एवंभूतं भवतश्चातुर्यं प्रख्यातं वीतरागे पुरुषे तवावकाशः कइव कोदृश इत्यर्थः ।

क्रोधः—( हाहाकारमाम्रेडयन् ) अस्त्येवसंमतोऽत्राप्यवकाशः यथा

पुंसस्त्यक्तपरिग्रहस्यविषयग्राहोऽभिझतस्याप्यहं
कन्थाविष्टरकुण्डिकादिहरणप्रच्छादनाद्याश्रयः ।
अन्तःक्षोभमलीकजल्पमसदारोपस्पृहांपैशुनं
संमोहादि च संमुखय्यसहसादास्येसमाधिक्षयम् ॥४१॥

किं च महेश्वरप्रमुखमहापुरुषचित्तविक्षोभकस्यसमाहितहृदयसमारम्भविघटने किमत्राश्चर्यं यतः

बिभर्तु विबुधेश्वरं क्षिपतु दानवानीकिनीं
भिनत्तुकुलपर्वतान् वनशतानि मृद्नातुवा ।
अयत्नविधुतक्षितिस्तबकशेखरालङ्कृतः
किमद्भुतपदं भवत्ययममीभिरैरावणः ॥ ४२ ॥

---

आम्रेडयन् पुनःपुनर्वदन् अत्रापि संमतोऽवकाशोऽस्त्येव ।

कथमित्यत आह

पुंसइति— ॥त्यक्ताः परिग्रहाः येन तस्य विषयाः शब्दादयः तु एव ग्राह्याः तैरुज्झितस्यापि पुंसः कन्था जीर्णवस्त्रं विष्टरमासनं कुण्डिका कमण्डलुः आदिशब्देन दण्डादीनां ग्रहणं एतेषां ग्रहणमपहारः प्रच्छादनं तिरोधानं आदिशब्देन स्थानान्तरनिवेशः एतान्याश्रयो यस्य सतथा । अन्तः मनसि क्षोभं कालुष्यं अलीकजल्पमसत्यवचनं असतो सत्यस्यार्थस्यारोपे स्पृहां पैशुनं कर्णजापं संमोहादि कृत्यमोदां आदिशब्देन महदतिक्रमो गृह्यते संमुखय्य प्रकाश्य समाधिक्षयं दास्ये ॥ ४१ ॥

महेश्वरप्रमुखाः ये महापुरुषाः तेषां हृदयविक्षोभकस्य समाहितहृदयानां संरम्भस्य विघटने भेदने आश्चर्याभावमेव दृष्टान्तेनाह—

बिभर्त्विति—॥ विबुधेश्वरं देवेन्द्रं । बिभर्तु दधतु दानवानीकिनीं दानवानां अनीकिनीं सेनां क्षिपतु हन्त्वित्यर्थः कुलपर्वतान् भिनत्तु दलयतु वनानां शतानि मृद्नातु ध्वंसयतु अयत्नं यथा भवति तथा विधूना क्षितिरेव स्तबकशेखरं तेनालंकृतः ऐरावणः ऐरावतः अमीभिः विबुधेश्वरभरणादिभिः अद्भुतपदं अद्भुतस्थानं भवति किं न भवत्येव तथा ममापि समाहितहृदयसंरंभविघट्टनमाश्चर्यंन भवतीत्यर्थः ॥ ४२ ॥

कथमवितथत्वमित्यत्राह—

कामः—सखे पुष्पाकर क्रोधोद्दीरितमप्यवितथमिदमवधारणीयं ।

निद्रामुग्धनिमीलितेष्वसुलभन्निर्धूतनिम्नोन्नतं
निद्राणाखिलवर्णभेदनियमं विष्वक्प्रवृत्तोदयं
कः क्रोधोद्भवमुत्सहेततरितुं कल्पान्तकादम्बिनी
कालोद्वेलकलिन्दशैलतनयाकल्लोलकालन्तमः ॥४३॥

अपि च वाल्मीकिप्रभृतिभिर्महर्षिभिरप्युद्घोषितंमामकं महिमानंमावमंस्थाः अहह

विराधकरिकेसरी विशिखवह्निदग्धार्णवः
प्रभूतखरदूषणप्रभृतिनैर्ऋतव्यूहजित् ।
विलूनदशकन्धरोमृदितकुम्भकर्णस्तदा
मदस्त्रजनिते स्थितः क्वचनलाघवेराघवः ॥४४॥

---

निद्रेति—॥ निद्रासुप्तिः मुग्धः मोहः ताभ्यां निमीलितेषु पुरुषेषु असुलभमनेन प्रसिद्धतमसोवैलक्षण्यमुक्तं निर्धूते निम्नोन्नते यस्मिन् तत्तथा निम्नोन्नतशब्दाभ्यां महती वस्तुनी गृह्येते निद्राणाः अखिलवर्णभेदनियमाः वर्णाः शुक्लादयः ब्राह्मणादयश्च यस्मिन् तत्तथा विष्वक् सर्वतः प्रवृत्तः उदयउत्भवो यस्य तत्तथा कल्पान्ते प्रलयेयाकादम्बिनी मेघपङ्क्तिः तस्याःकाले समये उद्वेलायाः कलिन्दशैलतनयाया यमुनायाः कल्लोल इव कालं नीलं क्रोधोत्भवं तमः कउत्सहेत कोपि नोत्सहेतेत्यर्थः ॥ ४३ ॥

स्ववैभवातिशयमाह अपिचेति—।

वाल्मीकिप्रभृतिभिः इत्यत्र प्रभृतिशब्देन व्यासादयो गृह्यन्ते । स्वातिशयस्मरणजनिताश्चर्या (अहहेति—)।

विराधेति—॥ विराध एव करी यस्य केसरी सिंहः विशिखवह्निना बाणाग्निना दग्धाः अर्णवाः प्रभूताः अधिका खरदूषणौ प्रभृतयो ये नैर्ऋताः राक्षसाः तेषां व्यूहं जयतीति व्यूहजित विलूनः त्रुटितः दशकन्धरोयेन स तथा मृदितः मथितःकुम्भकर्णो येन स तथा राघवः मदस्त्रजनिते क्वचनलाघवे स्थितः अभूत् अन्ये किं पुनरिति भावः ॥ ४४ ॥

कुत एव मुच्यत इत्यत आह त्वयेति—॥

वसन्तः—काम साधुकृतं भवता

कामः—वयस्य आत्मानं बहुमन्येथाःत्वदायत्त वृत्तिनाखलुमयासर्वमेतदाचरितं ।

वसन्तः—हन्तमकरध्वज महावीराणामपि भवतिवैक्लव्यं भवत्प्रभावेन यदुन्मत्तदशामप्यधिगच्छन्ति—

अथवा

रागोपलिप्तदृष्टिः प्रलपति मुह्यति विघूर्णतिस्खलति ।
युवतिमदिरामदान्धोयुक्तायुक्तञ्नजानाति ॥ ४५ ॥

(विचिन्त्य)यद्यपिदुर्जयौयुवां कामक्रोधौतथापिकिञ्चिन्मनसिमेपरिवर्तते सहायभूयस्त्वं सर्वेष्वपिकार्येष्वयत्नसिद्धिकारणं, (पदशब्दंसूचयन्)

धर्मध्वंसधुरन्धरश्शमदमप्रारम्भसर्वंकषः
प्रज्ञावारिधिघस्मरः प्रणिदधत्प्रत्यूहमृत्युञ्जयः ।
मुक्तिप्रार्थनमोचनायमहतामोहेनसंप्रेषित
स्तृष्णावारविलासिनीसहचरोलोभः किलोदीयते॥४६॥

---

टत्ता प्रवृत्तिर्जीवनं यस्य तेन मया । वैक्लव्यं जाड्यं भवति । यदुन्मत्तदशामप्यधिगच्छति । पक्षान्तरमाह अथवेति—

रागोपलिप्तेति—॥ रागेण कामेणोपलिप्ता दृष्टिर्ज्ञानं यस्य स तथा प्रलपति जल्पति मुह्यति मूढोभवति विघूर्णति भ्रमति स्खलति प्रमाद्यति युवतिरेवमदिर मदः तेनान्धः युक्तायुक्तं युक्तमयुक्तं च न जानाति ॥ ४५ ॥

युवां दुर्जयौ यद्यपि तथापि किंचिन्मे मनः संवर्तते तदेवाह सहायेति—॥ महायानां भूयस्त्वं कार्येष्वयत्नेन सिद्धिकारणं अस्मिन्नवसरे कस्यचिदागच्छतः पदशब्द तमयं पदशब्द इति तयोस्सूचयन्नाह ।

धर्मेति—॥ धर्मध्वंसेधुरन्धरः शमदमयोः प्रारम्भस्य सर्वंकषः कात्स्न्यैः वनाशकः प्रज्ञेव वारिधिः प्रज्ञावारिधिः तस्य घस्मरः भक्षकः प्रणिदधतां योगं कुर्वतां प्रत्यूहस्य विघ्नस्य यो मृत्युः तं जयतीति मृत्युंजयः प्रत्यूहवर्धक इत्यर्थः । मुक्तेः प्रार्थनस्य मोचनाय महतामोहेन संप्रेषितः तृष्णैव वारविलासिनी वेश्या तया सहचरतीति तत्सहचरः लोभः उदीयते उदेति किल ॥ ४६ ॥

कामक्रोधौ सहर्षमवलोकयतः

वसन्तः—विश्वहृल्लोभनो लोभइहाकार्यः ।

कामक्रोधौ—सुष्ठुचिन्तितं सुहृदा वसन्तेन ।

कामः—छोटिकां ददाति ।

क्रोधः—सोद्घोषमनुमोदते ।

ततः प्रविशति लोभस्तृष्णा च ।

लोभः—

महामोहस्याज्ञां शिरसिनिदधानस्त्रजमिमा
महन्तृष्णाजानिस्त्वरितमिहलोभस्समुदितः ।
प्रदिष्टैस्तत्तादृक्प्रथिमविकटैर्हाटकमयै
रखण्डैर्ब्रह्माण्डैर्ममकइवतृप्तिं घटयिता ॥ ४७ ॥

तृष्णांपरिष्वज्य प्रिये

अशेषसुरनारीणामाभिरूप्यसमुच्चयैः ।
अजह्यौवनान्तृष्णेविदधेत्वांविधिस्स्वयम् ॥४८॥

तदिदंनिदर्शयामि—

कनककलधौतशैल
प्रभृतिभिरपिहन्तपूरणेक्षिप्तैः ।

---

विश्वेषां हृल्लोभनः हृदय लोभकारी आकार्यः आहूतव्यः ।

छोटिक अङ्गुष्ठमध्यमाङ्गुलीभ्यां उत्भूतं शब्दं ददाति । उद्घोषः उच्चैः शब्दः तेन सहितं यथाभवति तथा अनुमोदते स्वानुभवं वर्णयति ।

महामोहस्येति—॥ इमां महामोहस्याज्ञां स्रजं शिरसि निदधानः तृष्णाजाया यस्य स तृष्णाजानिः लोभोऽहं समुदितः । तत्तादृक्प्रथिमभिः विकटैश्च हाटकमयै स्वर्णमयैः अखण्डैः शेषैः ब्रह्माण्डैः प्रतिष्टैः दत्तैः ममतृप्तिं क इव घटयिता ॥ ४७ ॥

अशेषेति—॥ अशेषाणां सुरनारीणां आभिरूप्यस्य सौन्दर्यस्य समुच्चयैः पुञ्जैः ॥ ४८ ॥

पूर्वं श्लोके यदुक्तं तदिदं निदर्शयामि ।

कनकेति—॥ कनककलधौतशैलौ सुमेरुकैलासौ तत्प्रभृतिभिः पूरणैः पूर्त्तिं

तृष्णे भजतिसमृद्धिं
भूयोभूयस्तवोदरेकार्श्यम् ॥ ४९ ॥

तृष्णा—अ०अउत्तुस्नवल्लहाणमहरमणिज्जत्तणं सव्वरमणिममब्भ हियंतिकिं अच्चरियं तहवि देवासुरघरगअसअलरअणावहारेणमहसोभ जोग्गाइंहारकेऊल मेहलणूउराइं तुग करणिज्जाइं ।

लोभः--प्रिये ईषत्करमिदमभ्यर्थयसेनिर्जिताः खलुमयादेवासुरकिंनरकिम्पुरुषविद्याधरमुनिमनुष्यतिर्यञ्चः यथापरस्परमेवव्यतिहन्यन्ते यथा वातुषकणमपिमेरुं मन्यन्तेतत्रतावद्धनदविरुदविख्यातस्यत्र्यम्बकसखस्यम त्कृतामवस्थां आकर्णय

लब्धन्नमुञ्चति विलक्षमतिर्नभुङ्क्ते
धत्तेपुनः पुनरसौ महतीन्धनायां ।
निद्रारसन्नलभते महतांनिधीनां
रक्षापिशाच इवसंप्रतिराजराजः ॥ ५० ॥

---

आर्यपुत्रतववल्लभायाममरमणीयत्वंसर्वरमणीसमभ्यधिकमितिकिं आश्चर्यं तथापिदेवासुरगृहगतसकलरत्नापहारेणममसौभाग्ययोग्यानिहारकेयूरमेखलनूपुराणित्वयाकरणीयानि

---

हेतुभः क्षिप्तैरपि तवोदरे कार्श्यं भूयोभूयस्समृद्धिं भजते उक्तं उदरकार्श्यमन्येषामप्यभिरूपाणामप्युपलक्षकं ॥ ४९ ॥

ईषत्करमल्पयत्नसाध्यं । ईषत्करत्वं कथमित्यत आह **निर्जिता इति**— देवादीनां निर्जितत्वात् तत्तद्गृहगतरत्नानां सुलभत्वात् तैर्हाराटिकरणं ईषत्करमिति भावः । कथं ते निर्जिता इत्यपेक्षायामाह **यथेति**— यथाते परस्परमेव व्याहन्यन्त तथा निर्जिता इत्यर्थः । प्रकारान्तरं चाह यथा तुषकणमपि मेरुं मन्यन्तइति तुषस्य कणमल्पांशं । धनद इति बिरुदेन विख्यातस्य केयमवस्थेत्यत आह ।

**लब्धमिति**—॥ लब्धं वस्तु न मुञ्चति विलक्षाव्रीलावती मतिर्यस्य स तथा करगतं वस्त्वयं भुक्तवानिति सर्वे परिहसन्तीति व्रीला पुनःपुनर्महतीं धनायां वित्ताशां धत्ते निद्रासुखं न लभते अतस्सम्प्रति राजराजः यक्षेशः महतां निधीनां रक्षापिशाच इववर्तते ॥ ५० ॥

तृष्णा—अ० अउत्तउए अथ्थपुरुसथसद्धासंठाविअहिअएतेल्लोक्कविवेअपरिगहिअस्सपुरुसस्सका उणदसा

लोभः—प्रिये विमर्शनीयमेतत् तस्यपुनस्समाधिकौतुकंप्रशमयितुं महाराजेनमहामोहेनसमादिष्टौकामक्रोधौमदागमनकांक्षिणौतिष्ठतः इमौ तावदुपसर्पावः (उपसृत्य) लोभनामाहमभिवादयेज्यायांसौकामक्रोधौ

तृष्णा—सोह्णाएसा पणमइगुरुअणा (इति उभौ प्रणमतः)।

कामक्रोधौ—दीर्घायुषौ भूयास्तां ।

वसन्तः—अहो निदाघपवनदवाग्नीनामिवभवतांसमागमः किंचसेत्स्यतिराज्ञो महामोहस्य माभूद्विवेकतोभवत्यवीनांरतिजिघांसातृष्णानां माङ्गल्यभूषणवैकल्यं (सर्वेपरस्परमाश्लिष्यन्ति)।

कामः—अपिस्वागतमस्मदुपजीव्यमर्थपुरुषार्थमभिरक्षतेलोभाय ।

लोभः—अथकिं अनुग्रहपदं खल्वहंभवतां ।

क्रोधः—अपिकश्चममोघ वृत्तिरपवर्गादन्तर्वैदेशिकस्त्वमवधत्से स्वामिकृत्यं ।

लोभः—युष्मदवष्टम्भेन सर्वत्रामोघवृत्तिरस्मिपश्यसुयोधनादिवन्मत्परिगृहीतस्यनोकस्येदानीमद्वितीयां द्वितीयपुरुषार्थनिष्ठां ।

**क्षुद्रक्षोणिरजः कणास्थिरतृषः क्षुभ्यन्तिपृथ्वीभृत**
**स्तप्येतस्त्रपदायकः कचिदिति अस्यन्त्यमर्त्येश्वराः ।**

---

आर्यपुत्र त्वया अर्थपुरुषार्थश्रद्धासंस्थापितहृदये त्रैलोक्येविवेकपरिगृहीतस्य पुरुषस्य कापुनर्दशा

स्नुषैषा प्रणमतिगुरुजनं ।

---

अर्थरूपे पुरुषार्थे या श्रद्धा तस्यां संस्थापितं हृदयं यस्य तस्मिन् ।

एतत् त्वदुक्तं विमर्शनीयं चिन्तनीयं । तस्य पुरुषस्य समाधौ कौतुके प्रशमयितमदागमने प्रतिष्ठा ययो स्तौ । ज्यायांसौ कामक्रोधलोभानां क्रमेण ।

स्नुषैषाप्रणमति गुरुजनं उभयतः कामसमीपे क्रोधसमीपे च ।

दीर्घमायुर्ययोस्तौ दीर्घायुषौ ।

निदाघः ग्रीष्मः पवनः वातः दवाग्निः वनवह्निः तेषामिव त्रयाणां भवतां समवायः । महामोहस्य राज्ञः किंचसेत्स्यति सर्वं सेत्स्यत्यवेत्यर्थः । मङ्गल्यानां मङ्गलानां भूषणानां हानिर्माभूत् । कामस्यरतिः क्रोधस्य जिघांसालोभस्य तृष्णेति विवेकः ।

भिक्षाकेष्वपिकेषुचित्क्वचिदुपक्षिप्तेष्वधिक्षेपतः
पक्षेदुर्मतिभृत्ययोरिहजगत्तिष्ठत्यसूयेर्ष्ययोः ॥ ५१ ॥

अपि च

अटन्तिहरितोदशस्थपुटयन्तिविश्वम्भरां
पठन्तिधनिनाञ्चटून्परपरिच्छदंबिभ्रति ।
तरन्तिजलधिंप्लवैस्समरमारभन्तेमुधा
दुरन्तधनदोहलग्रहिलचेतसोदेहिनः ॥ ५२ ॥

वसन्तः—आयुष्मन्महामोहामात्यधुरीण पुनस्तृष्णासहायस्यतेपूर्वा परपुरुषार्थसाधकेस्वयञ्चसर्ववित्तसाक्षिकंस्वादुतयोपलभ्यमाने सर्वराजन्य सेवनीयचरमोपवेदसिद्धेप्रत्यक्षपुरुषार्थेकः प्रत्यूहः

---

अस्मदुपजीव्यं अस्माकमुपजीव्यं ।

अथ किमित्यंगीकारे । अत्र हेतुमाह अनुग्रहेति—।

अपवर्गोदन्तस्य मोक्षवृत्तान्तस्य वैदेशिक अनभिज्ञ इत्यर्थः। एवं भूतस्त्वं स्वामिन महामोहस्य कृत्यं कथमवधत्से ।

युष्माकमवष्टंभेन अवलंभनेन सर्वत्रामोघवृत्तिः सफलयत्नोऽस्मि ।

दुर्योधनादिवत् दुर्योधनादीनामिव—तामेव विशदयन्ति ।

क्षुद्रेति—॥ पृथ्वीभूतः राजानः क्षुद्रे क्षोणीरजः कणे भूरेणुलेशे स्पृग्तृषः गाढस्पृहास्सन्तः क्षुभ्यन्ति क्षुब्धाभवन्ति अमर्त्येश्वराः ब्रह्मादयः स्वपदाय स्वाधिकाराय क्वचित्प्रद्वेशे कःकोवा तप्येत तपःकुर्यादितित्रस्यन्ति बिभ्यन्ति । केषुभिक्षाकेषु याचकेष्वपि केषुचित् क्वचित् प्रयोजने उपक्षिप्तेषु समीपमानीतेषु सत्सु अधिक्षेपत अन्येषां निन्दनात् दुर्मतिभृत्ययोः असूययेर्ष्ययोः पक्षे जगत्तिष्ठति ॥ ५१ ॥

अन्यदप्याह

अटन्तीति—॥ दशहरितः दिशः अटन्ति सञ्चरन्ति विश्वम्भराः भूमिंस्थ पुटयन्ति धनलिप्सया खननेन विपुलां कुर्वन्ति धनिनां पुरश्चाटून चाटूनि पठन्ति परेषां परिच्छदं उपकरणं बिभ्रति वहन्ति प्लवैः जलधिं तरन्ति समरं संग्राममारभन्ते दुरन्तेन धनदोहलेन धनाभिलाषेण ग्रहिलं ग्रहणशीलं चेतो येषां ते तथा देहिनः एवमेवं कुर्वन्ति ॥ ५२ ॥

अयञ्च

कालप्राप्ताद्धर्मतोधर्मतोवा
कन्नीकार्यः कामतन्त्रप्रधानैः ।
लाभेगुप्तावप्रदानव्रतेचा
त्वय्यायत्तोह्यर्थनामापुमर्थः ॥ ५३ ॥

शृण्वन्तुसर्वेभवन्तोमामकमनुयोगं विवेककवचदुर्भेदविज्ञानोविपश्चित्तमः कथङ्कारमवस्कन्दनीयः ।

कामः—सखे एवमहमेतदध्यवस्यामि अहन्तावदग्रेसरोगच्छामि भवद्भिस्तुपक्षद्वयं पार्ष्णिं च परिपालयद्भिरन्तरान्तरानिवेश्यतृष्णामनुप्लवैर्भवितव्यं तदनेनदुर्भेदेन व्यूहेनविवेकस्य स्वकुलविध्वंसनमनोरथप्रत्यूहीभविष्यामः इति (तथा व्यूह्यसर्वेपञ्चषाणिपदानिपरिक्रामन्ति)

कामः—(सरभसपुंखितशरं पौष्पं धनुरान्दोलयन) पश्यततावदिदानीमधिज्यधन्वनोमे ललितघोराणामिषूणां लक्ष्यलाभं ।

---

महामोहामात्यानां धुरीणाः अग्रेसराः पूर्वापरयोः धर्मकामयोः पुरुषार्थयोः बाधके सर्वेषां चित्तं साच्चिर्यस्मिन्कर्मणि तत्तथा स्वादुतया भोग्यतयोपलभ्यमाने ज्ञायमाने सर्वैः राजन्यैः सेवनीयेन चरमेण उपवेदेन अर्थशास्त्रेण सिद्धे ।

आयुर्वेदो धनुर्वेदो वेदोगान्धर्व एव च ।
अर्थशास्त्रं परं तस्मात् विद्याह्यष्टादशस्मृताः ॥ इत्यत्र

अर्थशास्त्रस्य चरमोपवेदत्व ज्ञायते । प्रत्यक्षपुरुषार्थे अर्थरूपे कः प्रत्यूहः विघ्नः नकोपीत्यर्थः ।

कालेति—॥ कामतन्त्रं कामशास्त्रं प्रधानं येषां तैः काले तत्तत्समये प्राप्ता-धर्मत अधर्मतो वा कक्षीकार्यः अङ्गीकार्यः अर्थनामा पुमर्थः लाभे गुप्तौ अप्रदानरूपे-व्रतेच त्वय्यायत्तः ॥ ५३ ॥

अनुयोगं प्रश्नं । तमेवाह विवेकेति—।

विवेक एव कवचः तेन दुर्भेदं विज्ञानं यस्य स तथा विपश्चित्तमः पुरुषः कथं-कारमवस्कन्दनीयः पीड्यः ।

कामः स्वमतमाह सखेति—। पक्षद्वयं पार्ष्णिद्वयं पृष्ठभागं च पालयद्भिः

प्रणिधानविशेषभावितात्मा
करणग्रामनिरोधनिष्प्रकम्पः ।
निभृतश्वसनोनिवृत्तिधर्मा
पुरुषस्त्यक्तपरिग्रहोयमास्ते ॥ ५४ ॥

वसन्तः—सूक्ष्ममवलोक्य हन्तावहितैरस्माभिर्भवितव्यं अत्र हि

वितमसिपदे विधास्य
न्मायाजलधेस्समुद्धृतं पुरुषं ।
विमृशतिकिमपिरहस्यं
सुमतिसहायो विवेकएकान्ते ॥ ५५ ॥

---

तृष्णामन्तरा मध्ये निवेश्य अनुप्रवैः भवितव्ये दुर्भेदव्यूहेन स्वकुलध्वंसिनो मनोरथस्य प्रत्यूही भविष्यामः ।

पञ्चवापञ्चा पञ्चबाणि ।

सरभसं सवेगं यथा भवति तथा पुंखिताः ज्यामारोपिताः शराः यस्मिन् सत् अधिज्यमारोपितमौर्वीकं धनुर्यस्य सोऽधिज्यधन्वा तस्य ललितानां घोराणां । पुष्पत्वाल्ललितत्वं बाधकत्वेन घोरत्वं लक्षस्य शरव्यस्यलाभं तल्लक्ष्यमित्यत आह—

प्रणिधानेति—॥ प्रणिधानविशेषेण योगविशेषेण भावितः ध्यातः आत्मा परमात्मा यस्य स तथा करणानां मिन्द्रियाणांग्रामस्य समूहस्य निरोधेन प्रत्याहारेण निष्प्रकम्पः निभृतः नियतः श्वसनः प्राणानिलो येन स तथा निवृत्तिधर्मः निवृत्तिरेव धर्मो यस्य स तथा त्यक्ताः परिग्रहाः येन स तथा अयं पुरुषः आस्ते ॥ ५४ ॥

अवहितैः सावधानैः । कुत इत्यत आध अत्रहीति—॥

वितमसीति—॥ मायाप्रकृतिः सैवजलधिः तस्मात्समुत्थितं पुरुषं वितमसि रजस्तमोभ्यांमस्पृष्टे पदे स्थाने । तमसस्तु पारे तमसः परस्तात् क्षयंतमस्य रजसः पराके इत्यादिश्रुतिभ्यो रजस्तमसोः पारे यत्स्थितिपदं तस्मिन्पदे वैकुण्ठाख्ये विधास्यन् स्थापयिष्यन् विवेकः एकान्ते सुमतिसहायस्सन् किमपि रहस्यं विमृशति ॥ ५५ ॥

रोषाधिक्येन भ्रूभङ्गः तेन सहितं यथाभवति तथा । विवेकेन किंचित्प्रयोजन-मितिभावः । कथंनातिवर्त्तत इत्यत्राह=।

क्रोधः-( सभ्रुकुटीभङ्गं ) भोवसन्त विमृश्यतांकिमपिदुरात्मनाविवेकेन पुरुषस्तावत्पुरस्कृतमन्मथानामस्माकमभिमतवार्तावर्तते यतः

अनघसमाधिसम्पदुदरंभरिरात्मभवः
प्रबलमहोर्मिजाल भरितेदुरिताम्बुनिधौ ।
जडमतिजन्तुजातमुपजातविहारमसौ
सुखबडिशावकृष्टमुपदंशदशान्नयति ॥ ५६ ॥

पश्यतुभवानेतस्यपुरुषस्यभावनाविशेषं

स्वसंबोधस्सौधश्शुभगुणगणोमण्डनविधि
स्समाधिस्सम्भोगोरहसिजपशीलोरतिकथा ।
सुषुप्तेलोकेप्यश्रुतिपरिषदन्तः पुरगतो
मुनिः शान्तिव्याजान्मुखरयतिश्रृङ्गारनिगमं॥५७॥

वसन्तः-(स्वगतं) आशामात्रकृतेयमन्यथाकल्पना (प्रकाशं) सखे प्रबलप्रतिपक्षसन्निधौ किमनेनप्रगल्भभाषितेन

---

अनघेति-॥ अनघया समाधिसम्पदा उदरम्भरिः उदरपोषकः आत्मभवश्च मदनः प्रबलाः प्रकृष्टबलाश्च महान्तः ऊर्मयः अशनाया पिपासे शोकमोहौ चेति षट् त एव ऊर्मयः मरीचयः तेषां जालैः भरिते पूर्णे दुरितान्येवाम्बुनिधिः तस्मिन्सुखमेव बडिशं तेनापकृष्टं तेषां जातं समूहं उपजातो विहारो यस्मिन्कर्मणितद्यथा भवति तथा उपदंशस्यव्यंजनस्य दशां नयति कामस्य समाधिसंपदशने जडमतिजन्तुजातं उपदंशः ॥ ५६ ॥

भावना विशेषः समाधिविशेषः । विशेषशब्देन वैलक्षण्यं द्योत्यते । तदेवाह=

स्वेति-॥ स्वस्य संबोधः ज्ञानमेवसौधं शुभानां गुणानां शमदमादीनां गण एवमण्डनविधिः अलंकारं विधीयत इति विधिः समाधिरेव संभोगः सुखानुभवः रहसि जपशीलो जपस्स्वभाव एव रतिकथा रतिविषयः प्रसङ्गः अथालोके सुषुप्ते सति स्वस्वरूप परस्वरूपाद्यनभिज्ञेसति अत्र ।

यानिशासर्वभूतानां तस्यांजागर्ति संयमी त्येतदनुसन्धेयं । श्रुतिपरिषदेव अन्तःपुरं तद्गतः मुनिर्योगी शान्तिव्याजात् शृङ्गारनिगमं शृङ्गारशास्त्र मुखरयतिःपठति ॥ ५७ ॥

लोभः—सखेवसन्तप्रियातावन्ममैषाप्रतिपक्षप्रतिक्षेपभीता प्रत्याश्वासयितव्या (तृष्णामवलोक्य) सुमुखितृष्णेमहावीरव्यूहमध्यगता महत्यपिप्रतिपक्षेमाभैषीः ।

तृष्णा—सअलसुरासुरमहिअमाहप्पेसु तुह्मेसुजीवंतेसुणिच्चंणिब्भअम्हि

कामः—(सान्तस्त्रासं) परिवृत्यावलोक्यपश्चात्पदानिप्रतिक्षिप्यन्ताव दस्माभिः

अद्यहि

अनिद्राणप्रज्ञासहजबलधीराद्भुतगति
स्तितिक्षासन्तोषस्थिरतरतनुत्राणघटितः ।
प्रयुक्तंकेनापिप्रणवरथमास्थायपुरतो
विवेकः प्रत्युद्यन्विघटयतिमे व्यूहघटनां ॥ ५८ ॥

---

सकलसुरासुरमहितमाहात्म्येषुयुष्मासुजीवत्सुनित्यंनिर्भयास्मि

---

इयं समाधेरन्यथा कल्पना आशामात्र कृतानतु वास्तवी इयं नकार्यहेतुरित्याह मखल्विति—।

मनोरथसंपादितया चतुरङ्गसंपत्या महाराज्य सिद्धिः नखलु प्रबलस्य प्रतिपक्षस्य सन्निधौ प्रगल्भभाषितेन समर्थोचितभाषितेन किंसिद्ध्यति ।

प्रतिपक्षस्य उपक्षेपेणप्रसंगेन भीता प्रत्याश्वासयितव्या भयापनोदनेन स्थिराकर्तव्या । महावीराणां व्यूहस्य मध्यगता प्रतिपक्षेमहत्यपि मामैषीः ।

सकलैः सुरासुरैः महितं पूजितं माहात्म्यं येषां तेषु । अन्तर्मनसि त्रासेन सहितं यथाभवतितथा । परिवृत्य निवृत्य पश्चात्पृष्ठतः प्रक्षिप्यन्तां निधीयन्तां कुत एतदित्यत आह अद्यहीति—॥

अनिद्राणेति—॥ अनिद्राणायाः प्रज्ञायाः सहजेन स्वभावेन बलेन धीरा· निश्चला अद्भुता आश्चर्यभूता च गतिर्वृत्तिर्यस्य सतथा तितिक्षासन्तोषस्य तावेव स्थिरतरं तनुत्राणं कवचं तेनघटितः संबद्धः केनापिप्रयुक्तं प्रणवरथं प्रणवमेवरथं आस्थायप्रत्युद्यन् प्रत्युत्थानंकुर्वन् मे व्यूहघटनां व्यूहरचनां विघटयति विदलयति ॥५८॥

अथं नाटयन्ति अभिनयन्ति ।

सर्वे भयन्नाटयन्ति

वसन्तः–युष्मासुत्रिषुकस्यचिद्यदिविपत्संपत्स्यतेकेनचित्
त्यद्यत्येवहिभक्तजीवितनयामोहस्स्वयं जीवितं
सद्यश्चैनमनुम्रियेतनियतन्तद्वल्लभादुर्मतिस्त-
स्संप्रत्यपसर्पणंक्षममितः क्षिप्रं–
विवेकास्पदात् ॥ ५८ ॥

लोभः–अराजकैरस्माभिरत्रनयोद्धव्यं मन्त्रयिष्यतिचराजास्वयमेव कृत्यशेषं

क्रोधः–(सनिर्वेदं) धिग्धिक्किमियताकालेनास्माभिराचरितंराजकृत्यं

लोभः–सखे

अतिक्रामन्कालस्तपनरथवेगेनमहता
नरोद्धुं शक्येतप्रतिवहनवातूलरहितः ।

---

युष्मांस्विति–॥ त्रिषुयुष्मासु कस्यचिदेकस्य विपत् मृतिः केन चिद्धेतुना संप्रत्स्यते भविष्यति यदिमोहः भक्तजीविततयाभक्तः जीवितं यस्य सः भक्तजीवितः तस्यभावः तत्तातया स्वयं जीवितं त्यजत्येवहि प्रसिद्धौ तद्वल्लभा दुर्मतिः एनंमोहं सद्यःसहसा अनुम्रियेत अनुमृता स्यात् तत् तस्माद्धेतोः इतः विवेकास्पदात् क्षिप्रमपसर्पणं संप्रतिक्षमं युक्तं अस्मिन् युद्धे अस्मासु यस्यकस्यचित्पराजयेऽपि मोहो दुर्मतिश्च मरिष्यतः एवं स्वामिनाशहेतोर्युद्धादपि अपसर्पणमेवास्माकंयुक्तमितिभावः ॥ ५८ ॥

हेत्वन्तरमाह आराजकैरिति–॥ नविद्यते राजा येषां तैः अस्माभिर्न योद्धव्यं एवंसति स्वामिकार्यं कथं सेत्स्यतीत्यताह मन्त्रयिष्यतीति–।

कृतस्य कार्यस्यशेषं ।

धिग्धिगिति खेदोक्तिः । इयता कालेन अस्माभिः किं राजकृत्यमाचरितं न किंचिदितिभावः ।

किमाचरितमस्योत्तरमाह–

अतिक्रामन्निति–॥ महता तपनरथस्य वेगेन अतिक्रामन् गच्छन् कालः

भट्टास्तु धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात् यागादेरेव स्थायित्वं युक्तं न त्वपूर्वं। न चैवमिदानीं यागप्रत्यक्षापत्तिः आत्मविशेषगुणानां द्वितीयक्षण एव योग्यत्वादित्याहुस्तन्न इदानीं न यजेयमिति प्रत्यक्षविरोधात्। विधिभिन्नोऽर्थवादः स त्रिविधः गुणवादोऽनुवादो भूतार्थवादश्चेति तदुक्तं विरोधे गुणवादः स्यादनुवादोऽवधारिते भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः। सोऽयं शब्दोऽनित्य उत्पन्नो गकारो विनिष्टो गकार इतिप्रतीतेः। अत्र गुरवः नित्यः शब्दो व्योमैकगुणत्वात्तत्परिमाणवत् नचाप्रयोजकत्वं सोऽयं गकार इति प्रत्यभिज्ञानस्यान्यथानुपपत्तेः। न चायं भ्रमो बाधकाभावात् न चोत्पत्त्यादिप्रतीतिर्बाधिका तस्याभिव्यञ्जकवायूत्पत्त्यादिविषयकत्वादित्याहुस्तन्न। गकारगतत्वेनोत्पत्त्यादिप्रतीतेः। न चासौ भ्रान्तिर्बाधकाभावात् प्रत्यभिज्ञानं बाधकमिति चेन्न। अनयैव सा बाधिता किं न स्यात् न ह्यत्र विनिगमकमस्ति। नन्वेवं विनिगमकाभावे विनाशादिप्रत्ययस्यैव कुतोऽबाधितत्वमिति चेन्न। उत्पत्तिविनाशप्रत्यययोरुभयोर्बाध्यत्वकल्पनापेक्षया प्रत्यभिज्ञानमात्रस्य बाध्यत्वकल्पनायां लाघवात्। अन्ये तु विनिगमनाभावादुभयोरेव प्रमात्व

**कथमेतदिति चेत् प्रत्यभिज्ञानस्य गत्वावच्छिन्नभेदाभावविषयत्वात् तथा च सति गकारोयमिति स्यान्न तु सोयमिति चेन्न सोयमित्यस्य गत्वावच्छिन्नाभिन्नोयमित्यर्थात् गकारोयमित्यत्र च गत्वे तद्वृत्तित्वानवगाहनात् तथा च सति तज्जातीयोयमिति स्यादिति चेन्न गत्वे जातित्वानवभासादित्याहुः । भट्टास्तु-शब्दो नित्यो निःस्पर्शद्रव्यत्वादात्मवदित्याहुः तदपि नोक्तदोषात् शब्दस्य द्रव्यत्वे मानाभावाच्च । शब्दो द्रव्यं साक्षात्सम्बन्धनेन्द्रियग्राह्यत्वाद्घटवदिति चेन्न अप्रयोजकत्वात् शब्दस्य नीरूपद्रव्यत्वेन बहिरिन्द्रियाग्राह्यत्वापत्तेः ॥**

ननु क्लृप्तकारणीभूतयाग एव स्थायी स्वीकार्यो लाघवादिति भट्टमतमाह भट्टास्त्विति । नत्वपूर्वमिति स्वीकार्यमिति शेषः युक्तमिति चानुषञ्जनीयं । एवं यागस्य स्थायित्वे । इदानीमिति । यागस्य विद्यमानत्वे यागाभावस्याभावे यागाभावप्रत्यक्षं न स्यादिति भावः । विधिस्वरूपकथनपूर्वकमर्थवादं विभजते विधिभिन्न इति गुणवादेति विरोधकथनपूर्वकातिशयबोधकपदकदम्बत्वं गुणवादत्वं यथादित्यो यूप इत्यत्र यूप आदित्याभेदो विरुद्धस्तत्रादित्यवद्रूपातिशयलक्षणो गुणो बोध्यत इति । ज्ञातार्थज्ञापकत्वमनुवादत्वं यथा अग्निहोत्रं जुहुयादित्यनेन होमे ज्ञाते दध्ना जुहोतीत्यत्र जुहोतिना होमज्ञापकत्वं । यथावाग्निर्हिमस्य भेषजमित्यादौ अन्यतज्ज्ञातार्थज्ञापकत्वं । विरोधावधारणोभयविधिभिन्नवाक्यबोध्यत्वं भूतार्थवादत्वं यथा वायुर्वैक्षेपिष्टेत्यादि । यच्च दुःखेन संभिन्नमित्यादि वा अत्र स्वर्गपदवाच्यताविरोधावधारणो भ-

याभावात् । नन्वादौ वाक्यार्थज्ञानं तेन पदघटितं वाक्यं जन्यते ततः पदज्ञानपदार्थोपस्थितिः शाब्दप्रमितिस्तत्करणत्वेन शब्दस्य प्रमाणत्वमुक्तं तच्च न संभवति वर्णानां नित्यत्वेन वाक्यार्थज्ञानजन्यत्वस्य बाधितत्वादित्यत आह सोऽयमिति । अत्र वर्णा नित्या न वेति विप्रतिपत्तौ । शब्दो वर्णात्मकः शब्दः अन्यथा ध्वन्यात्मकशब्दस्य गुरूणाप्यनित्यत्वस्वीकारेणांशतो बाधापत्तेः । व्योमघटसंयोगे व्यभिचारवारणायेकेति । गुणत्वपदं स्वरूपासिद्धिवारणाय । अन्यथा नित्यत्वानुमानस्याप्रयोजकत्वे तथा-चैकैका एव गकारककारादिव्यक्तय इति हृदयम् । न च तथापि घटादिवत्स्थिरत्वं शब्दस्य प्रत्यभिज्ञया सिद्धं न नित्यत्वमिति वाच्यम् पश्चान्नाशकाभावेन नित्यत्वस्य पर्यवसानात् । तदुक्तं । "तावत्कालस्थिरं चैनं कः पश्चान्नाशयिष्यती"ति । अयं प्रत्यभिज्ञारूपः । शब्दे नित्यत्वबाधसंभवेन प्रमायोगादित्याह बाधकेति । ननूत्पन्नो गकारो विनष्टो गकार इति प्रतीतिरेवबाधिका भविष्यतीत्याह । न चेति । तस्याः प्रत्यभिज्ञायाः । व्यञ्जकेति । वर्णानामभिव्यञ्जको यो वायुस्तदीयोत्पत्तिरुत्पन्नोगकार इति प्रतीतिविषयः । एवं तदीयविनाशो विनष्टो गकार इति प्रतीतिविषय इत्यर्थः । उत्पत्यादिविषयत्वात् । उत्पत्यादिप्रतीतिविषयत्वात् । गकारगतत्वेनेति । उत्पन्नो गकार इत्यादौ गकारनिष्ठमुत्पत्त्यादिकं प्रतीयते न वायुनिष्ठमित्यर्थः असौ । इयमित्यर्थः । इयं गकारादिगतोत्पत्त्यादिप्रतीतिः । बाधकाभावादिति । गकारादिगतत्वेनोत्पत्यादिस्वीकारे यथा शुक्तौ रजतत्वस्वीकारे बाधकं तद्वन्न किमपि बाधकमित्यर्थः । अन्यथा घटोत्पत्तिसिद्धिरपि न स्यादिति भावः । प्रत्यभिज्ञानं सोऽयमिति ज्ञानं । अनयैव उत्पत्यादिप्रतीत्यैव । सा प्रत्यभिज्ञा अत्र प्रत्यभिज्ञानस्य बाधकत्वे । एवं उत्पत्यादिज्ञानप्रत्यभिज्ञानयोः समबलत्वे । उत्पत्तीति । प्रत्ययद्वयस्य बाध्यत्वापेक्षयैकस्य प्रत्यभिज्ञानस्य बाध्यत्वे लाघवमित्यर्थः । उभयोः । उत्पत्यादिप्रत्ययप्रत्यभिज्ञानयोः । ननु विरोधिविषयकप्रत्ययद्वयस्य कथं प्रमात्वमित्याह । कथमिति । एतत् । उभयोः प्रमात्वं । प्रत्यभिज्ञान-

स्येति । तथा चगत्वावच्छिन्नाभिन्नोयमित्यर्थः । तथामति । प्रत्यभिज्ञनस्य गत्वावच्छिन्नभेदाभावविषयत्वे । नतु सोयमिति । गकारोयमित्यत्र गत्वावच्छिन्नाभेदो बुध्यते सोयमित्यत्र श्रुतपूर्वगकाराभेद एव बुध्यते । नतु गत्वावच्छिन्नाभेद इत्यर्थः । सोयमित्यस्येति । श्रुतपूर्ववृत्तिगत्वावच्छिन्नाभेदे बुध्यते न तु श्रुतपूर्वगकाराभेद इत्यर्थः । ननु तर्हि सोयं गकारोयमिति प्रत्ययद्वयस्यावैलक्षण्य स्यादित्यत आह गकारोयमिति । तद्वृत्तित्व श्रुतपूर्वगकारवृत्तित्वं । ननु तथापि गत्वजातीयोयमिति प्रत्ययः स्यात् न तु कारोयं सोयमित्याह । तथा चेति । जातित्वानवभासात् । गत्वजातित्वानवभासात् । शब्दो ध्वनिभिन्नशब्दः तेन ध्वनेरनित्यत्वेन नांशतो बाधः । उक्तदोषात् । उत्पत्तिविनाशप्रत्ययविरोधात् । नन्वनुमानसिद्धं यद्यनित्यत्वं तर्हि कल्प्यतामुत्पत्तिविनाशप्रत्ययोः प्रत्यभिज्ञाबाध्यत्व मत आह शब्दस्येति तथा च हेत्वसिद्धिरिति भावः । हेत्वसिद्धिं निराकरोति । शब्द इति रूपादौ व्यभिचारवारणाय साक्षादिति अप्रयोजकत्व विवृणोति शब्दस्येति । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नप्रति रूपत्वेन कारणत्वमित्यर्थः । वायुस्तु न प्रत्यक्ष इत्यभिप्रायेणेदं यदि च वायुः प्रत्यक्ष इत्याग्रहस्तदा बहिरिन्द्रियग्राह्यत्वे स्पर्शवत्त्वमपि प्रयोजकं वाच्यमिति ॥

अन्ये तु वर्णो नित्यो ध्वन्यान्यशब्दत्वात् स्फोटवदित्याहुस्तदप्यत एव निरस्तं दृष्टान्तासिद्धेश्च । न हि वर्णान्यः स्फोटात्मकः प्रमाणसिद्धोस्ति । नन्वस्तिसः तथा हि पदानां वर्णकदम्बरूपाणामाशुविनाशितया मेलनासम्भवात् अप्रत्यक्षत्वं तावन्निरूढं । तथा च तदप्रत्यये कुतोऽर्थप्रत्ययः स्यात्तस्माद्वर्णाभिव्यङ्ग्यः पदस्फोटः कश्चिदभ्युपेयो यतोऽर्थप्रत्यय

इति तदशुद्धं स हि स्फोटस्तावद्वर्णव्यङ्ग्यस्तावद्व्यक्ति मध्ये यत्किद्वर्णव्यङ्ग्यो वा तावद्वर्णाभिव्यक्तिव्यङ्ग्यो वा नाद्य आशुविनाशिनां क्रमिकाणां तेषां मेलनासम्भवात् । न द्वितीयो घकारमात्रोच्चारणे घटपद स्फोटप्रत्ययेऽर्थप्रत्ययापत्तेः वर्णान्तरवैफल्याच्च नान्त्यः तदसम्भवात् । अथ पूर्वपूर्ववर्णगोचरसंस्कारसहितश्चरमवर्णोपलम्भस्तद्व्यञ्जक इति चेत् तर्हि स एवार्थप्रत्यायकोऽस्तु कृतं स्फोटेन । अथ पदप्रतीतिबलात्सिद्धिरिति चेन्न तस्य क्रमविशेषवत्तावद्वर्णगोचरत्वात् । ननु तावद्वर्णगोचरप्रत्यय एव न सम्भवतीति चेन्न तावद्वर्णगोचरसंस्कारात् समूहालम्बनरूपतावद्वर्णगोचरस्मरणसम्भवात् । ननु तावद्वर्णमात्रं न पदम् अर्थाप्रत्यायकत्वात् अन्यथा नदीदीनयोरविशेषापत्तेः किन्तु आनुपूर्वीविशेषविशिष्टतावद्वर्णरूपम् । न च तत्प्रत्ययः सम्भवतीति चेन्न घोत्तरत्वं हि तस्यानुपूर्वी अस्ति च तस्य प्रत्यक्षं घोत्तरं टं शृणोमीति प्रतीतेरिति दिक् ।

वैयाकरणमतमाहात्म्ये त्विति । ध्वनौ व्यभिचारवारणाय ध्वन्यान्येति । स्फोटवदिति । तत्र पदस्फोटरूपपदार्थान्तरस्वीकारादित्यर्थः । अत एव विनाशादिप्रत्ययबलादेव । नन्वन्यथानुपपत्त्या विनाशादिप्रत्ययस्य प्रत्यभिज्ञाबाध्यत्वमेवोच्यतामित्यत आह दृष्टान्त इति ।

स्फोटं दूषयितुम्प्रतिपादयति । तथाहीत्यादिना । वर्णकदम्बरूपाणां वर्णसमूहरूपाणां । अप्रत्यक्षत्वं । निरूढम् प्रसिद्धम् । तदप्रत्यये पदा प्रत्यक्षे इति पदप्रत्यक्षाधीनमग्रे पदस्मरणं ततः पदार्थोपस्थिति शाब्दबोध इति क्रमः । तत्र पदघटितवर्णानां नाशात्पदप्रत्यक्षासम्भवे कुतः पदार्थोपस्थितिरिति भावः । इत्थं च यज्ज्ञानात्पदार्थोपस्थिति-स्तादृशशब्दात्मको नित्योऽवश्यमभ्युपेय इत्याह तस्मादिति । यतो यज्ज्ञानाद्बोधः । नाद्य इति न तावद्वर्णव्यङ्ग्य इत्यर्थः । तत्र हेतुमाहा-श्विति न द्वितीय इति तावतां मध्ये यत्किञ्चिद्वर्णव्यङ्ग्यस्तदा घकारोच्चा-रणे घटपदस्फोटप्रत्ययः स्यादित्यर्थः । ननु वर्णान्तरकत्वे घमात्रादपि प्रत्ययो जायत एवेत्यत आह वर्णान्तरेति । एकस्यापि व्यञ्जकत्वा-दिति भावः । तदसम्भवात् । तावद्वर्णाभिव्यक्त्यसम्भवात् । ननु पूर्व-पूर्ववर्णानामुच्चारणे सति वर्णानाम्प्रत्यक्षाणि तैश्च संस्कारा जन्यन्ते-तत्सहितान्त्यवर्णोपलम्भस्य स्फोटव्यञ्जकत्वमित्याहाशेति । स एव चरमवर्ण एव । ननु स्फोटं विना तावद्वर्णगोचरपदप्रत्यय एव न सम्भवतीत्याहाशेति । तत्सिद्धिः । क्रमविशेषवत् आनुपूर्वीविशेषवत् यथा पदे आनुपूर्वीविशेषो बुध्यते तथा तावद्वर्णा अपि बुध्यन्त एवेत्यर्थः । तत्समूहालम्बनेति । तावद्वर्णानुभवैस्तावत्संस्कारा जन्यन्त तत्संस्कारैश्च-रमवर्णरूपोद्बोधकसहकारेण निखिलवर्णगोचरस्मृतिरित्यर्थः । तथा च तावद्वर्णगोचरस्मृतिरेव पदज्ञानमिति भावः । अथ तावद्वर्णानां पद-त्वाभावं शङ्कते नन्विति तथा च क्रमिकतावद्वर्णानामेवार्थप्रत्यायकत्व-मिति भावः । अन्यथा व्युत्क्रमवर्णानामर्थप्रत्यायकत्वे अविशेषेति वर्णानां तुल्यत्वान्नदीति वर्णसमुदायाद्दीनबोधः स्यादिति भावः । रूपमित्यन-न्तरं पदमित्यनुषज्यते । तत्प्रत्ययः । आनुपूर्वीविशेषविशिष्टतावद्वर्णरूप-पदप्रत्ययः घोत्तरत्वमिति घाव्यवहितोत्तरत्वन्तस्यानुपूर्वीत्यर्थः । तस्य आनुपूर्वीविशेषस्य ॥

नन्वर्थापत्तिरपि प्रमाणान्तरं तथा हि पीनो देवदत्तो दिवा न भुङ्क्ते इति प्रत्ययानन्तरं दिवसेऽभोजनः पीनत्वं रात्रिभोजित्वमन्तरेणानुपपन्नमिति तत्कल्पयति । न चात्र प्रत्यक्षादि प्रमाणं किन्त्वनुपपत्तिज्ञानमेव सैवार्थापत्तिरिति चेन्न केवलव्यतिरेकिणैवोपपत्तेस्तथा हि देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वेसति पीनत्वात् यन्नैवं तन्नैवं यथ केवलमभोजीति अर्थापत्तिपदं केवलव्यतिरेकिण एव नमानान्तरमिति संक्षेपः ॥

अर्थापत्तिः प्रमाणान्तरमिति मिमांसकमतमित्याशङ्कते । नन्विति तत् रात्रिभोजनं अत्र रात्रिभोजने । अनुपपत्तिज्ञानमेव दिवसेऽभुञ्जानस्य रात्रिभोजनं विना पीनत्वमनुपपन्नमिति ज्ञानमेव । अथ केवलव्यतिरेक्यनुमानेनैवोपपत्तौ कृतं प्रमाणान्तरेणेत्याह केवलेति दिवेति । रोगियोगिभिन्नत्वे सतीति विशेषणीयन्तेन दिवसे रात्रौ च भोजनमन्तरेणापि रोगियोगिनोः पीनत्वसत्त्वेपि न क्षतिः । तथा च रोगियोगिभिन्नत्वेसति दिवाऽभुञ्जानत्वे च सति पीनत्वादिति हेत्वर्थः । पीनत्वस्य भोजनव्याप्यत्वावधारणात् । प्रत्यक्षादिना दिवाभोजनबाधे रात्रिभोजनमनुमितौ भासत इति भावः । यन्नैवं यो रात्रौ न भुङ्क्ते । तन्नैवं दिवाभुञ्जानत्वेसति पीनो नेत्यर्थः । नन्वर्थापत्तिपदेन पृथङ्निर्देशः कथमित्य आहार्थापत्तीति ॥

अविदितवक्तृकः शब्दविशेष ऐतिह्यं नाम स यदि मानान्तरं तदा शब्द एव न चेत् प्रमाणमेव नेत्युभयथापि न मानान्तरमिति सिद्धं चत्वारि

प्रमाणानीति । ननु सर्वमिदं प्रमात्वसिद्धौ स्यात् तदेव तावदसिद्धं न हि तत्प्रत्यक्षं ज्ञानस्यातीन्द्रियत्वात् अन्यथा ज्ञानतज्ज्ञानानां ज्ञानमेव स्यात् न तु विषयान्तरसञ्चार इति । अत्रगुरवः स्वप्रकाशमेव ज्ञानं घटादिकमिव स्वात्मानं स्वाधिकरणमात्मानञ्च विषयी करोति अत एव सर्वमेव ज्ञानं घटमहञ्जानामीत्याकारम् । इत्थञ्च ज्ञानस्य मितिमातृमेयविषयत्वात् त्रिपुटीप्रत्यक्षताप्रवाद इत्याहुस्तन्न चक्षुर्ज्जन्यघटज्ञानादिना स्वात्मनो विषयीकर्त्तुमशक्यत्वात् चाक्षुषादिज्ञाने विषयसन्निकर्षयोरपि हेतुत्वात् न चोत्पद्यमानं ज्ञानं पूर्वमस्ति सन्निकृष्टम्वा कथम्वा चक्षुषा आत्मविषयकं ज्ञानं जायते चाक्षुषादिज्ञाने उद्भूतरूपवत एव द्रव्यस्य योग्यत्वात् अन्यथा आकाशस्यापि चाक्षुषादिग्रहापत्तेः ॥

ननु मास्त्वर्थापत्तिः प्रमाणान्तरं परन्त्वैतह्यं तु प्रमाणान्तरं भविष्यतीत्याशङ्कते । अविदितोऽविनिर्णीतः कर्त्ता यस्यैतादृशो यः शब्दविशेषः स ऐतिह्यनामप्रमाणं तस्य शब्देन्तर्भावः । यथा नदीतीरे पंचफलानि सन्तीत्यादिशब्दविशेषोऽनिर्णीतकर्तृकशब्द एवान्तर्भवतीति । स तादृशशब्दविशेषः । संक्षेप इति । चेष्टापि प्रमाणांतरं भविष्यतीति चेन्न तत्र यदि व्याप्त्यादि धीस्तदानुमितावन्तर्भावः यदि च लिप्यादिवच्चेष्टायाः संकेतग्राहकशब्दस्मारकत्वं तदा शब्द एवान्तर्भावः । एवं संभवोपि न मानान्तरं सहस्रे शतमस्तीति सहस्राक्रान्तसंभवोमानमिति दिक् ॥ अथ

प्रमायाः करणं प्रमाणमित्युक्तं तच्च संभवति प्रमात्वस्याज्ञानादिति सिंह-
वलोकनन्यायेनाह । नन्विति । तदेव । प्रमात्वमेव । अथ भट्टमतमी-
न हीति तत्प्रमात्मकज्ञानस्य मनोयोग्यत्वान्मनसैव ज्ञानप्रत्यक्ष भविष्यता
त्यत आहान्यथेति । अन्यथा । ज्ञानस्यैन्द्रियकत्वे । तथा च ज्ञानविषय
कज्ञानानां प्रत्यक्षत्वेऽनवस्था स्यादिति भावः । ननु तत्र विषयान्तरसं
चाराच्चानवस्थेत्यत आह । नत्विति । विषयान्तरसंचारे मानाभावादित्य
र्थः । विषयान्तरसञ्चारे सत्यपि तत्तज्ज्ञानादिविषयसमुद्भवाया ज्ञानधा-
रान्तर्गतायाः कस्याश्चिज्ज्ञानव्यक्तेः प्रत्यक्षं स्यादिति ज्ञानस्यातीन्द्रियत्व-
मिति भावः । ज्ञानजनकसामग्र्या एव ज्ञानग्राहकत्वमिति कथं ज्ञानस्या
तीन्द्रियत्वमिति प्राभाकरमतमुत्थापयति । अत्र गुरव इति । स्वप्रकाश-
मेवेति स्वमेवस्वस्य ग्राहकं तथा च यथा ज्ञानं घटादिकं गृह्णाति । तथा
स्वस्यस्वरूपं स्वाधिकरणमात्मानं गृह्णातीत्यर्थः । नचायं घट इत्याकारक-
ज्ञाने ज्ञानात्मनः कथं विषयता भविष्यतीत्यत आहात एवेति । अत एव
घटांशज्ञानांशात्मांशानां विषयत्वादेव । मितिर्ज्ञानं । माता प्रमाता आ-
त्मेति यावत् मेयोघटः । बहिरिन्द्रियजन्यज्ञानेनात्मनोऽविषयीकरणात्प्र
वाद इत्युक्तम् । तथा च निर्युक्तिकप्रवादो नश्रद्धेय इति भावः । तदेव ।
त्वाह चक्षुरिति । चाक्षुषादीति चक्षुरादीनामात्मना सहसन्निकर्षाभावा
दिति भावः । ननूत्पद्यमानमात्मविषयकमेव ज्ञानं पूर्वं भविष्यतीत्यत
आह नेति । स्वस्य स्वपूर्ववृत्तित्वाभावादिति भावः । ननु मास्तु स्वस्य
स्वपूर्ववृत्तित्वं तथाप्यात्मनि संनिकृष्टं भविष्यतीत्यत आह संनिकृष्टं
चेति । स्व विषयकज्ञानस्योत्पत्तेः पूर्वं सन्निकृष्टत्वाभावादिति भावः ।
अथ ज्ञानस्य स्वप्रकाशकत्वादुत्पद्यमानं स्वमेव स्वविषयसंनिकृष्टं भविष्य-
तीत्यत आह कथमिति । तथा चात्मनो रूपवत्वाभावाच्च चक्षुर्योग्यत्व-
मत्यर्थः । अन्यथा नीरूपस्यापि चक्षुर्योग्यत्वं । ज्ञानेन स्वविषयघटादौ
ज्ञाततोत्पद्यते तया च ज्ञानमनुमीयत इति ।

भट्टास्तु ज्ञानं तावत्स्वविषये ज्ञातताख्य फलञ्जनयतीति निरूढं तयैवानुमेयं ज्ञानमित्याहु स्तदपि न ज्ञाततायाः निरस्तत्वात् । ज्ञानरूपस्य साध्यस्याप्रसिद्धौ अनुमानासम्भवाच्च उच्यते मनसैव ज्ञानं गृह्यते योग्यत्वात् न चैवं तज्ज्ञानमपि स्यात् एवं तज्ज्ञानमपीत्यनवस्था । विषयान्तरसञ्चारसामग्र्याः प्रतिबन्धकत्वेन कस्यचिज्ज्ञानस्य मनसाऽग्रहात् तत्प्रतिबन्धकत्वे किम्मानमिति चेत् फलानुदय एवेति संक्षेपः । तथापि तस्य प्रामाण्यं केन गृह्यते न तदनुमानेन ग्रहीतुं शक्यं साध्याप्रसिद्धेः । अत्र भट्टाः ज्ञाततया ज्ञानानुमितिर्ज्जायमाना प्रामाण्यमपि विषयीकरोतीत्याहुः तन्न ज्ञाततया हि ज्ञानमात्रस्य व्याप्तिर्गृहीता प्रमात्वविशिष्टस्य वा नाद्यः ॥

भट्टमतं दूषयितुमुपन्यस्यति । भट्टास्त्विति निरूढं प्रसिद्धं । तया ज्ञाततया । ज्ञाततायाः इति । नष्टेपि घटे ज्ञातो घट इति प्रतीतेस्तत्र घटस्याभत्वाज्ज्ञानेन भावकार्यरूपा ज्ञातता समवायिकारणं बिना कथमुत्पाद्येति पूर्वं निरस्तत्वादित्यर्थः । नन्वियं ज्ञातता घटत्वप्रकारकघटविषयकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञाततात्वादित्यनुमानाज्ज्ञातता दूरापास्तेत्यत आह ज्ञानस्येति । तत्र मते ज्ञानस्यातीन्द्रियत्वाज्ज्ञानरूपसाध्यस्याप्रसिद्धिरित्यर्थः । भट्टमताभिप्रेतं ज्ञानस्यातीन्द्रियत्वं खण्डयति । मनसैवेति । योग्यत्वात् योग्यात्मविशेषगुणत्वात् । एवं ज्ञानस्य मनोयोग्यत्वे । तज्ज्ञानमपि । एवं मनो योग्यं तज्ज्ञानमपीति

ज्ञानविषयकज्ञानमपि मनोग्राह्यं स्यादित्यनवस्थत्यर्थः । विषयन्तरेति । विषयान्तरसंचारस्य प्रतिबन्धकत्वात्तत्सामग्र्या अपि प्रतिबन्धकत्वमिति धारान्तः पातिनः कस्यचिज्ज्ञानस्य मनोग्राह्यत्वाभावाच्चानवस्थेत्यर्थः फलानुदय इति । मध्ये ज्ञानान्तरेच्छा कृतिसुखादीनां जायमानत्वाच्च ज्ञानपरम्परारूपफलोदय इत्यर्थः । तुष्यतुदुर्जनन्यायेन शङ्कते तथापीति तथापि । ज्ञानस्यातीन्द्रियत्वेऽपि । तस्य ज्ञानस्य तदनुमानेन । ज्ञातता लिङ्गकज्ञानानुमानेन । साध्येति । तव मते ज्ञानस्यातीन्द्रियत्वाज्ज्ञानरूप साध्याप्रसिद्धिरित्यर्थः । साध्याप्रसिद्धिरूपं दूषणमाकाङ्घ भट्टमताभिप्रेतं स्वतोग्राह्यत्वमाहात्र भट्टा इति । यद्वा । तदनुमानेन प्रामाण्यानुमानेन अनुमानं तु इदं ज्ञानं प्रमा संवादि प्रवृत्तिजनकत्वादिति बोध्यं साध्याप्रसिद्धेः । प्रामाण्यरूपसाध्याप्रसिद्धेः । ज्ञाततयेति । अयमर्थः भट्टमते ज्ञानस्यातीन्द्रियत्वेऽपि ज्ञानानुमापिका विषयनिष्ठा ज्ञातता प्रत्यक्षा तथा च । ज्ञाततालिङ्गकानुमानरूपया ज्ञानग्राहकसामग्र्या प्रामाण्य गृह्यत इति यावज्ज्ञानग्राहकसामग्रीग्राह्यमिति निखिलमीमांसकाः तदेव स्वतस्त्वं नेति नैयायिकाः । भट्टमते तु ज्ञातताजनकज्ञानानुमाने स्वजन कीभूतविषयस्य भानं व्यवसायरूपप्रत्यासत्तेः सत्त्वात् । विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषय इति तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रा-माण्यं विषयी क्रियत इति ।

ततो ज्ञानमात्रं सिद्ध्येन्न तु तत्प्रमात्वमपि साध्यतावच्छेदकरूपेण साध्यं व्याप्त्या सिध्येन्न तु रूपान्तरेण अन्यथा वह्निव्याप्योधूम इति ज्ञानाद्द्रव्य-त्वेन दीपत्वेन दहनसिद्ध्यापत्तेः । नान्त्यः व्यभिचारा-त्साध्याप्रसिद्धेश्च । गुरवस्तु स्वप्रकाशमहिम्ना स्वमिव स्वप्रामाण्यमपि सिध्यतीत्याहुः तन्न स्वप्रकाशतायाा

**असिद्धेः। किञ्चैवं ज्ञाने प्रामाण्यसंशयो न स्यात् ज्ञान-ग्रहे प्रामाण्यनिश्चयान्निश्चिते च संशयायोगात् अग्रहे स्वप्रकाशग्राह्यताव्याघातात् धर्म्मिज्ञानाभाव-वाच्च समानधर्म्मवत्तया धर्म्मिज्ञानस्यान्वयव्यतिरेका-भ्यां संशयहेतुत्वावधारणाच्च ॥**

तत इति । ज्ञाततारूपहेतुना ज्ञानत्वविशिष्टस्य साध्यस्य व्याप्ति-ग्रहादनुमित्या ज्ञानत्वेन रूपेण ज्ञानसिद्धिर्न तु तज्ज्ञानप्रामाण्यसिद्धिरि-त्यर्थः । तदेवाह साध्यतेति । ज्ञाततायाः प्रमात्वविशिष्टस्य व्याप्यत्वे बाधकमाह । नान्त्य इति । व्यभिचारादिति । इयं ज्ञातता प्रमाजन्या ज्ञाततात्वादित्यत्र यत्र ज्ञाततात्वं तत्र न प्रमाजन्यत्वं भ्रमजन्यज्ञात तायां व्यभिचादित्यर्थः । प्रमाजन्यज्ञाततात्वं हेतुर्भविष्यतीति न व्यभि चार इत्यत आह साध्येति । गुरवस्त्विति । यथा स्वस्मिन् स्वं विषयो भवति तथा स्वनिष्टं प्रामाण्यमपि विषयो भवतीत्यर्थः । अयं भावः ज्ञानजनकसामग्र्या ज्ञानग्राहिकया घटत्ववति घटत्वप्रकारकज्ञानत्वरूप प्रामाण्यं गृह्यते घटमहं जानामीत्याकारकमेवज्ञानज्ञानं । तत्र चक्षुषा घटत्वतदुभयवैशिष्ट्यं गृह्यते मनसा च ज्ञानज्ञानत्वं तदुभयवैशिष्ट्य प्रकारत्वं च गृह्यत इति गुरुमते प्रामाण्यस्य स्वतोग्राह्यत्वमिति स्वेति ज्ञानस्येति पूरणीयं । सिध्यसिद्धिव्याघातदाह किञ्चेति । एवं प्रामा ण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वे । तथा च यदि ज्ञानं गृहीतं तर्हि तद्गतं प्रामाण्यं गृहीतमिति । यदि च ज्ञानं न गृहीतं तदा ज्ञानरूप धर्मिणोह्यज्ञानाच्च ज्ञानधर्मिकप्रामाण्यसंशय इति । ननु मास्तु धर्मि ज्ञानं संशयहेतुरित्यत आह समानेति । पुरुषत्वपुरुषत्वाभावकोट्योः समा नोधर्म उच्चत्वादिः । तद्वद्धर्मिज्ञानस्यान्वयव्यतिरेकाभ्यां हेतुत्वमित्यर्थः । अथ जानामीति प्रतीतिबलाज्ज्ञानं मनोयोग्यमिति नातीन्द्रियं तथाचानु

व्यवसायेन व्यवसाये गृह्यमाणे व्यवसायविषयधर्मधर्मिवत्तदुभयवैशिष्ट्यमपि विषयीकरोति व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वादिति ।

**मुरारिमिश्रास्तु तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं प्रामाण्यं तच्च प्रथमानुव्यवसायेनैव गृह्यते तथा हि घटत्ववांस्तावद्व्यवसायेनोपनीतस्तद्विशेष्यकतासंसर्गरूपाज्ज्ञाने मनसा गृह्यते विशेषणस्य तद्वतः पूर्वमुपस्थितत्वात् । न च मनसो वहिरर्थप्रकाशासामर्थ्यं उपनयसहकारेण तस्य वहिरर्थप्रकाशकत्वात् । कथमन्यथा कविकाव्यादौ मूलभूतं ज्ञानं कथम्वाऽनुव्यवसाये विषयप्रतिभानं घटत्वमपि व्यवसायेनैवोपनीतमतस्तत्प्रकारकता विषयतावत्सुग्रहा इत्युभयस्यैकत्र ग्रहेण गृहीतं प्रामाण्यमिति ॥**

स्वाश्रयग्राहकेण गृह्यत एवेत्यभिप्रायवतां मतमाह मुरारिमिश्रास्त्विति । तद्वद्विशेष्यधर्मत्वेसति घटत्ववद्विशेष्यत्वेसति । तत्प्रकारकत्वं घटत्वप्रकारकत्वं । तच्चेति । अयं घट इति व्यवसायः । ततो ज्ञानज्ञानत्वनिर्विकल्पकं । ततो घटमहं जानामीति प्रथमानुव्यवसायस्तत्र प्रामाण्यं गृह्यत इत्यर्थः । अत्रैवकारेण विलम्बाभावः सूच्यते । तथाचैतन्मते यावत्स्वाश्रयग्राहकेण गृह्यत एव न वेति विप्रतिपत्तिरिति भावः । ज्ञानज्ञानस्य यावद्विषयविषयकसाक्षात्कारतया धर्मधर्मिवत्तद्वैशिष्ट्यस्यापि भानात्व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वादित्यभिप्रेत्याह घटत्ववानिति । तावद्व्यवसायोपनीतः अयं घट इति व्यवसायलक्षणसन्निकर्षेण सन्निकृष्टः अतः घटत्वव्यवसायोपनयात् तद्वद्विशेष्यताकसंसर्गरूपज्ञानेन घटत्ववद्विशेष्यताकः संसर्गो यस्य एतादृशव्यवसायरूपज्ञानेन मन-

सा गृह्यत इत्यर्थः । अथ घटत्ववतो विशेषणतयैव भानं न तु संसर्गविधयेत्यत आह विशेषणस्येति । तद्वतः । घटत्ववतः । पूर्वं अनुव्यवसायात्पूर्वं । ननु मनसो बहिरस्वातन्त्र्याद्घटवतः कथं संसर्गविधया भानमित्यभिप्रायवानाह । न चेति । उपनयेति । व्यवसायोपनीतं घटादिकमनुव्यवसाये भासते । तथा च मनो बहिः पदार्थग्रहणे न स्वतन्त्रं । परं तु लौकिकालौकिकसन्निकर्षद्वारा बहिः पदार्थग्राहकं भवत्येवेत्यर्थः। अन्यथोपनयसहकारेणापि बहिः पदार्थायोग्यत्वे । अतीतानागतपदार्थानां लौकिकसन्निकर्षाभावेपि ज्ञानलक्षणालौकिकसन्निकर्षस्य सत्त्वात्काव्यमूलभूतं वाक्यार्थज्ञानमित्यर्थः । कथं वेति । अयं घट इति पूर्वं व्यवसायस्ततो घटमहञ्जानामित्यनुव्यवसायस्तत्र व्यवसायलक्षणोपनयं विना कथं घटादिरूपविषयभानमित्यर्थः । घटत्ववद्विशेष्यकत्वेसति घटत्वप्रकारकत्वं प्रामाण्यं तत्र सत्यन्तभानप्रकारमुक्त्वा घटत्वप्रकारकत्वभानप्रकारमाह घटत्वमपीति । व्यवसायोपनीतमित्यनन्तरं गृह्यत इत्यनुषज्यते । अतो घट इति व्यवसायोपनीतत्वात् । तत्प्रकारता घटत्वप्रकारता । विषयतावत् । घटत्ववद्विशेष्यकत्ववत् । यथा घटत्ववद्विशेष्यकत्वं सम्बन्धविधया व्यवसायोपनीतमनुव्यवसाये भासते तथा घटत्वप्रकारकत्वमित्यर्थः । उभयत्र उभयमित्यर्थः । एकत्रेति । एकत्रानुव्यवसाये घटत्ववद्विशेष्यकत्वं घटत्वप्रकारत्वं चोभयं गृहीतं तदा गृहीतमेव प्रामाण्यमित्यर्थः ॥

तदपि न एवं हि तद्विष्यकत्वं तत्प्रकारत्वं च गृहीतं। न चैतावदेव तत्प्रामाण्यं किन्तु तद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वं न च तद्वद्विशेष्यकत्ववैशिष्ट्यमनुव्यवसायो ग्रहीतुमर्हति तद्वद्विशेष्यकत्वस्य पूर्वमनुपस्थितेः संसर्गविधया हि विशेष्यता प्रकारता च भासते। किञ्चैतदपि न प्रामाण्यं वह्निगुञ्जयोर्गुञ्जा-

वह्नी इति भ्रमेऽतिव्याप्तेः अस्ति हि तत्र वह्निविशेष्यकत्वं वह्नित्वप्रकारकत्वं च किन्तु तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वमित्युक्तं । न चावच्छेद्यावच्छेदकभावः प्रथमं ग्रहीतुं शक्यः तद्विशेष्यकत्वस्य पूर्वमप्रतीतेः ॥

अथ रङ्गरजतयोरिमे रङ्गरजते इति समूहालम्बनस्य भ्रमसाधारण्यात्तद्वद्विशेष्यकत्वे सति तत्प्रकारत्वमात्रं प्रामाण्यमित्यभिप्रायवानाह । तदपि नेति । तदपि निरुक्तमिश्रमतमपि । न चैतावदेवेति । तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपप्रामाण्यस्य रङ्गरजतयोरिमे रजतरङ्गे इति समूहालम्बनभ्रमेऽपि सत्त्वादिति भावः । यद्वा ननु तद्वद्विशेष्यकत्वेसति तत्प्रकारकत्वमात्रं प्रामाण्यं न तस्यानुव्यवसायोत्तरं व्यवसायनिष्टप्रामाण्यसंशयो न स्यात्तथा च तद्वद्विशेष्यकत्वावच्छिन्नं तत्प्रकारकत्वं तच्च नानुव्यवसायगम्यमित्यभिप्रायवानाह । तदपिनेति किंत्विति तद्वद्विशेष्यकत्वं संसर्गविधयानुव्यवसाये भासते न तु प्रकारतयेति तद्वैशिष्ट्यं न व्यवसाये भासते तथा च यदि तद्वद्विशेष्यकत्ववैशिष्ट्यं न व्यवसाये भासते तदा व्यवसायोपनीतं तद्वद्विशेष्यकत्ववैशिष्ट्यं नानुव्यवसाये भासत इति भावः । अनुपस्थितेः । विशेषणतयानुपस्थितेः । संसर्गेति संसर्गविधयाभातस्य तद्वद्विशेष्यकत्वस्य तत्प्रकारकत्वस्य च वैशिष्ट्यं नानुव्यवसाये भासत इति भावः । अथ विशिष्टज्ञानसमूहालम्बनयोर्वैलक्षण्यान्यथानुपपत्त्या सम्बन्धसम्बन्धोऽपि भासते तथा तद्वद्विशेष्यकत्ववैशिष्ट्यस्य व्यवसायोपनीतस्यानुव्यवसाये भानं भवत्येवेति विवक्षितप्रामाण्यमपि स्वतो ग्राह्यं भवत्येवेत्यत आह । किं चेति । तदपि । तद्वद्विशेष्यकत्वविशिष्टं तत्प्रकारकत्वमपि वह्नीति वह्न्यंशे गुञ्जात्वं प्रकारो । गुञ्जांशे वह्नित्वं प्रकार इति वह्निगुञ्जयोर्गुञ्जावह्नीति भ्रमस्तत्र वह्नित्ववद्वि-

शेष्यकत्वं वह्नित्वप्रकारकत्वं च भासत इति तत्रातिव्याप्तिरित्यर्थः तद्वद्वि-शेष्यकत्वविच्छेदन तथा च वह्नित्ववद्विशेष्यकतावच्छेदकं वह्नित्वमिति-वह्निगुञ्जयोर्गुञ्जावह्नीति भ्रमे वह्नित्वावच्छेदेन वह्नित्वप्रकारकत्वाभावान्न दोष इति । न चेति । तथा चानुव्यवसाये घटत्ववद्विशेष्यकत्वसति घटत्वप्रकारकत्व गृह्यते नतु घटत्ववद्विशेष्यकतावच्छेदकघटत्वाव-च्छेदेन घटत्वप्रकारकत्वं गृह्यत इत्यर्थः तद्वद्विशेष्यकत्वस्य घटत्ववद्वि शेष्यकत्वस्य अप्रतीतेरिति । विशेषणतयाऽप्रतीतेरित्यर्थः । घटत्ववद्विशेष्य-कत्व व्यवसाये संसर्गमर्यादया भासते न तु विशेषणतयेति तदवच्छेद्याव च्छेदकभावो नानुव्यवसाये भासत इति भावः ।

अत्रोच्यते मास्तां प्रथमानुव्यवसायेन प्रामा-ण्यग्रहः द्वितीयेन तु स्यात् तद्वद्विशेष्यकत्वस्य पूर्वं-प्रथमानुव्यवसायेनोपस्थितेः । न चैवं प्रामाण्यस्यानु-व्यवसायगम्यत्वे प्रामाण्यसंशयो न स्यादिति वाच्यम् दोषवशादत्र प्रामाण्यं नानुव्यवसायेन गृहीतं तत्र संशयसम्भवात् अन्यथा पुरुषत्वसंशयोपि न स्यात् तस्य चक्षुर्वेद्यत्वात् न चैवं प्रामाण्यस्य स्वतो ग्राह्य-त्वमागतमसति प्रतिबन्धके यावदाश्रयानुव्यवसाय-ग्राह्यत्वं हि मिश्रनये स्वतो ग्राह्यत्वं तच्च न प्रथमा-नुव्यवसायेनाग्रहात् एवञ्चसाध्यप्रसिद्धावनुमानमपि तद्ग्राहकं तद्यथा इदं पुरुषज्ञानं प्रमा करादिमति पुरुषज्ञानत्वात् सम्प्रति जन्यज्ञानवत् यद्वा यन्नैवं तन्नैवं यथा घट इति व्यतिरेकी ॥

अथ प्रथमानुव्यवसायेन प्रामाण्यग्रहे तृतीयक्षणवृत्तिसंशयो न स्यात्तथा हि प्रथममयं घट इति व्यवसायस्ततो ज्ञानज्ञानस्वनिर्विकल्पकं ततो घटमहं जानामीत्यनुव्यवसायस्ततः प्रामाण्याप्रामाण्यकोटि स्मरणं ततो इदं ज्ञानं प्रमा न वेति संसयोनुभवसिद्धः स न स्यात् । प्रथमा व्यवसायेनावच्छेदकत्वांशस्याग्रहात्तद्धर्मवद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वग्रहे तद्धर्मवद्विशेष्यकत्वज्ञानत्वेन हेतुत्वात् । द्वितीयानुव्यवसायेन प्रामाण्यग्रहे तु प्रथमानुव्यवसायोपनीततद्धर्मवद्विशेष्यकत्वं गृह्यत एवेत्यभिप्रायवान्समाधत्ते मास्त्विति । द्वितीयेनेति द्वितीयानुव्यवसायेन प्रामाण्यग्रहे सति तत एव निष्कम्पप्रवृत्तिर्भविष्यतीति भावः । तद्वद्विशेष्यकत्वस्य विशेषणतया तद्वद्विशेष्यकत्वस्य पूर्वंद्वितीयानुव्यवसायात्पूर्वं प्रथमानुव्यवसायेनेति । अयं भावः । यथा प्रथमानुव्यवसाये विशेषणतया व्यवसायोपनीतघटत्ववान् घटत्वं च भातम् घटत्ववद्विशेष्यकत्वम् घटत्वप्रकारकत्वम् च संसर्गमर्यादयाभातम् । तथा द्वितीयानुव्यवसाये प्रथमानुव्यवसायोपनीतं घटत्ववद्विशेष्यकत्वं घटत्वप्रकारकत्वम् च विशेषणतया भातम् । अवच्छेदकत्वांशस्तु संसर्गमर्यादया भात इति घटत्ववद्विशेष्यकत्वावच्छेदेन घटत्वप्रकारकत्वंभातमिति प्रामाण्यं गृहीतमेवेति । दोषवशात् प्रामाण्यग्रहप्रतिबन्धकीभूतदोषवशात् । अन्यथा संशयजनकीभूतदोषसत्वे संशयानुत्पत्तौ कुत इत्यत आह तस्येति । तस्य पुरुषत्वस्य । तथा च पुरुषत्वस्य चाक्षुषसामग्रीसत्वे पुरुषत्वसंशयजनकसाधारणधर्मवद्धर्मिज्ञानरूपसामग्र्यां सत्यां पुरुषत्वसंशयस्तथा प्रामाण्यग्रहस्य ज्ञानग्राहकानुव्यवसायरूपसामग्रीसत्वेपि प्रामाण्यसंशयजनकसामग्र्यां सत्यां प्रामाण्यसंशय एव भवतीति भावः । एवं प्रामाण्यस्यानुव्यवसायगम्यत्वे मिश्रमतविवक्षितस्वतोग्राह्यत्वाभावं व्यवस्थापयति असतीति व्यवसाये त्वप्रामाण्यग्रहरूपप्रतिबन्धकसत्त्वेनुव्यवसायेन प्रामाण्याग्रहादसतीत्युक्तं सर्वप्रामाण्यानां स्वाश्रयग्राहकानुमितिग्राह्यत्वस्य सत्त्वात्परतस्त्वं

स्यादत उक्तं यावदिति । स्वं प्रामाण्यं तदाश्रयो व्यवसायस्तस्यानुव्यवसायग्राह्यत्वमित्यर्थः । प्रामाण्याश्रयीभूतव्यवसायग्राहकाणां यावदनुव्यवसायानां न प्रामाण्यग्राहकत्वं प्रथमानुव्यवसाये व्यभिचारादित्याह तच्चेति । तच्च स्वतस्त्वं च । अग्रहात् प्रामाण्याग्रहात् । इत्थं च प्रथमानुव्यवसायेन प्रामाण्याग्रहान्मिश्रमताभिप्रेतं यत्स्वाश्रयग्राह्यत्वरूपं स्वतस्त्वं निरस्तमिति भावः । अथ द्वितीयानुव्यवसायरूपसाध्यप्रसिद्धावनुमानमपि प्रामाण्यग्राहकमित्याहैवञ्चेति । तथा च न साध्याप्रसिद्धिरिति भावः । तद्ग्राहकं । प्रामाण्यग्राहकं । तत् अनुमानं । संप्रतिजन्यज्ञानवत् अभ्यासदशोत्पन्नपुरुषज्ञानवत् । व्यतिरेकव्याप्त्यभिप्रायादाह यद्वेति यन्नैवं यत्प्रमा न तन्नैवं तत्करादिमति पुरुषत्वप्रकारकज्ञानमपि न ।

अन्ये तु प्रथम प्रामाण्याभाव एव प्रमाण्यं व्यतिरेकिणा साध्यं न च साध्याप्रसिद्धिः न हि व्यतिरेकिणा साध्यहेत्वोर्व्याप्तिर्गृह्यते किन्तु साध्याभावहेत्वभावयोरिति किन्तदप्रसिद्ध्या । न च साध्याप्रसिद्धौ तदभावासिद्धिः प्रतियोगिज्ञानसाध्यत्वात्तदभावस्येति वाच्यम् तस्य प्रतियोगिरूपत्वात् न च प्रतियोगिज्ञाने हि अभावज्ञानं कारणं प्रमाणाभावात् एवञ्च यद्व्यापकतया हेत्वभावो गृहीतस्तेन हेतुना तदभावः सिद्ध्यतीति । न च साध्याज्ञाने कथं तद्विशिष्टज्ञानरूपानुमितिः अप्रामाण्याभावविशेष्यकाया एवानुमितेरभ्युपगमादित्याहुः ॥

अथ प्रामाण्यरूपसाध्यप्रसिद्धिं विना व्याप्तेरग्रहात्कथं प्रामाण्यस्य परतो ग्राह्यत्वमिति पूर्वपक्षे चिन्तामणिमतमाह । अन्येत्विति अयं भावः प्रथममप्रामाण्याभावरूपं प्रामाण्यं व्यतिरेकिणा साध्यं तत एव निष्कम्पप्रवृत्त्युपपत्तेः तदेवसिध्येत् पक्षधर्मतावलात्तद्वति तत्प्रकारकत्वमादाय सिध्यति । तथा हि अयं वह्नित्वेनानुभवः वह्नित्वाभाववति वह्नित्वप्रकारको न अवह्निवृत्ति प्रकारको वान दाहसमर्थमात्रविशेष्यकत्वेसति वह्नित्वप्रकारकत्वात् यन्नैवम् तन्नैवम् । यथा वस्त्रप्रमेति । अथा प्रामाण्याभावरूपसाध्याप्रसिद्धिरिति कथं व्यतिरेक्यनुमानम् । न च घटादावप्रामाण्याभाव रूपं साध्यं प्रसिद्धमिति वाच्यम् । तर्हि तद्वति तत्प्रकारकत्वरूपप्रामाण्यस्येच्छादौ प्रसिद्धस्य ज्ञाने भानसंभवादभावरूपसाध्यानुसरणं व्यर्थमित्यभिप्रायवानाह न चेति । किन्त्विति । व्यतिरेकिणि साध्याभावव्यापकत्वं साधनाभावस्येति भावः । किमिति । तथा चाप्रामाण्या भावरूपसाध्यस्याप्रसिद्धत्वपि न क्षतिरिति भावः । साध्याप्रसिद्ध अप्रामाण्याभावरूपसाध्यप्रसिद्धौ । तदभावाप्रसिद्धिः अप्रामाण्याभावाभावरूपसाध्याभावाप्रसिद्धिः । प्रतियोगीति । अभावज्ञाने प्रतियोगिज्ञानं कारणम् । तथा च प्रामाण्याभावाभावज्ञानेऽप्रामाण्यभावज्ञानं कारणमित्यर्थः तस्य अप्रामाण्याभावाभावस्य । प्रतियोगीति अभावज्ञाने प्रतियोगिज्ञानं कारणम् न तु प्रतियोगिज्ञानेऽभावज्ञानम् तथा चाप्रामाण्याभावाभावस्याप्रामाण्यरूपत्वादप्रामाण्यज्ञाने नाप्रामाण्याभावज्ञानं कारणमित्यर्थः । यद्व्यापकतया साध्याभावव्यापकतया तदभावः सिध्यति । साध्याभावाभावरूपसाध्यं सिध्यति । तथा हि वह्न्यभावव्यापकतया धूमाभावो गृहीतस्तेन धूमेन हेतुना वह्निः सिध्यति तथा च प्रकृते वह्नित्वाभाववति वह्नित्वप्रकारत्वाभावरूपाप्रामाण्याभावरूपसाध्यम् । तदभावस्य व्यापकः दाहसमर्थभावविशेष्यकत्वेसति वह्नित्वप्रकारकत्वरूपहेत्वभाव इति दाहसमर्थमात्रविशेष्यकत्वेसति वह्नि-

त्वप्रकारकत्वेन हेतुना वह्नित्वाभाववति वह्नित्वप्रकारकत्वाभावरूपं साध्यं सिध्यतीति । साध्याज्ञाने निरुक्तसाध्याज्ञाने । तद्विशिष्टज्ञानरूपा साध्यविशिष्टज्ञानरूपा । अप्रमाण्येति । विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयः कारणम् । तथा चाप्रसिद्धसाध्यकस्थले साध्यविशेषकैरानुमितिस्तत्र पक्षतावच्छेदकविशिष्टपक्षज्ञानरूपविशेषणतावच्छेदकप्रकारकनिश्चयस्यापेक्षितत्वादिति भावः ।

आस्तां तावत्तथापि तद्वति तत्प्रकारकत्वग्रहे उक्तैव गतिः । किञ्च करादिमति पुरुषत्वज्ञानहेतुत्वं केन ग्राह्यं अनुव्यवसायेनेति चेत् तर्हि पुरुषत्ववति तत्प्रकारकत्वग्रहः केन वार्य्यतां यतस्तमपहाय एव सृष्ट्यादर इति । अन्ये तु तत्प्रकारकज्ञानत्वमेव प्रामाण्यं । न च रजतत्वप्रकारकं शुक्तिज्ञानमिति प्रमाणं स्यात् तदसिद्धेः । न हि यत्र यत्रास्ति तत्र तत्प्रकारकज्ञाने मानमस्ति कथन्तर्हि शुक्ताविदं रजतमिति व्यवहार इति चेत् तत्र व्यवहर्त्तव्यरजतत्वासंसर्गाग्रहात् रजतत्वप्रकारकशुक्तौ प्रवृत्तिरपि तत्रेष्टताच्छेदकरजतत्वस्या संसर्गाग्रहात् ॥

आस्तामिति । तत् । आप्रामाण्याभावरूपप्रामाण्यं तथा चाप्रामाण्याभावरूपं प्रामाण्यं व्यतिरेकेण साध्यं तथाऽपि तद्वति तत्प्रकारकत्वग्रहे तु द्वितीयानुव्यवसायेन गृह्यत इत्युक्तैव गतिरित्यर्थः । न चाप्रामाण्याभावरूपं प्रामाण्यं व्यतिरेकेण साध्यं तदेव वा सिध्येत्पक्षधर्मतावलात्तद्वति तत्प्रकारकत्वमादायैव सिध्यतीत्यत आह किं चेति । अयं पुरुषत्वेनानुभवः पुरुषत्वाभाववति पुरुषत्वप्रकारको न करादिमति

पुरुषत्वज्ञानत्वादित्याद्यनुमानेन करादिमति पुरुषत्वज्ञानत्वं केन ग्राह्य-मित्यर्थः । हेतुग्रहे स्वतोग्राह्यत्वमिति शङ्कते अनुव्यवसायेनेति । तर्हि करादिमति पुरुषत्वज्ञानत्वस्य स्वतोग्राह्यत्वे । तत्प्रकारकत्वग्रहः पुरुषत्व-प्रकारकत्वग्रहः । अत इति । तद्वितत् प्रकारकत्वरूपप्रमाण्यस्य द्वितीयानुव्यवसायग्राह्यत्वं परित्यज्याप्रामाण्याभावरूपप्रामाण्यं व्यतिरेकिणा साध्यमित्यादिकुसृष्टिमात्रमित्यर्थः । अथ सर्वेषां ज्ञानानां यथार्थत्वा-त्प्रामालक्षणे तद्वद्विशेष्यकत्वं व्यर्थमिति प्राभाकरमतमाहान्ये त्विति तत्प्र-कारत्वमात्रं प्रामाण्यं भ्रमसाधारणमित्याह न चेति । तदसिद्धेः । रजतत्व-प्रकारकशुक्तिज्ञानस्यासिद्धेः । तत्र व्यहर्तव्येति । रजतमिति व्यव-हारविषयीभूतशुक्तौ रजतत्वासम्बन्धग्रहाभावाच्छुक्तौ रजतमिति व्यव-हार इत्यर्थः । इष्टेति । इष्टं रजतं तथा चेष्टतावच्छेदकीभूतरजतत्वा सम्बन्धाग्रहाच्छुक्तौ रजतत्वप्रकारिका प्रवृत्तिर्भवत्येवेत्यर्थः ।

**अथ रजतत्वप्रकारकप्रवृत्तौ रजतत्वप्रकारकं ज्ञानं प्रमास्थले कारणं क्लृप्तं तथा च तेन विना कथं शुक्तौ प्रवृत्तिस्स्यादिति चेन्न तत्रापि रजतत्वासंसर्गाग्रहस्य हेतुत्वात् । अथासंसर्गाग्रहस्याविशेषात्क्वचित्सम्वादिनी प्रवृत्तिः क्वचिद्विसम्वादिनीति कुतो नियम इति चेन्न तद्वति तत्संसर्गाग्रहस्य तत्प्रकारकसम्वादिन्यां तदभाववति तत्संसर्गाग्रहस्य तत्प्रकारकविसम्वादिन्यां प्रवृत्तौ हेतुत्वात् । अत्रोच्यते लाघवाद्रजतत्वसंसर्गग्रहो रजतत्वप्रकारकप्रवृत्तौ हेतुः न तु रजतत्वासंसर्गाग्रहो गौरवात् । न च शुक्तौ तदसम्भवः विशेषणज्ञानं विशेष्येन्द्रियसन्निकर्षस्तयोरसंसर्गाग्रह**

एव हि विशिष्टज्ञाने हेतुः। अस्ति चात्रापि विशेषणर-जतत्वस्य ज्ञानं विशेष्यरूपशुक्तीन्द्रियसन्निकर्षस्तयो-रसंसर्गाग्रहश्च। अथ रजतत्वेन्द्रियसन्निकर्षविरहा-त्कथं तत्प्रकारकं प्रत्यक्षमिति चेत् सन्निहितं यत्र रजतं तत्र संयुक्तसमवायस्यान्यत्र ज्ञानस्य सन्निकर्षस्य स्वात्। ज्ञानस्य सन्निकर्षत्वे किं मानमिति चेत् रजत-त्वप्रकारकं प्रत्यक्षमित्यवहि तत्रैव किं मानमिति तत्प्रकारिका प्रवृत्तिरिति संक्षेपः ॥

## इति महामहोपाध्यायश्रीचूडामणिविरचितायां न्यायसिद्धान्तमञ्जर्य्यां शब्दपरिच्छेदस्समाप्तः ॥

रजतत्वासम्बन्धाग्रहस्य तत्प्रवृत्तिं प्रति कारणत्वमिति सङ्कते अथेति भवतु तादृशप्रवृत्तौ रजतत्वप्रकारकं ज्ञानं हेतुस्तथापि रजतत्वासंसर्गा-ग्रहस्य कारणत्वं केन वार्यमित्यभिप्रायवानाह तत्रापीति। अविशेषात् । जतशुक्तिसाधारण्यात् । गौरवादिति । अभावद्वयप्रवेशे गौरवादित्यर्थः । तदसंभवः रजतत्वसंसर्गग्रहासम्भवः। अत्रापि शुक्तौ रजतमिति ज्ञानेपि अन्यत्र । असन्निहिते रजतत्वे तत्रैव शुक्तौ रजतत्वप्रत्यक्ष एव तत्प्रकारिका रजतत्वप्रकारिका। संक्षेप इति । अयं भावः प्रमापरत एवोत्पद्यते न तु स्वतः । अत्र यथा ज्ञानप्रामाण्यं ज्ञानग्राहकसामग्रीग्राह्यं न वेति विप्र-तिपत्ति स्तथा ज्ञानप्रामाण्यं ज्ञानसामग्रीमात्रजन्यं नवेति विप्रतिपत्तिः। ज्ञानसामान्यसामग्रीजन्यत्वे प्रमायाश्त्वप्रमापेक्षया वैलक्षण्यं न स्यादिति । अथैकजातीयसामग्रीसत्वे यथा पटयोर्वैलक्षण्यं तथाप्रमाप्रमयोरपीति चेत् । प्रमायाः सामान्यसामग्रीजन्यत्वात्स्वत एवोत्पद्यते । अप्रमायास्तु दोषरूपज्ञानव्यतिरिक्तसामग्रीजन्यत्वात्परतस्त्वमिति। अत्रोच्यते अप्रमाया

यथादोषजन्यत्वं तथा प्रमाया अपि गुण । जन्यत्वं तथाचानित्यप्रमात्वं कार्यतावच्छेदकं बाधकमन्तरेण कार्यमात्रवृत्ति धर्मत्वात् अप्रमात्ववदिति प्रत्यक्षप्रमायां भूयोवयवेन्द्रियसन्निकर्षः । अानुमितौ यथार्थलिङ्गपरामर्षः उपमितौ सादृश्य ज्ञानं गुणः शब्दप्रमायां यथार्थवाक्यार्थज्ञानं गुण इति जन्यत्वात्प्रमा परतएवोत्पद्यत इति दिक् । तर्कार्णवे खेलनचञ्चला ये पश्यन्तु ते ग्रन्थममुम्प्रदीपं यतो निवेशा निखिलं निरीक्ष्य मुकोयि गीर्वाणगुरूपमेयः ॥ १ ॥ श्रीमन्नृसिंहात्मजयादवेन श्रीरामकृष्णस्य गुरोः प्रसादात् विभाव्य सत्तर्कसमूहसारं व्याख्याकृता सा शुभदास्तु लोके ॥२॥ मदीयमत्नो हि न बुध्यते यैर्नायं हि यत्नः खलु तेषु योग्यः सुहृत्कदाविद्वविताच्च दक्षः सूर्यक्रियाया घटकोप्यनन्तः । श्रीरामो जयति तराम् ॥ ३ ॥



महामण्डल शास्त्र प्रकाशक समिति प्रेस, बनारस, सिटी ।

[1]निःसाध्वसमिदं वाक्यं धर्मादभिहितं बहिः।
यस्मात्स्वमांसमुद्दिष्टं युष्माभिरवमन्य माम् ॥ १६ ॥
[2]स्वमांसवृत्तयस्तस्माद्वासिष्ठा इव [3]जातितः ।
[4]पतिताब्दसहस्रं तु कुत्सिता विचरिष्यथ ॥ १७ ॥
[5]इति शापाग्निना दग्ध्वा [6]पुत्रांस्तान् कुशिकात्मजः।
शुनःशेफमुवाचेदं वचनं परिसान्त्वयन् ॥ १८ ॥
[7]यदा पशुत्वे पुत्र त्वं प्रोक्षितः स्यास्तदा [8]जप।
इमं मन्त्रं मया प्रोक्तमिन्द्राग्निष्टवसंयुतम् ॥ १९ ॥
जपन्तमेतन्मन्त्रं त्वां मोक्षयिष्यति वासवः ।
पशुत्वादस्य चाविघ्नं भविष्यति महीपतेः ॥ २० ॥
[9]शुनःशेफोऽथ तं मन्त्रमधीत्य त्वरितस्तदा ।

---

1. For this Sl. C. 16 निःसाध्वसमिदं प्रोक्तं धर्म्मादपि विगर्हितं । अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणं ॥ 2. For this Sl. C. 17. श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु । पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ ॥ P. has. श्वमांसवृत्तय etc. 3. G. 17. जातिषु but P. has जातितः । 4. G. 17. पतिता वर्षसहस्रं etc; P. has पतिताः शतवर्षाणि etc. 5. For this Sl. C. 18. कृत्वा शापसमायुक्तान् पुत्रा मुनिवरस्तदा । शुनःशेफमुवाचार्त्तं कृत्वा रक्षां निरामयां ॥ 6. G. 18. पुत्रान् स्वान् etc. 7. For this, and the following Sl. C, 19. and. 20. (a) पवित्रपाशैराबद्धो रक्तमाल्यानुलेपनः । वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर ॥ (b) इमे च गाथे द्वे दिव्ये गायेथा मुनिपुत्रक । अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि ॥ (a) Before this Sl. V. & S. read the line : इदमाह मुनिश्रेष्ठो विश्वामित्रो महातपाः । (b) Before this Sl. V & S. read the line : इन्द्राविष्णुसुरश्रेष्ठौ स्तौहि त्वं मुनिपुत्रक । 8. G. 19. जपेः ; P. is illegible here. 9. For This Sl. B. 21. शुनःशेफो गृहीत्वा ते द्वे गाथे सुसमाहितः । त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥

उत्पत्य हृष्टो राजानमम्बरीषमभाषत ॥ २१ ॥
[1]एहि राजन्नितः शीघ्रं नय मां यज्ञमात्मनः ।
पशुं मां मन्त्रतः प्रोक्ष्य दीक्षामेतां समापय ॥ २२ ॥
तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमन्वितः ।
जगाम नृपतिः [2]श्रीमान् स्वमेव यजनं तदा ॥ २३ ॥
[3]सदस्यानुमतः सोऽथ पवित्रं कृतलक्षणम् ।
शुनःशेफं पशुं यूपे निबबन्धानुमन्त्रितम् ॥ २४ ॥
[4]स बद्ध ऋग्भिस्तुष्टाव तथेन्द्रं हरिवाहनम् ।
भागार्थिनमनुप्राप्तं स्वरेणोच्चैर्विनादयन् ॥ २५ ॥
[5]तस्मै प्रीतः सहस्राक्षस्तदा प्रादादभीप्सितम् ।
आयुरिष्टं यशश्चाग्र्यं शुनःशेफाय राघव ॥ २६ ॥
[6]स तु राजा क्रतुफलं तदावाप यथेप्सितम् ।
धर्मं यशः श्रियं चाग्र्यां सहस्राक्षप्रसादतः ॥ २७ ॥
[7]विश्वामित्रोऽपि धर्मात्मा चचारोग्रं महत् तपः ।

---

1. For this Sl. B. 22 राजसिंह महाबुद्धे शीघ्रं (a) गच्छावहे, वयम् । निवर्तयस्व राजेन्द्र दीक्षां च समुपाहर ॥ (a) V. has गच्छामहे, ( a better reading ). 2. B, 23. शीघ्रं यज्ञवाटमतन्द्रितः । 3. G, 24. सदस्यानुमते &c. B. 24. सदस्यानुमते राजा पवित्रकृतलक्षणं । पशुं रक्ताम्बरं कृत्वा यूपे तं (a) समबन्धयत् ॥ (a) S. स बबन्ध ह । 4. For this Sl. B. 25. स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ । इन्द्रमिन्द्रानुजं चैव यथावन्मुनि(a)पुत्रकः ॥ (a) B V. पुङ्गवः 5. For this Sl. B. 26. ततः प्रीतः सहस्राक्षो रहस्यस्तुतितोषितः । दीर्घमायुस्तदा प्रादाच्छुनःशेपाय वासवः ॥ 6. For this Sl. B. 27. स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् । फलं बहुगुणं राम सहस्राक्षप्रसादजं ॥ 7. For this Sl. B. 28. विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपः । पुष्करेषु नरश्रेष्ठ दशवर्षशतानि च ॥

पुष्करेष्वेव वर्षाणां सहस्रं नियतव्रतः ॥ २८ ॥

॥ इत्यार्षे रामायणे वालचरिते आदिकाण्डे
विश्वामित्रमाहात्म्ये अम्बरीषयज्ञः ॥

---

## XLV.

[1]पूर्णे वर्षसहस्रेऽथ व्रतान्ते मुनिसत्तमम् ।
अभ्यगच्छन् सुरा राम तत्तपो बलविस्मिताः ॥ १ ॥
[2]तत्रैवमब्रवीद् ब्रह्मा पुनः सुरुचिरं वचः ।
ऋषिस्त्वमसि भद्रन्ते निवर्त्त तपसोऽधुना ॥ २ ॥
[3]इत्युक्त्वानन्तरं ब्रह्मा जगामाशु यथागतम् ।
विश्वामित्रोऽपि तच्छ्रुत्वा चचारैव पुनस्तपः ॥ ३ ॥
[4]आजगामाप्सरो राम तत्प्रलोभयितुं रहः ।
मेनका नाम सुश्रोणी विश्वामित्राश्रमं प्रति ॥ ४ ॥
पुष्करे सा सुचार्वङ्गी स्नातुं समुपचक्रमे ।
तां ददर्शाद्भुताकारां मेनकां कुशिकात्मजः ॥ ५ ॥

---

1. For this Sl. G. LXV. 1. पूर्णे वर्षसहस्रे तु (a) व्रतस्नातं महामुनिम् । अभ्यागच्छन् सुरा राम तपोबलसमाहिताः । (a) P. has तपःस्नातं &c. B. LXIII. 1. पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिं । अभ्यगच्छन् सुराः सर्वे तपःफलचिकीर्षवः ॥ 2. For this Sl. B. 2 अब्रवीत् सुमहातेजा ब्रह्मा सुरुचिरं वचः । ऋषिस्त्वमसि भद्रन्ते स्वार्जितैः कर्मभिः शुभैः ॥ 3. For this Sl. B. 3. तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्य (a) गात् । विश्वामित्रो महातेजा भूयस्तेपे महत्तपः ॥ (a) S. यात्. 4. Before this Sl. of one text G. (4) reads this line : तत्र चैनं तपस्यन्तं कालस्य महतस्तपः । For this and the following Sl. B. 4-5. ततः कालेन महता मेनका (a) परमाप्सरा । पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ॥ तां

[1]रूपेणाप्रतिमां राम श्रियं मूर्त्तिमतीमिव ।
तां दृष्ट्वा चारुसर्वाङ्गीं मेनकां निर्जने वने ॥ ६ ॥
जलप्रक्लिन्नवसनां मनोहरतराकृतिम् ।
कन्दर्पवशगोऽभ्येत्य मुनिर्वचनमब्रवीत् ॥ ७ ॥
[2]का त्वं कस्य [3]कुतश्चेदं वनं भद्रेऽभ्युपागता ।
एहि विश्राम्यतां भीरु ममाश्रमपदे शुभे ॥ ८ ॥
मेनका तद्वचः श्रुत्वा विश्वामित्रमभाषत ।
अप्सरा मेनका नाम त्वत्प्रीत्याहमुपागता ॥ ९ ॥
रोचते यदि ते ब्रह्मन् भजमानां भजस्वमाम् ।
इति तां रुचिरं वाक्यं भाषमाणामनिन्दिताम् ॥ १०॥
पाणौ गृहीत्वा भगवानाश्रमं प्रविवेश ह ।
तया च सह वर्षाणि पञ्च पञ्च च राघव ॥ ११ ॥
[4]विश्वामित्रस्य रमतः क्षणवद् व्यतिचक्रमुः ।
हृतविज्ञानबुद्धिर्हि तया मुनिरसौ तदा ॥ १२ ॥

ददर्श महातेजा मेनकां कुशिकात्मजः । (a) परमाप्सराः 1. For this, and the following Sl. B. 5-6. रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥ कन्दर्पदर्पवशगो मुनिस्तामिदमब्रवीत्। 2. For this, and the following 3 Slokas B 6-8 अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे ॥ अनुगृह्णीष्व भद्रन्ते मदनेन विमोहितम् । इत्युक्ता सा वरारोहा तत्रावासमथाकरोत् ॥ तपसो हि महाविघ्नो विश्वामित्रमुपागमत् । तस्यां वसत्यां वर्षाणि पञ्च पञ्च च राघव ॥ 3. G. 8. कुतो वेदं &c. 4. For this and the following 4 Slokas, B. 9-13 विश्वामित्राश्रमे सौम्ये सुखेन व्यतिचक्रमुः । अथ काले गते तस्मिन् विश्वामित्रो महामुनिः ॥ सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः । बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन ॥ सर्वं सुरा

तानि वर्षाण्यतीतानि बुबोधैकमहर्यथा ।
अथ काले गते तस्मिन् बुद्ध्वा बुध्वात्मविक्रियाम् ॥१३॥
जगादैतत्तदावाक्यं विश्वामित्रस्तपोधनः ।
आमर्षस्तच्च मे ज्ञानं तत्तपः स च निश्चयः ॥ १४ ॥
नष्टान्येकपदेनेह सर्वथा किमपि स्त्रियः ।
अनया लोभयित्वा मां तपोऽपहरणं कृतम् ॥ १५ ॥
इन्द्रप्रियं चिकीर्षन्त्या तस्मादेनां त्यजाम्यहम् ।
ततस्तां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ॥ १६ ॥
[1]पुष्कराणि परित्यज्य जगामोत्तरपर्वतम् ।
नैष्ठिकीं बुद्धिमास्थाय जेतुं काममर्मर्षितः ॥ १७ ॥
कौशिकीतीरमासाद्य तपस्तेपे [2]सुदारुणम् ।
[3]सहस्रमपरं राम वर्षाणाममितद्युतिः ॥ १८ ॥
[4]चचार दुश्चरं तेन देवा भयसमन्विताः ।
समेत्य मन्त्रयामासुः सर्षिसङ्घाः सवासवाः ॥ १९ ॥
महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ।

---

णां कर्मैतत्तपोपहरणं महत् । अहो रात्रापदेशेन गताः संवत्सरा दश ॥ कामक्रोधा-भिभूतस्य विघ्नोऽयं प्रत्युपस्थितः । स निःश्वसन्मुनिवरः पश्चात्तापेन दुःखितः ॥ भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थितां । मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिका-त्मजः ॥ 1. For this Sl. B. 14. उत्तरं पर्वतं राम विश्वामित्रो जगाम ह । स कृत्वा नैष्ठिकीं बुद्धिं (a) जेतुकामो महायशाः ॥ (a) S. जेतुं कामं &c. ( a better reading ). 2. B. 15. दुरासदं. 3. B. 15. तस्य वर्षसहस्राणि घोरं तप-श्चचार सः । 4. For this Sl. B. 16. उत्तरे पर्वते राम देवतानामभूद्भयं । अमन्त्र

[1]मा च नस्तपसोग्रेण तापयत्येवमुद्यतः ॥ २० ॥
[2]निवर्त्यतामयं ब्रह्मंस्तपसोऽग्र्यादिति प्रभो ।
[3]देवानां निश्चयं श्रुत्वा ब्रह्मा लोकपितामहः ॥२१॥
[4]अब्रवीदभिग[5]म्येदं विश्वामित्रं तपोनिधिम् ।
महर्षे विनिवर्तस्व तपसः कुशिकात्मज ॥ २२ ॥
[6]महत्त्वमृषिमुख्यानां [7]ददानि तव सुव्रत ।
ब्रह्मणस्तद्वचः श्रुत्वा[8] विश्वामित्रस्तपोधनः॥ २३ ॥
प्राञ्जलिः प्रणतो [9]वाक्यं प्रत्युवाच पितामहम् ।
[10]ब्रह्मर्षिशब्दं [11]भगवन् दुर्लभं तपसार्जितम् ॥ २४ ॥
लभेयं त्वत्प्रसादेन यदि मेऽस्ति तपश्चितम् ।
तमुवाच ततो ब्रह्मा न तावत् त्वं जितेन्द्रियः ॥ २५ ॥
कामक्रोधावनिर्जित्य कथं ब्रह्मत्वमिच्छसि ।
जयेन्द्रियाणि तावत् त्वं कामक्रोधौ च कौशिक ॥२६॥

---

यन् समागम्य सर्वे सर्षिगणाः सुराः ॥ 1 For this, and the following line of our text are wanting in B. 2. G. 21 निवर्ततामयं &c. but P. has निवर्त्यतामयं &c. 3. B. 17. देवतानां वचः श्रुत्वा सर्वलोकपितामहः ॥ 4. For this Sl. B. 18. अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनं । महर्षे स्वागतं वत्स तपसोग्रेण तोषितः ॥ 5. G. 22. म्येवं &c. 6. For this Sl. B. 19. महत्त्वमृषिमुख्यत्वं ददामितव कौशिक । ब्रह्मणस्तु वचः &c. 7. G. 23. ददामि &c but P. has ददानि &c. 8. G. 24. स्तुवचः &c. but P has स्तद्वचः &c. 9. B. 20. भूत्वा &c. 10. For this line, and the following 3 Slokas B. 20-22. ब्रह्मर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः ॥ यदि मे (a) भगवानाह ततोऽहं विजितेन्द्रियः । (a) V. & S. भगवानाह &c. 11. P. च ब्रह्मन् दुर्लभं &c. तमुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः ॥ ततस्तु मुनिशार्दूल इत्युक्त्वा त्रिदिवं गतः ॥

ततः परं त्वं ब्रह्मत्वं समवाप्स्यसि दुर्लभम् ।
इत्युक्त्वा प्रययौ ब्रह्मा पुनरेव यथागतम् ॥ २७ ॥
[1]विश्वामित्रोऽपि तत्रैव तेपे घोरतरं तपः ।
ऊर्ध्वबाहुर्निरालम्ब एकपादाग्रविष्ठितः ॥ २८ ॥
[2]वायुभक्षः स्थितः स्थान एकस्मिन् स्थाणुवत् स्थिरः ।
घर्मे पञ्चतपा भूत्वा वर्षास्वभ्रावकाशिकः ॥ २९ ॥
[3]शिशिरे जलशायी च भूत्वा तेपे महत् तपः ।
एवं वर्षशतं [4]साग्रं घोरमातिष्ठतस्तपः ॥ ३० ॥
[5]समस्ता दिवि काकुत्स्थ देवा भय[6]मुपागमन् ।
संभ्रमं परमास्थाय ततः शक्रः सुराधिपः ॥ ३१ ॥
[7]चिन्तयित्वा तपोविघ्नमुपायं रघुनन्दन ।
[8]आहूयाप्सरसं रम्भां मरुद्गणावृतः प्रभुः ।
उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥ ३२ ॥

॥ इत्यार्षे रामायणे बालचरिते शतानन्दवाक्ये
मेनकानिर्वासः ॥

---

1. For this, and the following Sl. B. 22-23. विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः । ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन् । घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः । 2. G. 29. वायुभक्ष्यः &c. but P. has वायुभक्षः &c. 3. For this Sl. B. 24. शिशिरे सलिले शायी रात्र्यहानि तपोधनः । एवं वर्षसहस्रं हि तपो घोरमुपागमत् ॥ 4. G. 31. घोरं साग्र तप उपासतः । 5. For this Sl. 25. तस्मिन्सन्तप्यमाने तु विश्वामित्रे महामुनौ । सन्तापः सुमहानासीत् सुराणां वासवस्य च ॥ 6. G. 31. मुपाविशन्, but P. has मुपागमन् 7. This line wanting in B. 8. For this line B. 26. रम्भामप्सरसं शक्रः सर्वैः सह मरुद्गणैः ।

## LXVI

[1]सुरकार्यमिदं रम्भे कर्त्तुमर्हसि भामिनि ।
लोभयस्व तपस्यन्तं कौशिकं रूपसम्पदा ॥ १ ॥
[2]एवमुक्ता ततो रम्भा सहस्राक्षेण धीमता ।
प्राञ्जलिः परमोद्विग्ना प्रत्युवाच सुराधिपम् ॥ २ ॥
[3]कोपनश्च तपस्वी च विश्वामित्रः शचीपते ।
स कोपं नियतं देव मय्युत्स्रक्ष्यति कोपितः ॥ ३ ॥
[4]तस्मात् त्वं मे सुरपते प्रसादं कर्त्तुमर्हसि ।
[5]नास्योत्सादयितव्यानि तेजांसि च तपांसि च ॥४॥
तामुवाच[6]ततः शक्रो वेपमानां कृताञ्जलिम् ।
[7]रम्भे त्वं कुरु मा भैषीः प्रियं मे प्रियभाषिणि ॥ ५ ॥
कोकिलो हृदयग्राही [8]काले कुसुमितद्रुमे ।
अहं कन्दर्पसहितः [9]स्थास्ये तव समीपतः ॥ ६ ॥
[10]मनोहरं [11]त्वं रम्भोरु कृत्वा रूपमथाद्भुतम् ।

---

1. For this Sl. B. LXIV. 1. सुरकार्यमिदं रम्भे कर्त्तव्यं सुमहत्त्वया । लोभनं कौशिकस्येह काममोहसमन्वितं ॥ 2. For this Sl B. 2. तथोक्ता साप्सरा राम सहस्राक्षेण धीमता । व्रीडिता प्राञ्जलिर्वाक्यं प्रत्युवाच सुरेश्वरं ॥ 3. For this Sl. B. 3. अयं सुरपते घोरो विश्वामित्रो महामुनिः । (a) क्रोधमुत्स्रक्ष्यते घोरं मयि देव न संशयः ॥ (a) V. क्रोधमुत्स्रजते क्रूरं &c. 4. For this Sl. B 4. ततो हि मे भयं देव प्रसादं कर्त्तुमर्हसि । एवमुक्तस्तया राम सभयं भीतया तदा ॥ 5. G. 4. नास्य सादयि &c, P. नात्युसादयि &c. 6. B. 5. सहस्राक्षो वेप &c. 7. G. 5. त्वं रम्भे &c B 5. माभैषी रम्भे भद्रन्ते कुरुष्व मम शासनं ॥ 8. B. 6. माधवे रुचिरद्रुमे । 9. B.6. स्थास्यामि तव पार्श्वतः । 10. For this Sl. B. 7. त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरं । तमृषिं कौशिकं (a) भद्रे भेदयस्व तपस्विनं ॥ (a) V. रम्भे &c. 11. G. 7. तु &c.

तमृषिं रुचिरापाङ्गि गच्छ लोभयितुं वने ॥ ७ ॥
[1]इत्युक्ता देवराजेन रम्भा सुरुचिरानना ।
कृत्वा रूपं[2]मनोहारि[3]विश्वामित्रमलोभयत् ॥ ८ ॥
[4]इन्द्रोऽपि कोकिलो भूत्वा कन्दर्पसहितस्तदा ।
[5]वल्गुवागभितस्तस्यास्तस्थौ राम विलोभयन् ॥ ९ ॥
कोकिलस्य [6]स्वनं श्रुत्वा वल्गु व्याहरतो वने ।
रम्भागीत[7]स्वनं श्रुत्वा मधुरं सुमनोहरम् ॥ १० ॥
मारुतञ्च सुखस्पर्शं दिव्य[8]पुष्पादिवासितम् ।
आयान्तं समभिप्रेक्ष्य कामिनां मदवर्द्धनम् ॥ ११ ॥
सहसा हृतचित्तात्मा मदनेन महामुनिः ।
गीतस्वने [9]चानुसृत्य रम्भां दृष्ट्वा मनो[10]हराम् ॥१२॥
शब्देनापहृतस्तेन रम्भासन्दर्शनेन च ।
स्मृत्वा[11]चात्मतपो भ्रंशं मुनिः शङ्कामुपा[12]गतः ॥१३॥
[13]सहस्राक्षस्य तत् कर्म दृष्ट्वाथ ध्यानचक्षुषा ।

---

1. For this Sl. B. 8. सा श्रुत्वा वचनं तस्य कृत्वा (a) रूपमनुत्तमं । लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥ (a) S रूपमनन्तरं 2. G. 8 मनोहरं &c. but P. has मनोहारि &c. 3. P विश्वामित्रमनोऽहरत । 4 For this and the following 4 Slokas B. 9 & 10. कोकिलस्य तु शुश्राव वल्गु व्याहरतः स्वनं । सम्प्रहृष्टेन मनसा स चैनामन्ववैक्षत ॥ अथ तस्य च शब्देन गीतेनाप्रतिमेन च । दर्शनेन च रम्भाया मुनिः सन्देहमागतः ॥ 5. P. वल्गुवागभितस्तस्थौ विश्वामित्र मनोऽहरत् ॥ 6. G. 10 वचः &c 7. G. 10. स्वरं &c. 8 G. 11. गन्धादि &c, but P. has पुष्पादि &c. 9. G. 12. नानु &c 10 P रमां 11. G. 13 चात्र &c. 12. G. 13 गमत्. 13. For this Sl. B. 11. सहस्राक्षस्य

रम्भां कोपसमाविष्ट इदं वचनमब्रवीत् ॥ १४ ॥
[1]यस्माल्लोभयसे [2]मां त्वमात्मनोगुणसम्पदा ।
तस्मात् [3]शैलमयी भूत्वा स्थास्यसीह तपोवने ॥१५॥
[4]वर्षाणामयुतं पूर्णं मच्छापकलुषीकृता ।
ब्राह्मणस्तु तपःसिद्ध उद्धर्ता ते भविष्यति ॥ १६ ॥
[5]रम्भां शैलमयीं कृत्वा विश्वामित्रो महामुनिः ।
सन्तापमगमत् तीव्रं क्रोधस्य वशमागतः ॥ १७ ॥
[6]दृष्ट्वा तया कृतां रम्भां सद्यः शैलमयीं रुषा ।
कन्दर्पसहितश्चैव दृष्ट्वा[7]नष्टं पुरन्दरम् ॥ १८ ॥
[8]स्वपापहारञ्च पुनः कृतं दृष्ट्वा तथात्मनः ।
अजितेन्द्रियोऽस्मीति भृशं जगर्हात्मानमात्मना ॥१९॥

---

तत्सर्वं विज्ञाय मुनिपुङ्गवः रम्भां (a) क्रोधसमाविष्टः शशाप कुशिकात्मजः ॥
a) S. कोप &c. 1. For this Sl. B. 12. यस्मां लोभयसे रम्भे कामक्रोधजयैषिणं । दशवर्षसहस्राणि शैलो स्थास्यसि दुर्भगे ॥ 2. G 15. रम्भे मामात्मगुण &c. 3. G. 15. शिलामयी &c. but P. has शैलमयी &c. 4. For this Sl. B. 13. ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः । उद्धरिष्यति रम्भे त्वां मत्क्रोधकलुषी कृतां ॥ 5. For this Sl. B. 14 एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः । अशक्नुवन् धारयितुं कोपं सन्तापमात्मनः ॥ 6. For this, and the following Sl. B. 15. & 16. तस्य शापेन महता रम्भा शैली तदा भवत । वचः श्रुत्वा च कन्दर्पो महर्षेः स च निर्गतः ॥ कोपेन च महातेजास्तपोपहरणे कृते । इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥ 7. G. 18. तत्र &c. but P. has नष्टं &c. 8. G. 19. तपसोऽपहारं &c. P. has तपोऽपहारं च ( which has been changed to स्वपाप &c. in our text by the writer's mistake )

[1]अथ हैमवतीं[2]राम दिशं त्यक्त्वा महामुनिः ।
पूर्वां दिशमुपागम्य तपस्तप्तुं प्रचक्रमे ॥ २० ॥
[3]मौनं वर्षसहस्रन्तु कृत्वा स कृतनिश्चयः ।
वज्रस्थानमुपाश्रित्य तस्थौ गिरिरिवाचलः ॥ २१ ॥

इत्यार्षे रामायणे बालचरिते आदिकाण्डे शतानन्द वाक्ये रम्भाशापः ॥

---

## LXVII.

[4]स्थाणुभूते स्थिते तस्मिन् मुनौ मौनव्रतान्विते ।
आवेष्टुं नान्तरं कामो न क्रोधो द दृशे मुनेः ॥ १ ॥

---

1. The first 2 Slokas of the next chap. in B. correspond to this & the next Sl. our text. B. G. 20. पुण्यां &c, P. रम्यां &c 2. For this Sl B. 17 20 बभूवास्य मनश्चिन्ता तपोऽपहरणे कृते । (a) नैवं क्रोधं गमिष्यामि न च वक्ष्ये कथञ्चन ॥ अथ वा नोच्छ्वसिष्यामि संवत्सरशतान्यपि । अहं हि शोषयिष्यामि आत्मानं विजितेन्द्रियः ॥ तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं तपसार्जितम् । अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ॥ न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः एवं वर्षसहस्रस्य दीक्षां स मुनि पुङ्गवः ॥ चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ॥ (a) V. & S. नैव &c. 3. The first two Sl. of B LXV. are :–अथ हैमवतीं राम दिशन्त्यक्त्वा महामुनिः । पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणं ॥ मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमं । चकाराप्रतिमं राम तपः परमदुष्करं ॥ These correspond to the last 2 Sl. of the last chap. of our text. 4 For the first Sl of this Chap. of one text. B. 3. पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिं । विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ After this B reads the following lines, which are wanting in the Bengal recension : स कृत्वा निश्चयं राम तप आतिष्ठताव्ययं तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥ भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम

[1]अक्रोधनमकामञ्च तं दृष्ट्वा शान्तचेतसम् ।
तपसोग्रेण संसिद्धिं परां गतमरिन्दम ॥ २ ॥
संभ्रान्तमनसो भीता ब्रह्माणं[2] तपसोनिधिम् ।
ऊचुरभ्येत्य विबुधाः सर्वे शक्रपुरोगमाः ॥ ३ ॥
[3]उपायैर्बहुभि[4]र्ब्रह्मन् विश्वामित्रस्तपो[5]धनः ।
क्रोधितो लोभितश्चैव तपसा च विवर्द्धितः ॥ ४ ॥
[6]न ह्यत्र वृजिनं देव दृश्यते स्वल्पमप्यथ ।
[7]यथा न दीयते तस्मै मनसो यदभीप्सितम् ॥ ५ ॥
[8]नाशयिष्यति लोकांस्त्रीनेष वै सचराचरान् ।
व्याकुलाश्च दिशः सर्वा नच सूर्यः प्रकाशते ॥ ६ ॥

---

न्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ तस्मै दत्त्वा तदा सिद्धं (a) सर्वं विप्राय-निश्चितः । निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥ न किञ्चिदवदद्विप्रं मौनव्रतमुपास्थितः । तथैवासीत् पुनर्मौनमनुच्छ्वासं चकार ह ॥ अथ वर्षसहस्रं च नोच्छ्वसन्मुनिपुङ्गवः । तस्यानुच्छ्वसमानस्य मूर्ध्नि धूमो व्यजायत । त्रैलोक्यं येन सम्भ्रान्तमातापितमिवाभवत् । (a) V. सिन्नः (b) S. पुनर्मौनं चकार ह (c) S. दीपितमिवा &c. 1. For this, and the following Sl. B. 9-10. ततो देवर्षिगन्धर्वाः पन्नगोरगराक्षसाः ॥ मोहितास्तपसा तस्य तेजसा मन्दरश्मयः । कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ॥ 2. G. 3. तपसां &c, 3. For this Sl. B. 11. बहुभिः कारणैर्देव विश्वामित्रो महामुनिः । लोभितः क्रोधितश्चैव तपसा चाभि वर्द्धते ॥ 4. G. 4 विप्र &c, P. is illegible here. 5. G. 4, निधि but P. has धनः । 6. For this Sl. B. 12. नह्यस्य वृजिनं किञ्चिद्दृश्यते सूक्ष्ममप्यथ । न दीयते यदि त्वस्य मनसा यदभीप्सितं ॥ (a) V. & S. प्यथ. This and the following 3 Slokas of of our text are wanting in P. 7. G. 5. नदीयते यदितस्मै &c. 8 For this Sl. B. 13 विनाशयति त्रैलोक्यं तपसा सचराचरं । व्याकुलाश्चदिशः सर्वा न च किञ्चित्प्रकाशते ॥ G. 6. विनाशयति लोकांस्त्रीं

सागराः क्षुभिता [1]श्चैव व्यदीर्यन्त च पर्वताः ।
[2]प्रकम्पते च पृथिवी वायुर्वाति भृशाकुलः ॥ ७ ॥
[3]ब्राह्मं विप्रो न भजते नास्तिको जायते नरः ।
त्रैलोक्यमपि संमूढं प्रतिक्षुभितमानसम् ॥ ८ ॥
[4]बुद्धिं न कुरुते यावदेष प्रतपतां वरः ।
देवराज्यं परिप्राप्तौ लभतां तावदीप्सितम् ॥ ९ ॥
ततः [5]सुरगणाः सर्वे पितामह[6]पुरःसराः ।
[7]विश्वामित्रमुपागम्य वाक्यमूचुरिदं तदा ॥ १० ॥
[8]ब्रह्मर्षे विनिवर्त्तस्व तपसोऽस्मादतः परम् ।
ब्रह्मर्षित्वमनुप्राप्तस्तपसा ह्यसि दुर्लभम् ॥ ११ ॥
[9]प्रीतः स्वच्छन्दमरणं [10]ददानि भवतेप्सितम् ।

---

स्तेजसा &c. 1. B. 14. सर्वेविशीर्यन्ते च G. 7. विदीर्यन्ते च &c. 2. G. 7. कम्पते पृथिवी चैव &c. B. 14 प्रकम्पते च (a) वसुधा वायुर्वातोऽस्त्र सङ्कुलः ॥ (a) V. पृथिवी &c. 3. For this Sl. B. 15.-16 ब्रह्मचर्यतिज नोमो नास्तिको जायते जनः । संमूढमिव त्रैलोक्यं सम्प्रक्षुभितमानसं भास्करो निष्प्र भश्चैव महर्षे तस्य तेजसा । This Sl. is wanting in G. 4. For this Sl. B. 16-18 बुद्धिं न कुरुते यावन्नाशे देव महामुनिः ॥ तावत्प्रसाद्यो भगवन्नग्निरूपे महाद्युतिः । कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यतेऽखिलं ॥ देवराज्यं चिकीर्षेत दीयतामस्य (a) यन्मनः ॥ (a) V. यन्मतं 5. G. 9. सर्वे सुरगणाः &c, P. is llegible here 6. B. 18. पुरोगमाः 7. B. 19. विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् ॥ 8. For this Sl. B. 19-20 ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतो षिताः ॥ ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक । 9. For this Sl. B. 20-21 दीर्घमायुश्चते ब्रह्मन् ददामि समरुद्गणाः ॥ स्वस्ति प्राप्नुहि भद्रन्ते गच्छ सौम्य यथा सुखं । 10. G. 11. ददामि तव चेप्सितं P. ददानि च तवेप्सितं.

स्वस्त्यामुहि[1]त्वं भद्रन्ते तपसोऽस्मादुपारम ॥ १२ ॥
[2]पितामहवचः श्रुत्वा तत्तदा मधुराक्षरम् ।
कृताञ्जलिरिदं वाक्यमुवाच मुनिपुङ्गवः ॥ १३ ॥
[3]यदि प्राप्तं मया ब्रह्मन् ब्राह्मण्यं तपसो बलात् ।
ततो ब्रह्म च वेदाश्च सत्यञ्च वरयन्तु माम् ॥ १४ ॥
सिद्धिर्धृतिः स्मृतिश्चैव विद्या मेधा शमः क्षमा ।
तपो दमो दया क्षान्तिः सर्वज्ञत्वं कृतज्ञता ॥ १५ ॥
असंमोह इति प्राहुर्ब्रह्मन् ब्रह्मविदो जनाः ।
अद्रोहः सर्वभूताना[4]मसाङ्कल्पमसङ्गिता ॥ १६ ॥
[5]तन्मां भजतु विश्वेश [6]ब्रह्म चाव्ययमुत्तमम् ।
[7]ब्रह्मपुत्रो वसिष्ठोऽयमेवञ्चैव ब्रवीतु माम्
तपसा च यदि प्राप्तं ब्राह्मणत्वं यथेप्सितम् ॥१७॥

---

1 This word is superfluous here, disagreeably interfering with the metre, but it is in both G. P. 2. For this Sl. B. 21-22. पितामहवचः श्रुत्वा सर्वेषां त्रिदिवौकसां ॥ कृत्वा प्रणामं मुदितो व्याजहार महामुनिः । 3 For this Sl. B. 22-23 ब्राह्मण्यं यदि मे प्राप्तं] दीर्घमायुस्तथैव च ॥ ओंकारोऽथवषट्कारो वेदाश्च वरयन्तु मां । This, and the following Slokas are wanting in B. 4. G. 15. मसङ्कल्पम (a) सङ्गता. (a) P. मसङ्गिता. 5 For this and the following 2 Slokas, B. 23-26. क्षत्रवेदविदां श्रेष्ठ ब्रह्मवेदविदामपि ॥ ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः । यद्येवं परमः कामः कृतो यान्तु सुरर्षभाः ॥ ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः । सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ॥ ब्रह्मर्षिस्त्वं नसन्देहः सर्वं सम्पद्यते तव । इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतं ॥ 6. G. 16, ब्रह्माव्ययमनुत्तमं । 7. This line is wanting in G. P. has it on the margin, and with it another line which illegible.

तमेवंवादिनं ब्रह्मा प्रत्युवाच तपोनिधिम् ।
प्रतिभास्यन्ति ते[1] वेदा ब्रह्म चाव्यय[2] मीप्सितम् ॥१८॥
[3] अधिकस्त्वं मतो मेऽद्य सर्वब्रह्मविदां मुने ।
इत्युक्त्वैनं ततो ब्रह्मा ययौ सुरगणैर्वृतः ॥ १९ ॥
विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ।
[4] कृतकृत्यश्चचारेमां पृथिवीं सिद्धमानसः ॥ २० ॥
[5] एष ब्रह्मविदां श्रेष्ठ एष तेजस्विनां वरः ।
एष विग्रहवान् धर्म एष सिद्धिमतां वरः ॥ २१ ॥
[6] शतानन्दवचः श्रुत्वा रामलक्ष्मणसन्निधौ ।
जनकः प्राञ्जलिर्भूत्वा विश्वामित्रं ततोऽब्रवीत् ॥२२
धन्योऽस्म्यनुगृहीतोस्मि यस्य मे [7] त्वं महामुने ।
यज्ञं काकुत्स्थसहितो [8] द्रष्टुमभ्यागतः स्वयम् ॥ २३ ॥
[9] गुणाः सुबहवः प्राप्तास्त्वत्सन्दर्शनजा मया ।

---

1. P. देवा &c. 2. G. 17. मुत्तमं, but P. has मोप्सितं. 3 Before thi P. the line चत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि । 4. For this line B. 27-28 पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरं ॥ कृतकामो महीं सर्वां चचार तपसि. स्थितः । एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना ॥ 5. For this Sl B 29. एष राम मुनिश्रेष्ठ एष विग्रहवांस्तपः। एष(a)धर्मांपरो नित्यं वीर्यस्यैष परायणं (a) V. & S. धर्मपरो &c. 6. For this Sl. B, 30-31. एवमुक्त्वा महातेजा विरराम द्विजोत्तमः । शतानन्द &c. ॥ जनकः प्रांजलिर्वाक्यमुवाच कुशिकात्मजं । Before this Sl. of our text G. reads the additional line एष सत्ये दमे चैव धर्मेषु च समास्थितः which however is wanting in P. 7. B. 31. मुनिपुङ्गव. 8. B. 32. प्राप्तवानसि कौशिक ॥ 9. For this Sl, B. 32- 33. पावितोऽहं त्वया ब्रह्मन् दर्शनेन महामुने ॥ गुणा बहुविधाः प्राप्तास्तव संदर्शनान्मया ॥

सदश्चपावितमिदं त्वद्गुणौघैस्तपोनिधे ॥ २४ ॥
[1]विप्रभावश्च ते ब्रह्मन् कीर्त्यमानो [2]महात्मना ।
श्रुतो मया महातेजो रामेण च महात्मना ॥ २५ ॥
सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः ।
अप्रमेयं [3]तव तप[4]स्त्वप्रमेयञ्च ते बलम् ॥ २६ ॥
अप्रमेया[5]गुणाश्चापि नित्यं ते पुरुषर्षभ ।
तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो ॥ २७ ॥
कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् ।
[6]श्वः प्रभाते भवन्तं च द्रष्टुमेष्यामि वै पुनः ॥२८॥
[7]एवमुक्त्वा मुनिश्रेष्ठं [8]वैदेहो मिथिलाधिपः ।
[9]प्रदक्षिणमुपावृत्य विश्वामित्रं ततो ययौ ॥ २९ ॥
विश्वामित्रोऽपि धर्मात्मा सहरामः सलक्ष्मणः ।
(a)स्ववास[10]मुपचक्राम पूज्यमानो [11]द्विजातिभिः ॥३०॥

इत्यार्षे रामायणे आदिकाण्डे बालचरिते
विश्वामित्रब्रह्मत्वप्राप्तिः ।

---

1. For this Sl. B. 33-34. विस्तरेण च वै ब्रह्मन् कीर्त्यमानं महत्तपः ॥ श्रुतं मया &c. 2. G. 24. महातपः. P. महत्तपः ॥ 3. B. 35, तपस्तुभ्यम प्रमेयं च &c. 4. G. 26 ह्यप्र. &c. 5. B. 35 गुणाश्चैव नित्यन्ते कुशिकात्मज ॥ 6. B 37. श्वः प्रभाते महातेजो द्रष्टुमर्हसि मां पुनः। स्वागतं (a) जपतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ (a) V. जयतां &c. After this Sl. of our text G. also reads the line स्वागतं जयतां श्रेष्ठ मामनुज्ञातुमर्हसि, which however is wanting in P. 7. Before this sl. B. (38) reads the additional Sl. एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभं । विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ 8. P. has विदेहो &c. 9, B. 39. प्रदक्षिणं चकाराशु सोपाध्यायः सबान्धवः ॥ (a) V. & S. स्ववाट &c. 10. B. 40. मभिचक्राम &c. 11. B. 40. महात्मभिः ।

काम्यः ॥ ७ ॥

स्वस्य यदिवन्तं तस्माद्वा काम्यो भवतीच्छायाम् । पुत्रमिच्छत्यात्मनः पुत्रकाम्यति । पटकाम्यति । ककारस्य प्रयोगार्हत्वादित्संज्ञा नास्ति । योगविभागादुत्तरत्र क्यच एवानुवृत्तिर्न काम्यस्य ॥

गौणादाचारे ॥ ८ ॥

गौणममुख्यमाचरणक्रियायामुपमानमित्यर्थः । गौणादिवन्तादाचारेऽर्थे वा क्यच् भवति । पुत्रमिवाचरति पुत्रीयति छात्रम् । प्रावारीयति कम्बलम् । व्यवस्थितविभाषाधिकारादीदपि भवति । प्रासादीयति कुट्यां ॥

कर्त्तुः क्यङ् सखं विभाषा ॥ ९ ॥

कर्त्तुर्गौणादाचारेऽर्थे वा क्यङ् भवति यद्यन्ते सकारस्तस्य च खं विभाषया । इह कर्तृग्रहणादिब्न सम्भवति सुबन्तात् क्यङ् । श्येन इव आचरति काकः श्येनायते । कुमुदं पुष्करायते । व्यवस्थितविभाषेयम् । ओजोप्सरसोर्नित्यं पयसस्तु विभाषया सखम् । ओजस्वीवाचरति ओजायते । वृत्तिविषये मत्वर्थीयः क्यङोक्तः । अप्सरायते । मथितं पयायते पयस्यते । असखपक्षे नः क्य इति नियमात् पदत्वाभावे रित्वादिविधि र्भवति । कर्त्तुरिति सखापेक्षया तया विपरिणम्यते तेनान्त्यस्य खं इह न भवति । सारसायते । आचारे सर्वमृद्भ्यः क्विब्वा भवतीत्येके । अश्व इवाचरति अश्वति । अश्वायते ॥

भृशादेश्च्व्यौ हलो भुवि ॥ १० ॥

कर्तु रिति वर्तते। भृश इत्येवमादिभ्यः च्व्यर्थे वर्तमानेभ्यो भवत्यर्थे वा क्यङ् भवति यद्यन्ते हल् तस्य नित्यं खम्। च्विर्विकल्पेन विधीयते।यत्र नोत्पद्यते तत्रायं क्यङ्। अभृशो भृशो भवति भृशायते। भृश शीघ्र चपल पण्डित उत्सुक। नात्र गेर्बहिर्भावः। उन्मनस् सुमनस् दुर्मनस् अभिमनस् संग्राम युद्ध इतिज्ञापकादुदादोनामडागमादिषु बहिर्भावः। रेहत् बेहत् शश्वत् नृपत् वर्चस् ओजस् अण्डर शुचिनन्द नोलमद्र फेन हरित ॥

## डाज्लोहितात् क्यष् ॥ ११ ॥

डाजन्ताल्लोहितशब्दाच्च च्व्यर्थाद्भवत्यर्थे वा क्यष् भवति। च्व्यर्थग्रहणं लोहितस्य विशेषणं न डाजन्तस्याव्यभिचारात्। पटपटायति। पटपटायते। यदा न क्यष् तदा पटपटाभवतोति प्रयोगः। अलोहितो लोहितो भवति लोहितायति। लोहितायते। एवं हि नः क्य इत्यत्र सामान्यग्रहणार्थः ककारः शोभेत यदि चर्मादिभ्योऽपि स्यात्। चर्मायति। चर्मायते। निद्रायति। निद्रायते। करुणायति। करुणायते। कृपायति। कृपायते। वृत्तिविषये मत्वर्थीयः क्यषा ऽभिहितः ॥

## कष्टाय ॥ १२ ॥

क्यङ् अनुवर्तते। कष्टायेति तादर्थ्ये अप्। कष्टाय ये शब्दा वर्तन्ते तेभ्यः क्यङ् भवति। कष्टार्थादिति वक्तव्यम्। अवन्तनिर्देशः समर्थ विभक्त्युपादानार्थः। अभिधानवशात् क्रमणेनार्जवे क्यङ् द्रष्टव्यः। यथा नमोवरिवश्चित्रङः क्यजित्यत्र पूजाद्यर्थनियमः। कष्टाय कर्मणे

क्रामति कष्टायते । अनार्जवं पापं करोतीत्यर्थः । सत्राय कर्मणे क्रामति सत्रायते । कक्षायते । गहनायते । अनार्जव इति किम् । अजः कष्टं क्रामति । नात्र पापं गम्यते ॥

बाष्पोष्मफेनादुद्वमे ॥ १३ ॥

इप इति वर्तते । बाष्प उष्मन् फेन इत्येतेभ्यः उद्वम इत्यर्थे क्यङ् भवति । बाष्पमुद्वमति बाष्पायते । उष्माण-मुद्वमति ऊष्मायते । फेनायते ॥

रोमन्थतपःशब्दवैरकलहाभ्रकण्वमेघात्
कृञि ॥ १४ ॥

रोमन्थ तपस् शब्द वैर कलह अभ्र कण्व मेघ इत्ये-तेभ्यः करोत्यर्थे क्यङ् भवति । रोमन्थं करोति रोमन्थायते गौः । अत्र करोतिः क्रियासामान्ये वर्तमानेऽपि अभ्यवहृत च्चर्वणक्रियायां गृह्यते । तेनेह न भवति । कोटको रोमन्थं वर्तयति । तपसो मश्वेति वक्तव्यम् । तपः करोति तपस्यति । तपश्चरतीत्यर्थः । शब्दं करोति शब्दायते । वैरायते । कल-हायते । अभ्रायते । कण्वायते । पापं करोतीत्यर्थः । मेघायते । सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम् । सुदिनायते । दुर्दिनायते । नीहारायते । अटाट्टासी-काकोटापोटासोटाप्रुष्टाभ्योऽपीति केचित् । अटायते । अट्टायते । सीकायते । कोटायते । पोटायते । सोटायते प्रुष्टायते ॥

सुखादेः स्वभोगे ॥ १५ ॥

भोगोऽनुभवो वेदना वा । सुख इत्येवमादिभ्य इवन्ते-

भ्यः स्वभोगे क्यङ् भवति । सुखमात्मनः करोति सुखायते । सुखं भुङ्क्ते अनुभवति वेदयतीत्यनर्थान्तरम् । एवं दुःखायते । सुख दुःख तृप्त कृच्छ्र अस्रोक करुणा कृपण सोढ प्रतीप । स्वभोग इति किम् । सुखं करोति प्रसाधको देवदत्तस्य ॥

## नमोवरिवश्चित्रङः क्यच् ॥ १६ ॥

कृञोति वर्तते। नमस् वरिवस् चित्रङ् इत्येतेभ्यः क्यच् भवति करोत्यर्थे । पूजापरिचर्याश्चर्यविशेषे। नमः करोति नमस्यति देवान् । अत्र नमःशब्दस्यानर्थकत्वात्तद्योगे नाब् भवति । वरिवः करोति वरिस्यति गुरून् । चित्रङ् करोति चित्रीयते । ङित्वादिः । पूजादिभ्योऽन्यत्र नमः करोतीति भवति ॥

## पुच्छभाण्डचीवराण्णिङ् ॥ १७ ॥

पुच्छ भाण्ड चीवर इत्येतेभ्य इबन्तेभ्यो णिङ् भवति करोत्यर्थविशेषे । कोऽसौ विशेषः । पुच्छादुदसने पर्यसने वा उत्पुच्छयते । परिपुच्छयते । भाण्डात्सञ्चयने परिचयने । वासं भाण्डयते परिभाण्डयते । चीवरादर्जने परिधाने वा संचीवरयते भिक्षुः । णकारो णाविष्ठवन्मृद इत्यत्र सामान्यग्रहणाविघातार्थः । अर्थविशेषादन्यत्र णिजेव भवति ॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ १८ ॥

मुण्ड इत्येवमादिभ्य इबन्तेभ्यो णिज् भवति करोत्यर्थे । चुरादिषु मृदो ध्वर्थ इति णिचि सिद्धे अर्थविशेषपरि-

ग्रहार्थमिदम्। च्यर्थे वायमिति केचित्। अमुण्डं मुण्डं करोति मुण्डयति। मिश्रयति। श्लक्ष्णयति। लवणयति। व्रताद्भोजने तन्निवृत्तौ च। पयो व्रतयति। पयो भुङ्क्ते इत्यर्थः। सावद्यं व्रतयति। सावद्यं न भुङ्क्ते इत्यर्थः। वस्त्रात् समाच्छादने। वस्त्रेण संच्छादयति संवस्त्रयति। हलिं गृह्णाति हलयति। कलिं गृह्णाति कलयति। हलिकल्योरकारान्तता णिचा योगे निपात्यते। णौ कच्यनृङ्के सन्वदिति सन्वद्भावप्रतिषेधार्थम्। कलिं गृहीतवानचकलम्। अजहलम्। अन्यथा परत्वादपि कृते टिखं स्यात् ततः सन्वद्भावः प्रसज्येत। यथा अलीलघत् अपिपटत् इति। कृतं गृह्णाति कृतयति। तुस्तानि केशजटाः विहन्ति वितुस्तयति॥

## धोर्यङ्क्रियासमभिहारे॥ १९॥

पौनःपुण्यं भृशार्थो वा क्रियासमभिहारः। धोर्यङ् भवति क्रियासमभिहारे। पुनः पुनः पचति भृशं वा पापच्यते। बोभुज्यते। क्रियान्तरैरव्यवहितायाः प्रधानभूतविक्लेदनक्रियायाः पुनः पुनरारम्भः पौनःपुन्यम्। गुणभूताधिश्रयणादिक्रियाणां क्रियान्तरैरव्यवहितानां साकल्येन करणं भृशार्थता। सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं नियमार्थं कर्त्तव्यम्। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते। अनेकाज्भ्य एव नान्यस्मात्। अत्यर्थं जागर्तीति। अटाट्यते। अरार्यते। एडीत्येप्। अत्यर्थमश्नुते अशाश्यते। प्रोर्णोनूयते। अट्यादिग्रहणं किमर्थमन्यस्मादजादेर्मा भूत्। भृशमीक्षते। पुनः पुनरोहते। क्रियासमभिहारे सर्वस्य द्वित्वे वेति विभाषानुवर्तते। तेन यङन्तस्य द्वित्वं न भवति। तत एव क्रियासमभिहारे यो लोट् तदन्तस्य भवति। लोलू-

यस्त्र लोलूयस्व इत्येवायं लोलूयते । धोरिति किम् । सगेरुत्पत्तिर्मा भूत् । अगसंज्ञार्थं च धुग्रहणं पेपीयते । शुभिरुचिभ्यां प्रतिषेधो वक्तव्यः । अत्यर्थं शोभते । अत्यर्थं रोचते ॥

## नित्यं गतिविशेषे ॥ २० ॥

नित्यं यङ् भवति गतिविशेषे गम्यमाने । चंक्रम्यते । आवनीवच्यते । गतिविशेषो हि यङन्तवाच्यः । तेनास्व-पदेनार्थमात्रकथनमिदं कुटिलं क्रमतीति । नित्यग्रहणं तु विषयनियमार्थम् । एतयोर्गतिविशेष एव गर्हे एव च यङ् यथा स्यात् क्रियासमभिहारे मा भूत् । भृशं क्रामति । भृशं लुनाति ॥

## लुपसदचरजपजभदहदशगृभ्यो गर्हे ॥ २१ ॥

लुपादिभ्यो गर्हे गम्यमाने नित्यं यङ् भवति प्रत्या-सत्तेर्धात्वर्थस्य गर्हा गृह्यते न साधनस्य । अनर्थकं लुम्पति लोलुप्यते । सासद्यते । चंचूर्यते । जंजप्यते । दन्दह्यते । निजेगिल्यते । दन्दश्यते । दशेः कृतनखस्य निर्देशादयङप्यपि ऋं भवतीति केचित् । दंदशीति । तदयुक्तं सौत्रत्वान्निर्दे-शस्य । गर्ह इति किम् । सुखं सीदति स्वगृहे ॥

## पाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म-वर्णचूर्णचुरादेर्णिच् ॥ २२ ॥

पाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचु-रादिभ्यश्च णिच् भवति । चुरादौ मृदो ध्वर्थ इति सिद्धेऽपि अर्थविशेषपरिग्रहार्थं पाशादेः पृथग्ग्रहणम् । पाशाद्विमोचने ।

पाशं विमोचयति विपाशयति । रूपाद्दर्शने । रूपं दर्शयति रूपयति । वीणया उपगायति उपवीणयति । तूलैरनुकुष्णाति अनुतूलयति । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । लोमान्यनुमार्ष्टि अनुलोमयति । त्वचं गृह्णाति त्वचयति । त्वच इति अकारान्तनिपातनात् परेऽचः पूर्वविधावित्यस्यस्य स्थानिवद्भावाद्लोल इत्यैष्म भवति । वर्मणा सन्नह्यति संवर्मयति । वर्णान् गृह्णाति वर्णयति । चूर्णैरवकिरति अवध्वंसयति वा अवचूर्णयति । चुरादिभ्यः चोरयति । मन्त्रयते ॥

## आ चार्थवेदसत्यानाम् ॥ २३ ॥

अर्थ वेद सत्य इत्येतेषां आकारश्चान्तादेशो भवति णिच्च । अर्थमाचष्टे अर्थापयति । वेदापयति । सत्यापयति ।

## हेतुमति ॥ २४ ॥

हेतुस्तद्योजकः । हेतुमति ध्वर्थेऽभिधेये णिज् भवति अन्येषां दर्शनं प्रयोजकव्यापारः प्रेषणाध्येषणरूपो हेतुमान् । तस्मिन्नभिधेये णिज् भवति । कटं कारयति ओदनं पाचयति । अत्रवाग्विसर्गो हेतुव्यापारः । क्वचित् समर्थाचरणं यथा भिक्षा वासयति । कारीषोऽग्निरध्यापयति । आख्यानात् कृत्तस्तदाचष्ट इति कृल्लुप् प्रत्यापत्तिः प्रकृतिवच्च कारकमिति । आख्यायते यत्तदाख्यातं तस्मात् कृदन्तात् आचष्ट इत्यस्मिन्नर्थे णिज् वक्तव्यः कृल्लुप्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । कंसवधमाचष्टे कंसं घातयति । बलिबन्धमाचष्टे बलिं बन्धयति । राजागमनमाचष्टे राजानमागमयति । आख्यानशब्दात्प्र-

तिषेधो वक्तव्यः। आख्यानमाचष्टे इति वाक्यमेव भवति। मृगरमणमाचष्टे मृगान् रमयति । यदा ग्रामे मृगरमणमाचष्टे तदा नेष्यते । आङ्निवृत्तिश्च कालात्यन्तसंयोगे मर्यादायां कृदन्तात् णिच् तदाचष्टे इति कृदुप् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति वर्तते । आरात्रिविवासमाचष्टे रात्रिः विवासयति । चित्रीकरणे च प्राप्त्यर्थे णिच् वक्तव्यः। उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयति सूर्यमुद्गमयति। नक्षत्रयोगे सार्थे। पुष्येण योगं जानाति पुष्येण योजयति। चन्द्रमसा मघाभिर्योगं जानाति मघाभिर्योजयति। नेदं बहु वक्तव्यमत्रापि कर्थञ्चिद्धेतुव्यापारोऽस्ति बहुलग्रहणाद्वा सिद्धम् ।

## कण्ड्वादेर्यक् ॥ २५ ॥

कण्डूञ् इत्येवमादिभ्यो यक् भवति । यकः कित्करणं एट् प्रतिषेधार्थं ज्ञापकमिह कण्ड्वादयो धवो गृह्यन्ते न मृदूरूपाणि । कण्डूञ्हृणीङादिषु दीत्वोच्चारणं ज्ञापकं विकल्पेन धुरूपतैषामन्यथा दीरकृद्व इति दीत्वेनाप्येतत्सिद्धयेत ।: तेन मृतपक्षे कण्डुः मन्तुः वल्गुः इत्यादिप्रयोगा ज्ञातव्याः। कण्डूयति । कण्डूयते। कण्डूतिः। मन्तूयति। कण्डूञ् मन्तु वल्गु असङ् हृणीङ् महीङ् वेटलोङ् ङकारो दविध्यर्थः। ईयस् इरस् तिरस् मगधस् कभउवस् पम्पस् नन्तस् सुख दुःख भिषज् भिष्णुज् अरच् चुरण तुरण तरल सरणसपर इषुध इषुभ गद्गद एला वेला लेट् लोट् उरस् । अकारान्तानां अनत्वम् ॥

## गुपूधूपविच्छिपणिपनेराय: ॥ २६ ॥

गुपू धूप विच्छि पणि पनि इत्येतेभ्यो धुभ्य आयो भवति । गोपायति । धूपायति । विच्छेरन्तरङ्गत्वात्तुकि कृ।त आयः । विच्छायति । अनुदात्तेत्त्वं केवले चरितार्थमिति दो न भवति । गुपादिभिर्भौवादिकैः साहचर्यात्पणेर्भौवादिकस्य ग्रहणं न तौदादिकस्य शतस्य पणते व्यवहपणोः सामर्थ्य इति कर्म्मणि ता । पनिरिहैव पणिना समानार्थः उपदिश्यते । पनायति ॥

## वाऽगे ॥ २७ ॥

अगविषये गुपादिभ्यो वा आयो भवति । गोपायिता । गोप्ता । गोपायांचकार । जुगोप । गोपाया । गुप्तिः । इत्येवमादि योज्यम् ॥

## कमृत्योर्णिङीयङ् ॥ २८ ॥

सूत्रत्वात्कायाः स्थाने ता कृता । कम् ऋति इत्येताभ्यां णिङ् ईयङ् इत्येतौ त्यौ भवतः । कामयते । णकारः ऐवर्थः । न कम्यमिचमामित्यत्र कमेर्मित्संज्ञाप्रतिषेधः किमर्थः इणमोदीर्मतामिति वा प्रादेशो मा भूदित्येवमर्थः । अकामि । कामं कामम् । वा ग इति णिङोऽनुत्पत्तौ णिज्निमित्तस्यैपः प्रादेशनिवृत्त्यर्थश्च ङकारो दविध्यर्थः । ङ्कितोत्येप्प्रतिषेधार्थं न भवति इकस्तत्रानुवृत्तेः ऋतिरिहैव घृणार्थमुपदिश्यते ऋतीयते । वाग इति च वर्तते । तेन कमिता । कामयिता । अर्तिता । ऋतीयिता ॥

## तदन्ता धवः ॥ २९ ॥

येऽनुक्रान्ताः सनादयस्ते अन्ता येषां ते धुसञ्ज्ञका भवन्ति । तथा चैवोदाहृतम् । पदसंज्ञायामन्तग्रहणं निय-

मार्थमुक्तम् । अन्यत्र संज्ञाविधौ त्यग्रहणे तदन्तविधिर्नास्ति इति एष प्रतिषेधो मा भूदित्यन्तग्रहणम् ।

## स्यतासी लृलुटोः ॥ ३० ॥

लृ इति लङ्लृटोः सामान्येन ग्रहणं धोः स्यतासी इत्येतौ मध्ये त्यौ भवतः लृलुटोः परतः । शब्दापेक्षमत्र यथासंख्यम् । धोरधिकरात् पूर्वभक्ततानिवृत्तिः अगासंज्ञा च भावकर्मकर्तृषु लो विहितः । तत्र यक्सपावुत्सर्गौ स्यादयस्तदपवादाः । करिष्यति । अकरिष्यत् । कर्ता । तासेरिदित्करणं किम् । हलुङ्ञ्जित्यनिदित इति नखप्रतिषेधार्थम् । हन्ता । मन्ता ॥

## कास्यनेकाज्त्याल्लित्याम् ॥ ३१ ॥

कासेरनेकाजस्त्यान्ताच्च लिटि परतः आम्भवति । कासाञ्चक्रे । अनेकाज्भ्यः चकासाञ्चकार । चुलुम्पाञ्चकार । दरिद्राञ्चकार । त्यान्तात् लोलूयाञ्चक्रे । कारयाञ्चक्रे । गवाञ्चकार । आचारार्थे मृद्भ्य इति क्विप् । अनेकाज्ग्रहणमत्यान्तार्थम् । आमिति नायमागमः । कासेर्विधानात् ॥

## सरोरिजादेः ॥ ३२ ॥

सह रुणा वर्त्तते इति सरुः । सरोरिजादेर्धोः लित्याम्भवति । ईहाञ्चक्रे । इन्दाञ्चकार । उपदेशावस्थायां नुम् । ऊहाञ्चक्रे । उञ्छाञ्चकार । उदम्भाञ्चकार । सरोरिति किम् । इयेष । उवोष । एपि कृते सरुरिति चेत् सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति । इजादेरिति किम् । ततक्षऋच्छत्यतामिति लिट्युपवचनं ज्ञापकं ऋच्छेराम्न भवति । आनर्च्छ । आनर्च्छतुः । आनर्च्छुः,

कथं प्रोर्णुनाव । वाक्य ऊर्णोणुवभ्दावो यङसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेण्निवृत्तये । प्रोर्णुनूषति । सनिग्रहश्चेतिट्प्रतिषेधः ।

## दयायासः ॥ ३३ ॥

दय अय आस इत्येतेभ्यश्च लिटि आम्भवति । दयाञ्चक्रे । पलायाञ्चक्रे । गेरयताविति लत्वम् । आसाञ्चक्रे ॥

## वोषजागृविदात् ॥ ३४ ॥

उष जागृ विद् इत्येतेभ्यो लिटि परतो वा आम् भवति । उषाञ्चकार । उवोष । जागराञ्चकार । जजागार । विदाञ्चकार । विवेद । विदेराम्यकारान्तत्वं निपातनात् एव भवति । जागृसाहचर्याददादिकस्य ग्रहणम् ॥

## भीह्रीभृहुवामुव्वत् ॥ ३५ ॥

भी ह्री भृ हु इत्येतेभ्यो लिटि आम् भवति उचीव कार्यं भवत्येषामुचि कार्यं द्वित्वमित्येव तदतिदिश्यते । लिडपेक्षं द्वित्वमामा व्यवधानान्न प्राप्नोति । बिभयाञ्चकार । बिभाय । जिह्रयाञ्चकार । जिह्राय । बिभराञ्चकार । बभार । भृञामित्रयाणामिति चस्येत्वम् । जुहवाञ्चकार । जुहाव ॥

## लिड्वत् कृञि ॥ ३६ ॥

कृञिति प्रत्याहारेण कृभ्वस्तीनां त्रयाणां ग्रहणं मण्डूकप्लुत्या वेति विभाषापेक्षणीया तेन सस्पदो वहिर्भावः । य उक्त आम् लिड्वकृञ प्रयुक्ते साधुर्भवति लिड्वत् कृञोतीन्निर्देशात् आमन्तस्याव्यवहितस्य पूर्वं प्रयोगः । ईहाञ्चक्रे । आम्वत् कृञ इति दः । ईहाम्बभूव । ईहः

भास । अस्तिब्रुवोर्भूवचीत्यत्रोक्तमस्तेरनुप्रयोगस्य भूभावो न भवति । कृञि प्रत्याहारग्रहणसामर्थ्याद्वा ॥

## विदाङ्कुर्वन्तु वा ॥ ३७ ॥

विदाङ्कुर्वन्त्वित्येतद्वा निपात्यते किमत्र निपात्यते लोटि वा आम् एवभावो लोडन्तस्य करोतेरनुप्रयोगश्च निपात्यते । विदाङ्कुर्वन्तु । विदन्तु । सर्वेषु लोड्वचनेषु निपातनमिदं प्रायेण ल्यन्तस्य प्रयोगान्तेन निर्देशः । विदाङ्करवाणि । वेदानि । विदाङ्करवाव । वेदाव । वेदाङ्करवाम । वेदाम । विदाङ्कुरु । विद्धि । विदाङ्कुरुतम् । वित्तम् । विदाङ्कुरुत । विदाङ्करोतु । वेत्तु । विदाङ्कुरुताम् । वित्ताम् ॥

## सिर्लुङि ॥ ३८ ॥

धेः सिर्भवति लुङि परतः । अकार्षीत् । अभैत्सीत् । अकृषातां कटौ देवदत्तेन । इदित्करणं किम् । अमंस्त । अनिदित इति प्रतिषेधात् नोङः खं न भवति ॥

## स्पृशमृशकृषतृपदृपो वा ॥ ३९ ॥

स्पृश मृश कृष तृप दृप इत्येतेभ्यो लुङि वा सिर्भवति । तृपिदृप्योर्पुषादित्वान्नित्यमङ् प्राप्तः । अन्यत्र शल इति क्सः । अस्प्राक्षीत् । अस्पार्क्षीत् । वानुदात्तस्य ईङ इति वामागमः । यणादेशे कृते वदव्रजहलो इत्यैप् । पक्षे अस्पृक्षत् । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । अत्राप्सीत् । अतार्प्सीत् । अतृपत् । अद्राप्सीत । अकार्क्षीत् । अदार्प्सीत् । अदृपत् ॥

## इगुडः शलोऽनिटोऽदृशः क्सः ॥ ४० ॥

इगुङ् शलन्तो यो धुः अनिट् तस्माद् दृशिवर्जितात् भृङि क्सो भवति । दिह । अधिक्षत् । दुह । अधुक्षत् । लिह अलिक्षत् । इगुङः इति किम् । दह । अधाक्षीत् । शल इति किम् । अभैत्सीत् । अनिट इति किम् । अकोषीत् । नेटीत्यैप्प्रतिषेधः । अदृश इति किम् । अदर्शत् । अद्राक्षीत् । वेरित इत्यङ् ।

## श्लिषः ॥ ४१ ॥

अनिट इत्यधिकारात् श्लिष दाहे इत्यस्य ग्रहणं न भवति । श्लिषः क्सो भवति लुङि परतः । अश्लिक्षत् । पूर्वेण प्राप्तस्य बाधके पुषादित्वादङि प्राप्ते अयमारम्भः । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानित्यङ एव बाधा न ञेः । आश्लेषि ॥

## स्वार्थे ॥ ४२ ॥

स्वार्थः आलिङ्गनं श्लिषः स्वार्थ एव क्सो भवति । आश्लिक्षत् कन्यां देवदत्तः । स्वार्थ इति किम् । समाश्लिषत् जतु च काष्ठं च । दविषये सिखे समाश्लिष्टस्त्वं धवखदिरेण । झलो झलीति सेः खम् ॥

## णिश्रिद्रुस्रुकमेः कर्त्तरि कच् ॥ ४३ ॥

णिजन्तेभ्यः श्रि द्रु स्रु कमि इत्येतेभ्यः कर्तृवाचिनि लुङि कज्भवति । ककारः कित्कार्यार्थः । चकारः लुङि कचि धोरिरिति विशेषणार्थः । अचीकथत् । अपीपचत् । ओनयत्यादेः कच्प्रतिषेधो वक्तव्यः । औनयीत् । अशिश्रियत् ।

अदुद्रुवत् । कमिग्रहणं वाग इति यदा णिङ् न भवति तदा प्रयोजयति अचकमत । अकः खं यस्मिन् णाविति तत्र विग्रहात् सन्वद्भावो न भवति । णिङ्पक्षे सन्वद्भावः । अचीकमत् । आत्मकर्मणापि चङ् भवति । अचीकरत कटः स्वयमेव । णिश्रिश्रथिग्रन्थब्रूञान्दविधौ धीनाञ्चेति ञियकोः प्रतिषेधं वक्ष्यति ।

## वा धेट्श्व्योः ॥ ४४ ॥

धेट् श्वि इत्येताभ्यां वा कङ्भवति कर्तरि लुङि परतः । अदधत् । द्वित्वे ऽचोत्यात्वस्य स्थानिवद्भावाद् द्वित्वं यदा सिस्तदा वा घ्राधेट्च्छासास इति वा सेरुप् । अधात् । अधासीत् । अनुपि यमरमनमातः स्कति सगिटौ । अशिश्वियत् । नञौ ञिरित्यत्रेकारप्रश्लेषात् ञिप्रतिषेधः । कचा मुक्ते पक्षे जॄश्विइत्यादिना विकल्पेनाङ् । अश्वत् । अश्वयीत् । ह्म्यक्षणेत्यादिना सावैप्रतिषेधः । कर्तरीत्येव । अधिषातां वत्सेन ॥

## वक्त्यसुख्यातेरङ् ॥ ४५ ॥

वक्ति असु ख्याति इत्येतेभ्यो लुङि परतः अङ् भवति । इदमेव वक्तिवचनं ज्ञापकं गेपि ब्रूञो वचिरादेशो भवतीति । अवोचत् । अवोचत । अस्पद्रचोथुक्पुम्मो०च्छी-त्युमागमः । अस् । उदास्थत । उदास्थेताम् । उदास्थन्त । अगेरस्यूस्यह्वोर्वचनमिति दः । मविषये पुषादित्वादेवाङ् सिद्धः । ख्यातिरिति ख्या प्रकथन इत्यस्य चक्षादेशस्य च कृतयकारस्याविशेषेण ग्रहणम् । आख्यत् । आख्यताम् । आख्यन् ॥

## ह्वालिप्सिचः ॥ ४६ ॥

ह्वा लिप् सिच् इत्येतेभ्यश्चाङ् भवति लुङि परतः । आह्वत । अलिपत् । असिचत् । पृथगारम्भ उत्तरार्थः ॥

## दे वा ॥ ४७ ॥

ह्वा लिप् सिच् इत्येतेभ्यो लुङि दे वा अङ् भवति । आह्वत । आह्वास्त । अलिपत । अलिप्त । असिचत । असिक्त । शिलिद् इति किश्वादेप्रतिषेधः । पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् ॥

## द्युत्पुषादिलित्सर्तिशास्त्यर्तेर्मे ॥ ४८ ॥

द्युतादिभ्यः पुषादिभ्यः लृकारेद्भ्यः सर्ति शास्ति अर्ति शा इत्येतेभ्यश्च लुङि मे परतः अङ् भवति । वेति नानुवर्तते । द्युतादयः कृपूपर्यन्ताः । व्यद्युतत् । व्यलुटत् । अश्वितत् । द्युद्भ्योलुङीति वामम् । पुषादयः आगणपरिसमाप्तेः । अपुषत् । असुषत् । क्तः प्राप्तः । लृकारेद्भ्यः । आपत् । अगमत् । अशकत् । असरत् । असिषत् । म इति किम् । व्यद्योतिष्ट । व्यत्यपुक्षत् । अर्तेरपि दविषये मा समृषातां मा समृषत ।

## वेरितः ॥ ४९ ॥

म इति वर्त्तते । इरशब्देतो धोर्वाङ भवति लुङि मे परतः । अरुधत् । अरौत्सीत् । अभिदत् । अभैत्सीत् । म इत्येव । अरुद्ध । अभित्त ॥

## जृश्विस्तम्भुम्रुचम्लुचग्रुचग्लुचः ॥ ५० ॥

वेति वर्तते । जॄ श्वि स्तम्भु म्रुच म्लुच् ग्रुच् ग्लुच् इत्येतेभ्यः कर्त्तरि लुङि वाङ् भवति । जॄष् । अजरीत् । अजारीत् । अङि दृसुरेवित्येप । अश्वत् । अश्वयीत् ।

घटादौ सद्व्यवहारबलेन सत्ताजातिसिद्धौ जात्यादावेकार्थसमवायादिसम्बन्धेन तया जात्यैव सद्व्यवहाराभावेन वर्तमानत्वनिबन्धन एव तत्र सद्व्यवहारः समर्थनीय इत्यत आह । घटादाविति । अतीतादौ सद्व्यवहाराभावेन वर्तमानत्वनिबन्धन एव तत्र सद्व्यवहार इति भावः । घटादावनुगतसदाकारप्रत्ययस्तु न लोकानां नहि विहाय देशकालयोः सत्त्वं नाम किञ्चित्केनाप्यनुभूयते ऽतिरिक्तं कदापि । अत एवास्मिन् काले घटप्रागभावः सन्न घटः तन्तुषु पटः सन्न पट इत्यादिकः सार्वलौकिको व्यवहारः किन्तु भावत्वं तदिति प्रत्यक्षसिद्धमित्यर्थः । अथवा सत्ता चेत्यादेस्तान्त्रिकाणां सच्छब्दसङ्केतावच्छेदिका न जातिरित्यर्थः । किंतु भावत्वं तदिति तान्त्रिकाणां सच्छब्दसङ्केतावच्छेदकं भावत्वमित्यर्थः । ननु भावत्वमपि साक्षात्परम्परासाधारणं सत्त्वमेव अतिरिक्तस्य दुर्वचत्वादत आह । तच्चेति । नन्वभावत्वमपि भावान्यत्वं तत्र च भावत्वमुक्तरूपेण सत्ताजातिरेव वक्तव्या अन्यथाऽन्योन्याश्रयापत्तेरत आह । अभावत्वं चेति । अनुगतेति । अभावाकारानुगतप्रत्यक्ष इत्यर्थः । वस्तुतोऽभावत्वस्य भावान्यत्वात्मकतया भावत्वस्य च विधित्वेनावभासात् भावत्वमखण्डोपाधिः अभावत्वं तु भावान्यत्वमित्यभिप्रेत्याह । भावत्वमेवेति । एवकारेणाभावत्वं नाखण्डोपाधिः किन्तु भावान्यत्वमिति सूचितमिति प्राहुः । नन्वेवं भावत्वं भावो न स्यात् स्वस्मिन् स्वावृत्तेरित्यत आह । तच्चेति । अत्र च विधिरूपे भावत्वे मानाभावः । भावोऽयमित्यादिप्रत्यय एवानुगतो मानमिति चेत्

कस्यायं बोधः । न साधारणस्य लोकस्य तदसिद्धेः । अस्त्वयं तान्त्रिकाणामनुगतो व्यवहारश्चेति चेत् द्रव्यान्यतमत्वमादाय तस्याप्युपपत्तेः । न चेदेवं तन्त्रेषु परवचनादेव पदार्थस्वीकारापत्तिरिति वदन्ति ॥

५१ । ३ । अतीन्द्रियेष्वित्युपलक्षणम् ऐन्द्रिकेष्वपि रूपरसादिष्वेकजात्याननुभवादित्यपि द्रष्टव्यम् । ननु रूपादावनुगतगुणव्यवहारादेव गुणत्वं सेत्स्यतीत्यत आह । तुरगादेरिति । तथा चोत्कर्षप्रवृत्तिनिमित्तगुणव्यवहारो न जातिमेवालम्बते उत्कर्षः पुनरनुगत एवेति भावः । ननु द्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतात्वेनानुगतीकृतानां रूपादिकारणतानामवच्छेदकतया गुणत्वं जातिरायातीत्यत आह । एकस्येति । अतिप्रसङ्ग इति । रूपद्रव्यकर्मेतरसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन रूपव्यावृत्तरसादिचयोविंशतिवृत्तिजातेरेवं जात्यन्तराणामपि सिद्ध्यापत्तिरित्यर्थः । जातिसङ्करेति । रूपद्रव्येतरसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन रसादिकर्मसाधारणजातेरपि सिद्ध्यापत्त्या तया सङ्करप्रसङ्ग इत्यर्थः । प्रत्यक्षानुमित्यादिसाधारणीमनुभवत्वजातिं निराकरोति । शाब्देति । स्मृत्यन्येति । तथा च तान्त्रिकाणामनुभवबलान्नानुभवत्वजातिसिद्धिरिति भावः । अनुभवामीत्याकारप्रत्यय[1]बलादनुभवत्वजातिसिद्धिर्निराबाधेत्यत आह । जातिस्त्विति । उक्तप्रत्ययविषयजातिस्त्वित्यर्थः । ननु विशेषणज्ञानविशेषणतावच्छेदकप्रकार-

(१) साक्षात्कारप्रत्यय–पा० २ पु० ।

कज्ञानयोः कार्यतावच्छेदकघटकतया तत्सिद्धिः । विशिष्टानुभवत्वविशिष्टवैशिष्ट्यानुभवत्वाभ्यामेव तत्कार्यतावच्छेदात् न तु तथा ज्ञानत्वाभ्याम् तादृशस्मृतौ व्यभिचारात् संस्कारद्वारा तथात्वस्य च प्रत्यक्षे ऽसम्भवात् । क्वचित् साक्षात् क्वचित् परम्परया तथात्वस्यानुगतत्वात् । विशिष्टस्मरणेभ्यः पूर्वं निर्विकल्पकस्मरणात् विशिष्टवैशिष्ट्यस्मरणेभ्यश्च पूर्वं विशिष्टस्मरणानां कल्पनामपेक्ष्य लाघवेन स्मृतिव्यावृत्ततयानुभवत्वजातेरेकस्या एव कार्यतावच्छेदकतया कल्पनस्योचितत्वात् न च स्मृत्यन्यज्ञानत्वमेव तदवच्छेदकम् एतदपेक्षयाऽनुभवत्वजातेरेवावच्छेदकतया कल्पयितुमुचितत्वात् तादृशस्मृत्यन्यज्ञानत्वानां विशेषणविशेष्यभावे विनिगमकाभावेन षट्ककारणाभावापत्तेरित्यस्माकं पूर्वपक्षः । सिद्धान्तस्तु सर्वमिदं विशेषणज्ञानत्वादिना विशिष्टबुद्धिं प्रति हेतुतासत्त्वे एव शोभते तदेव तु नास्ति प्रमाणाभावात् । विशेषणादिसन्निकर्षादेव तदुपपत्तेः अत एव निर्विकल्पकमपि नास्ति विज्ञानमित्याहुः । न च स्मृतिं प्रति अनुभवत्वेन हेतुत्वात् तस्य च लाघवाज्जातिरेवावच्छेदकतया कल्प्यते । न च स्मरणस्य स्मरणाजनकत्वे घट इत्यादिस्मरणोत्तरतृतीयक्षणादौ तादृशस्मरणं न स्यात् घट इत्याकारकस्मरणत्वेन तदाकारसंस्कारनाशकतया तत्स्मरणेन तादृशसंस्कारनाशादिति वाच्यम् लाघवेन तत्तत्पुरुषीयचरमस्मृतेरेव तत्तद्व्यक्तित्वेन तत्पुरुषीयसंस्कारनाशकतोपगमेन तदानीं संस्कारनाशनिरासात् उद्बोधकविरहेणैवावान्तरा स्मरणवि-

त्त्वात् । युज्यते च रीतिरियम् इतरथा चानन्तसंस्काराणामनन्तनाशकल्पनापत्तेः । एकदा तदीयसकलसंस्कारनाशोपगमे तु तावत्संस्कारप्रतियोगिक एक एव नाशो बाधकाभावात् । एवं कार्यतापि तत्तद्व्यक्तित्वेनैवेति तु प्रकारो विभाव्यताम् । तर्हि मया वक्ष्यमाणवर्त्मना भावनाख्यसंस्कारनिराकरणमपीति सर्वथा नानुभवत्वजातिसिद्धिरिति दिक् ॥

५५ । १ । घटाद्यभावेति । घटादत्यन्ताभावान्योन्याभावात्यन्ताभाव इत्यर्थः । अतिरिक्तं वेति । भावातिरिक्त एव न तु घटाद्यात्मक इत्यर्थः । अभावभिन्नाभावत्वेति । अत्र चाभावत्वं भावभिन्नत्वं न त्वखण्डोपाधिस्तस्य भावसाधारण्याभ्युपगमेनैव तर्कोपपत्तेः सम्भवात् । अभावाभावस्यातिरिक्तत्वे इत्यर्थः । तदाभावत्वेति । तदा घटाभावत्वेपरामर्शः । घटे तु नास्तीति प्रत्ययो नाभावत्वमालम्बते परमखण्डमत्यन्ताभावत्वं तच्च भावाभावसाधारणमभ्युपेयतां कृतमतिरिक्तैरभावाभावैः । घटाभावात्यन्ताभावो न भाव इति च प्रत्ययो न लोकानामिति वदन्ति ॥

अन्ये तु घटवति घटाभावो नास्तीतिप्रत्ययबलादतिरिक्त एव तदभावः विशेषणतावच्छेदकैक्येन तदुपपादने चाभावमात्रविलयप्रसङ्गः तदधिकरणवृत्तिधर्मैरेव तदभावत्वेनानुगतीकृतैरनुगततदभावप्रत्ययानामुपपादयितुं शक्यत्वात् । विशेषणैक्यानुभवो भावभिन्नत्वानुभवो वा पुनरत्रापि न पाणिपिहित इति प्राहुः । भावत्वं संसर्गाभावत्वं चेति । अन्योन्याभावसामान्यान्योन्याभावमभिप्रेत्य घटान्योन्याभावभेदताद्दशाभावत्वं

संसर्गाभावत्वं पटान्योन्याभावत्वं चेत्यवसेयम् । भावत्वं संसर्गाभावत्वं प्रायशस्तत्तदन्योन्याभावत्वं चेति युक्तः पाठः । तात्पर्यास्तु प्रामाणिकत्वादियमनवस्था न दोषायेति अतिरिक्ता एव भेदाभेदाः । अन्यथा अन्योन्याभावमात्रमेव नातिरिच्येत अधिकरणाद्धर्मिधर्मेणाप्येव तत्त्वमभ्युपेतुं शक्यत्वादित्याहुः ध्वंसस्य प्रागभावः प्रागभावस्य च ध्वंसः प्रतियोग्येव प्रतियोगिसत्त्वकाल एव तत्प्रत्ययादिति प्राचीनमतं दूषयति । ध्वंसेति । तस्येति । घटादेरित्यर्थः । ध्वंसप्रागभावौ न स्त इति द्वित्वमिह्योपलक्षणं तेन घटस्य ध्वंसो नास्ति प्रागभावो नास्तीत्यर्थः । वस्तुतो घटादेर्ध्वंसो भविष्यति प्रागभावो नष्ट इत्यादिकप्रयोग एव ग्राह्यः । उक्तस्य प्रत्ययस्यात्यन्ताभावविषयत्वेनाप्युपपत्तेरित्यवधेयम् । अभावत्वेति । यद्यपि दर्शितप्रत्ययो ध्वंसत्वप्रागभावत्वे अखण्डोपाधी एवावगाहते न तु भावभिन्नत्वघटिते तेऽच भावसाधारणे एवोपगमितुमुचिते लाघवात् । घटध्वंसस्य प्रागभावो न भाव इत्यादिकश्च प्रत्ययः शशविषाणसम एव तथापि घटादौ ध्वंसत्वप्रागभावत्वे घटध्वंसप्रागभावप्रतियोगित्वोपगमे घटध्वंसस्य प्रागभावो भविष्यति ध्वंसो नष्ट इत्यादिप्रत्ययप्रसङ्ग एव दूषणमवसेयमिति वदन्ति । उक्तानाः पुनरत्र ध्वंसप्रागभावयोः ध्वंसत्वप्रागभावत्वनिरूपितप्रतियोगित्वविरहादेव नोक्तप्रत्ययप्रसङ्ग इति नातिरिक्तावेव तावित्याहुः । परे तु प्रागभावो ध्वंसोऽन्योन्याभावोऽत्यन्ताभावश्च नाभाव इति प्रागभावत्वावच्छेदेन भावभिन्नत्वप्रत्ययं कल्पयन्तोऽभावाभावमात्रमेवातिरिक्तं कल्पयन्ति । प्रागभाव एवेति । भविष्यतीति

प्रत्ययो वर्तमानकालोत्तरकालोत्पत्तिकत्वावलम्बनः इदानीं घट-प्रागभाव इत्यादिकस्तु प्रत्ययो न लोकानामिति भावः ॥

५७ । ३ । संस्कार एवेति । युक्तं चैतत् लाघवेन तत्त-विषयत्वेन विषयितासंसर्गेण तत्तया वा ज्ञानलक्षणप्रत्यासत्ते-र्हेतुत्वात् अत एव कृतितज्जनकेच्छाद्वेषाणां तत्ताविशिष्टतया तत्तासाक्षात्कार उपपद्यते कृत्यादेरेव प्रत्यासत्तित्वादिति संस्कारेति । संस्कारध्वंसे व्यभिचारवारणाय ज्ञानेति । अविरो-धादिति । प्रत्यभिज्ञायाः संस्कारजन्यत्वाविरोधादित्यर्थः । अनुद्भूते । उद्बोधकविरहिते । अभिभूते । स्मृतिप्रतिबन्धकस-हिते । तत्तास्मृतीति । तथा च गुरुणापि तत्ताज्ञानत्वेन हेतुत्वम् कृतिसाक्षात्कारपूर्वं च विषयस्मृतिर्नियमतः कल्प्यते तज्जनकेच्छाद्वेषयोश्च न तज्जनकज्ञानस्यैव वा प्रत्यक्षत्वमेवेति भाव इति साम्प्रदायिकाः । संस्कारान्यतत्ताविषयकत्वेन तदन्यत्वविशिष्टतत्तया संस्कारव्यावृत्तकृत्यादिसाधारणजाति-विशेषवत्तत्ताविषयकत्वादिना हेतुत्वम् । उक्तानन्तविषय-स्मृतिकल्पनामपेक्ष्य लाघवेन जातिविशेषकल्पनाया उचित-त्वात् । वस्तुतस्तत्त्वनिरूपणदशायां समानाधिकरणज्ञानेच्छा-दीनामपि युगपदुत्पादाभ्युपगमात् तत्ताज्ञानत्वेनैव हेतुत्वमिति परैरपरिशीलितः पन्था । संस्कारो निर्विषयक एव सविषय-कत्वे मानाभावात् । अनुभवव्यापारतयैव तत्सिद्धेः । इत्थं तत्ता-विषयकत्वेनैव हेतुत्वमिति स्वतन्त्राः । एतेन विशिष्टबुद्धिं प्रति विशेषणधियो हेतुत्वेन विशिष्टवैशिष्ट्यबुद्धिं प्रति च विशेष-णतावच्छेदकप्रकारकबुद्धेर्हेतुत्वमते तदपि व्याख्यातम् । अत्र च

विशेषणतावच्छेदकप्रकारकबुद्धेर्हेतुतायां तथा निश्चयत्वमेवावच्छेदकं रक्तो दण्डो न वेति संशयोत्तरं रक्तदण्डवानिति ज्ञानानुदयादिति साम्प्रदायिकाः । तादृशज्ञानत्वेनैव तत्कारणताया अवच्छेदो न तु निश्चयत्वेन उक्तसंशयानन्तर रक्तारक्तदण्डवानिति बुद्धेरानुभविकत्वादिति पुनरस्मत्पितामहचरणाः । वस्तुतो भावनाख्यसंस्कारेऽपि मानाभावः ध्वंसद्वारैव स्मृतिहेतुताया उपपत्तेः ध्वंसस्यानन्तत्वेऽपि उद्बोधकविरहादेव स्मृतेर्विरहात् । प्रतियोगिध्वंसयोरेकत्राजनकत्वप्रवादस्य मानाभावेनाश्रद्धेयत्वात् । यत्तु ध्वंसस्य कारणत्वे ऽनुभवादिप्रतिबन्धकः स्यात् न चैवमेकत्र जनकत्वाप्रतिबन्धकत्वप्रतिबन्धकयोर्विरोधादिति तन्न विरोधासिद्धेः । अथैवं स्वनाशसहायस्य मणेरपि दाहहेतुत्वं स्यान्न स्यात् मानाभावात् मणिध्वंसं विनापि दाहदर्शनात् । यदभावत्वेन कारणत्वं तस्यैव प्रतिबन्धकत्वाद् विना चानुभवादिकं स्मृतेरनुदयात् । अथैवं धर्मोऽधर्मश्च द्वयमपि न स्यात् विहितनिषिद्धक्रिययोरपि ध्वंसद्वारा सुखदुःखादिहेतुत्वोपपत्तेः । ध्वंसस्यानन्तत्वेऽपि फलप्रवाहविच्छेदस्य तत्तद्विषयविशेषसान्निध्यविरहादेव सम्भवात् सत्यपि धर्मादौ फलानुत्पत्तेस्त्वयापि तथाभ्युपगमात् प्रायश्चित्तादीनां ध्वंसद्वारा साक्षाद्वा नरकादिप्रतिबन्धकतयैव प्रवृत्त्यादेरुत्पत्तिरिति चेन्न स्यादेवं यदि न स्यातां पापनाशमुद्दिश्य प्रायश्चित्तादौ पुण्यनाशं विशिष्य कर्मनाशाजलस्पर्शादौ प्रवृत्तिनिवृत्ती शिष्टानाम् । न स्याच्च प्रायश्चित्तादेः

पापादिनाशकताबोधको वेदः । यदि च शिष्टानां तथा प्रवृत्त्यादिकं नोपेयते उपेयते च वेदानामन्यथार्थकत्वं तदा स्वर्गादिकं प्रत्येव न मानं युक्तेस्तुल्यत्वात् कैव कथा तदर्थकव्यापारविचारेष्विति दिक्। अत्र च तत्ताज्ञानजन्यत्वं तत्ताविशिष्टसाक्षात्कारत्वेन लाघवात् । अत एव निर्विकल्पकसिद्धिरपीत्यस्मत्पितृचरणाः । तत्तादिविषयितानिष्ठं वैजात्यमेकमेव कल्प्यते । अनन्तनिर्विकल्पकवाल्पनामपेक्ष्य लघुत्वात् । एतेनेन्द्रियसंयोगादिजन्यतापि व्याख्याता व्याख्यातं चानुमित्यादौ लिङ्गकत्वादिकं घटादिशाब्दबुद्धौ घटपटादिज्ञानजन्यत्वं च। वस्तुतो लिङ्गभेदेन व्याप्तिभेदेन विभिन्नेषु परामर्शेषु वह्न्यादिविषयितानिष्ठमेकमेव वैलक्षण्यं कल्प्यते लाघवात् एवञ्च पर्वतविशेष्यकवह्निविधेयकानुमितित्वादिकमेव जन्यताया जनकतायाश्च वह्निनिरूपितविलक्षणविषयित्वादिकमेवावच्छेदकम् । एवं घटादिपदजन्यघटाद्युपस्थितावपि घटादिविषयितायामपि वैलक्षण्यमेकमेव कल्प्यते तथा च घटादिशाब्दत्वघटादिनिरूपितविलक्षणविषयित्वाभ्यामेव कार्यकारणभावः । इत्थं च केवलान्वय्यनुमानमपि निराबाधपदमादधातीति नैयायिकनयनानन्दनी शरणिः ॥

६७ । १ । अयं स्थाणुर्न वेति वाक्यश्रवणानन्तरं पदजन्यधर्मिकोटिद्वयादिज्ञानसहितात् प्रत्यक्षप्रमाणादेव साक्षात्कारात्मकः संशयः तत्त्वस्य प्रत्यक्षत्वव्याप्यत्वादिति प्राचीनमतं निराकरोति । पदेति । पदज्ञानजन्येत्यर्थः ।

तत्राद्यं पञ्चदश द्वितीयं षोडश । उभयत्र हरः स एव । ततः खण्डाभ्यां हरे पृथगपवर्त्तिते जात आद्यो हरो द्वात्रिंशत् ३२ । अन्यस्त्रिंशत् ३० । अतो द्वात्रिंशता त्रिंशता च पृथग्गताब्दा भक्ताः फलैक्यमेकादशगुणाब्दयुतं त्रिंशद्भक्तं फलमधिमासाः । शेषं प्राग्वच्छुद्धिरित्युपपन्नम् ॥ ६ ॥

वा.वा.—अत्रापि प्रकारान्तरं द्विधाऽब्दा द्विरामैरिति । अत्राधिदिनानां ११ । ३ । ५२ । ३० खण्डत्रयं कृतम् । एकम् ११ । द्वितीयम् ० । २ । तृतीयम् ० । १ । ५२ । ३० । तत्र प्रथमे शिवघ्नाब्दाः । द्वितीयं त्रिंशत्सवर्णितम् । तृतीयं तु द्वात्रिंशतेति सर्वं निरवद्यम् ॥ ६ ॥

मरीचिः—अथेदमेव भुजङ्गप्रयातवृत्तनिबद्धप्रकारान्तरेण धीवृद्ध्यर्थमाह द्विधाऽब्दा द्विरामैरिति । ते आप्ताः पूर्वागता एव । अन्यत् स्पष्टार्थम् ।

अत्रोपपत्तिः । एकवर्षे शुद्धिः ११ । ३ । ४३ । अस्य गुणनार्थं खण्डद्वयमेकत्रैकादशापरत्रेद— ० । ३ । ५२ । ३० मिदमेकस्थं तदधो हरश्चेति गुणहरौ $\frac{१३९५०}{२१६०००}$ । अत्रापि खण्डगुणनार्थं गुणस्य खण्डद्वयम् । एकं खस्वाद्रिरसमितं द्वितीयं द्विसप्ततिशतम् । प्रत्येकं हरश्च स एवेति । $\frac{६७५०}{२१६०००}+\frac{७२००}{२१६०००}$ । एतौ गुणहरौ स्वगुणेनापवर्त्त्य हरस्थाने सिद्धौ ३२, ३० । तथा च द्विधागतवर्षाणि द्वात्रिंशद्भक्तानि त्रिंशद्भक्तानि च । फलयोगे द्वितीयखण्डोत्पन्नफलम् । अस्य प्रथमखण्डफलं योज्यमित्येकादशगुणितगतवर्षाणि योजितानि । शेषं प्रागुपपादितमित्युपपन्नं द्विधाऽब्दा इत्यादि ॥ ६ ॥

इदानीं दिनाद्येन विनाऽप्यब्दाधिपानयनमाह ।

***गताब्दाधिमासान्तरं द्विघ्नमाढ्यं**
**त्र्यहैर्गतैः सप्तभक्तावशिष्टम् ।**
**विशुद्धं च शुद्धेः स वर्षाधिपो वा**

* अत्रोपपत्तौ मरीचेर्वासनावार्त्तिकं श्रेय इति निपुणैर्विभाव्यम् ।

भवेत् सप्तभक्तावशिष्टोऽर्कपूर्वः* ॥ ७ ॥

वा.भा.—स्पष्टम् ।

अत्रोपपत्तिः । रव्यब्दान्ते योऽहर्गणस्तत्र यो वारः सोऽब्दाधिपः । प्रत्यब्दं सौरदिनसंख्या पञ्चाधिकं शतत्रयम् । तस्मिन् सप्ततष्टे त्रयोऽवशिष्यन्ते मासदिनेषु सप्ततष्टेषु द्वयमवशिष्यते । अतो गताब्दास्त्रिगुणा गताधिमासा द्विगुणास्तदैक्यं सप्ततष्टं यावद्भवति तावदेव चैत्रादेः प्रागतीते तिथिगणे सप्ततष्टेऽवशेषं स्यात् । तत् किल शुद्धितिथिषु योज्यम् । ततः पूर्वलब्धाः क्षयाहाः शोध्याः । तथा प्रत्यब्दं पञ्च पञ्च । अतोऽब्दाः पञ्चगुणाः शोध्याः । पूर्वं त्रिगुणाः क्षेप्याः । अतो द्विगुणाः शोध्या एव । द्विगुणाः किलाधिमासाश्च योज्याः । अतो लाघवार्थमधिमासोना अब्दा द्विगुणास्तैर्लब्धावमैश्च सप्ततष्टैः शुद्धिरूना सप्ततष्टा रव्यब्दान्ते वारो भवति । स एवाब्दप इत्युपपन्नम् ॥ ७ ॥

वा.वा.—इदानीं दिनाद्येन विनाऽप्यब्दपमाह गताब्दाधिमासान्तर-

---

* गताब्दाधिमासान्तरमित्यादिना यदब्दपानयनं तत् पूर्वमेवाचार्यैः "अधोऽधस्त्रिधा" इत्यादिना कृतम् । मध्येऽत्र तदुपयोगि प्रकारान्तरैरवमाद्यमानीय पुनरब्दपानयनं पूर्वप्रकारादन्यथेति 'दिनाद्येन विनाऽपी'त्यत्र न कश्चिदन्यो गूढाशयः । प्राचीनसमये गणितगोलयोर्विषयस्य दुर्ज्ञेयत्वेऽपि व्याकरणशब्दव्युत्पत्त्याधिक्याच्च भाष्यवार्त्तिकमरीचिकाराणां तदानीन्तनानामाचार्याणां व्याख्योपपत्तय. इदानीन्तनानां प्रायः शाब्दबोधरहितानां पुरतोऽपमानिता न भवेयुरतो नव्योपपत्तिरीतिमाश्रित्य तदुपपत्तिः ।

कल्पादितो गतसौरवर्षाणि = गव, गतसौरमासाः = गसौमा इत्यादिसंकेताक्षराणि संकेतचिह्नान्यपि संप्रति प्रसिद्धानीति ।

अथ गव × १२ = गसौमा,

∴ गचांमा = गसौमा + गअधिमा = गव × १२ + गअधिमा

∴ गचांदि = गव × १२ × ३० + गअधिमा × ३० + चैसिति ।

∴ गसादि = गचांदि − गचदि = गव × ३६० + गअधिमा × ३० + चैसिति − (५गव + अवमादि)

मिति । अत्र भाष्यकारः । * सौरवर्षाणि षष्ठ्यधिकशतत्रयगुणितानि सौरदिनानि भवन्ति तेषु गताधिमासास्त्रिंशद्गुणिता योज्यास्ते चान्द्रा भवन्ति । तेषु पूर्वानीतक्षयाहाः पञ्चगुणाब्दयुक्ताः शोध्यास्ते सावनाः सौरवर्षादौ भवन्ति शुद्धिश्च योज्या । ततः सप्ततष्टाः कार्याः स सौर-वर्षादौ वारो भवति । तत्रैवं कृतम् । वर्षदिनानि ३६० सप्ततष्टानि जातं त्रयम् ३ । गताधिमासगुणकीभूता त्रिंशदपि सप्ततष्टा शेषं द्वयम् २ । तस्मादयमर्थो निष्पन्नः । द्विगुणगताधिमासेषु त्रिगुणवर्षाणि योज्यानि पञ्चगुणानि वर्षाणि शोध्यानि । तत्र द्विगुणगताधिमासेषु द्विगुणवर्षाण्येव शोध्यानीत्यागतम् । तत्रापि प्रथममेवान्तरं कृत्वा द्विगुणे क्रियमाणे

---

एवं तिथ्यन्ते सावना अत उदयार्थमवघट्यः शोध्यास्तदा गतवर्षान्ते विद्यमान-वर्षादौ वा सावनाहर्गणः

$$=\text{गव} \times ३६० + \text{गअधिमा} \times ३० + \text{चैसिति} - (५\ \text{गव} + \text{अवमादि}) - \text{अवघ}$$

वारगणनार्थं सप्ततष्टोऽतोऽब्दपः

$$= \text{गव} \times ३ + \text{गअधिमा} \times २ + \text{चैसिति} - ५\text{गव} - \text{अवमादि} - \text{अवघ}$$

$$= \text{चैसिति} - \text{अवघ} - \{२\ (\text{गव} - \text{गअधिमा}) + \text{अवमादि}\}$$

$$= \text{शु} - \{२\ (\text{गव} - \text{गअधिमा}) + \text{अवमादि}\}$$

इह सर्वत्र सप्ताधिके सप्ततष्टः ।

धनर्णार्थं भाष्यवासनामरीचयोऽवलोक्या अत उपपन्नम् ।

अथ प्रकारान्तरोपपत्तिः ।

"दिनादिक्षयाहादिदिग्घ्नाब्दयोगः"-इत्यादिना

$$\frac{\text{दिशा} + \text{क्षया} + १०\ \text{गव}}{३०} = \text{गअधिमा} + \frac{\text{शु}}{३०}$$

$$\therefore \text{दिशा} + \text{क्षया} + १०\ \text{गव} = \text{गअधिमा} \times ३० + \text{शु} = (\text{दिशा} + \text{गव}) + (\text{क्षया} + ९\ \text{गव})$$

अत्र $\text{दिशा} + \text{गव} = \text{वप}$ $\therefore \text{वप} = \text{गअधिमा} \times ३० + \text{शु} - \text{क्षया} - ९\text{गव}$

रव्यादिवारार्थं सप्ततष्टः

$$\text{वप} = \text{गअधिमा} \times २ - \text{क्षया} + \text{शु} - २\ \text{गव} = \text{शु} - \{२\ (\text{गव} - \text{गअधिमा}) + \text{क्षया}\}$$

पुनः सति संभवे सप्ततष्टमित्युपपन्नम् ।

* इतोऽग्रे भाष्यकारस्याभिप्राय एव न त्वानुपूर्वी भाष्यकारस्य तत्पङ्क्तिः ।

तादृशमेव भवतीति गताब्दाधिमासान्तरं द्विघ्नमित्युक्तम् । तत्राब्दानां बहुत्वाद्गताधिमासा एव तेभ्यः शोधिताः । तस्माद्विपरीतशोधनादृणमिदं शोधितम् । स्वषष्ट्यंशहीनाब्दाखाङ्केन्दुभाग इत्याद्यानीतक्षयाहा अपि शोध्यत्वेनर्णगताः । अस्वयोर्योग इति गताब्दाधिमासान्तरं द्विघ्नमाढ्यं क्षयाहैर्गतैरित्युक्तम् । पुनः सति संभवे सप्ततष्टम् । द्विगुणगताब्दाः सावयवेषु द्विगुणगताधिमासेषु शोध्या इति शुद्धिर्धनगतैवास्ति । द्विगुण-गताधिमासा एव विपरीतशोधनेन परमृणगता जाताः । शुद्धिस्तु धन-गतैव । तस्माद् "धनर्णयोरन्तरमेव योगः" इति विशुद्धं च शुद्धेरित्युक्तम् । पुनः सप्तभक्तावशिष्टोऽर्कपूर्वोऽब्दपो भवति । अथ वाऽन्यथोच्यते दिना-द्विक्षयाहादिदिग्घ्नाब्दयोगे खरामहृते लब्धं गताधिमासा अवशिष्टं शुद्धि-संज्ञं भवतीति प्रागभिहितम् । तत्र दिनादिस्थानेऽब्दपो यदि गृह्यते तदाऽब्दपक्षयाहादिनवघ्नाब्दयोगः खरामैर्हृतो लब्धं गताधिमासा भवन्ति शेषं च शुद्धिरिति । यतो दिनाद्यावशेषाद्ब्दानन्तिमं मब्दप इति । अतो विलोमेन त्रिंशद्गुणितगताधिमासाः शुद्धियुक्ता विधेयास्तेषु नव-गुणगताब्दाः पूर्वानीतक्षयाहाढ्यं च शोध्यं सप्ततष्टोऽब्दपो भवति । तत्र गुणकावेव पूर्वं सप्ततष्टौ कृत्वा ताभ्यां गुणने द्विगुणागताधिमासा जाताः । नवसु सप्तोर्वरितेषु द्वयमेव गुणो भवतीति द्विगुणागताब्दाश्च भवन्ति तयोरन्तरे क्रियमाणे पूर्ववत् सर्वमुत्पद्यते । एवं सर्वत्र वासना-भिरनेकाभिः शिष्याणां कौतूहलमुत्पादयन्त्यस्मद्विधाः । अत्रास्माभिर्ग-न्थविस्तरभयान्न लिख्यन्ते ॥ ७ ॥

**मरीचिः**—अथ प्रकारान्तराब्दपानयनव्याजेन पूर्वसाधितशुद्धिक्षयाहादी-नामुपकरणानां शुद्धत्वज्ञानं भुजङ्गप्रयातेनाह गताब्दाधिमासान्तरमिति । कल्पगतवर्षप्रागानीतशुद्धिनावगतगताधिमासयोरन्तरं द्विगुणम् । गतैः। "ये गत्यर्थास्ते ज्ञानार्थाः"-इति। पूर्वसाधनप्रकारेण ज्ञातैरित्यर्थः। क्षयाहैर्युक्तम् ततः सप्तभक्तं फलस्य त्यागेनावशेषम् । शुद्धेरधिमासप्राप्त्यवसरे शेषादि-

त्यर्थः । अन्यथा पूर्वानीताब्दपतुल्यत्वासिद्धेः । यद्वा गतैः क्षयाहैरित्यागतक्षयाहोर्ध्वाङ्कैरेवेत्यर्थः । ननु तदधोऽवमवघट्यादिभिरपि । पूर्ववदादिपदाभावात् । तेनावमशेषघटिकोनाधिशेषस्य दिनादेः शुद्धिपदवाच्यत्वेन यथाश्रुतशुद्धेर्ग्रहणेऽपि न क्षतिः । विशुद्धं हीनम् । यदा न शुद्ध्यति तदा सप्तयुतशुद्धिर्ग्राह्येति ज्ञेयम् । वर्षाधिपः स पूर्वागत एव भवेदिति । ननु यदा शेषं सप्ताधिकं तदा पूर्वतुल्यत्वं कथमत आह । सप्तभक्तावशिष्ट इति । अयं सप्तभक्तफलत्यागेन शेषितः कार्य इत्यर्थः । शेषमर्कपूर्वगणनयाऽब्दपः पूर्वागत एव स्यात् । तथा चैतत्प्रकारेण पूर्वसाधिताब्दप आयाति तदा शुद्ध्यादिकमानीतं शुद्धमन्यथा त्वशुद्धम् । एतत्प्रकारस्य तदुपजीव्यत्वादिति भावः ।

अत्रोपपत्तिः । सौरवर्षादौ कल्पात् सावनाहर्गणः सावयवः सप्ततष्टोऽब्दप इति प्राक्प्रतिपादनादहर्गणः साध्यस्तदर्थं तत्र चान्द्राहर्गणः साध्यः । तज्ज्ञाने तत्कालीनसावयवावमहीनेनाहर्गणज्ञानसम्भवात् । चान्द्राहर्गणस्तु सौरदिवस्य सावयवाधिदिनयोगरूप इति । तत्र सौरदिनज्ञानार्थं सौरवर्षाणि षष्ट्यधिकशतत्रयगुणानि । एषां शुद्ध्यानयनावसरप्राप्ताधिमासदिवसचान्द्रशुद्धियोगो योज्यः । तत्राधिमासानां सावयवत्वात् । अतोऽधिदिनार्थमधिमासास्त्रिंशद्गुणाः कार्याः । अथान्ते सप्ततष्टोऽवयवनिमित्तमहर्गणः कार्य इति पूर्वमेव लाघवाद्वर्षगुणा- ३६० धिमास-३०गुणौ सप्ततष्टौ कृतौ ३, २ । तथा च त्रिगुणागतवर्षद्विगुणागताधिमासयोर्योगश्चान्द्रशुद्धियुक्त इति । अत्रावमानि तत्कालोत्पन्नानि हीनानि कार्याणि । तत्र सौरवर्षादौ संपूर्णदिनक्षयज्ञानाभावादेकवर्षक्षयाहोर्ध्वाङ्कत्यागेन तदेकदेशानयनस्योक्तत्वाच्च पञ्चगुणितवर्षयुक्तानीनि क्षयाहा हीनाः कार्या इति सिद्धम् । अथ त्रिगुणवर्षाणां पूर्वमेव पञ्चगुणितवर्षैः सहान्तरे गुणयोरन्तमेव लाघवाद्वर्षाणां गुणक उत्पन्नः । पञ्चगुणितशोध्यस्य शेषत्वाद्द्विगुणागतवर्षाणि ऋणमवशेषं च द्विघ्नवर्षद्विघ्नाधि-

मासयोरन्तरं कार्यमिति सिद्धेऽपि लाघवाद्गताधिमासगतवर्षयोरन्तरं द्विगुणमिति कृतं फलस्य तुल्यत्वात् । वर्षेभ्योऽधिमासानां न्यूनत्वात् सिद्धमिदमृणमवमावयवम् । अथानीतत्रयाह्ना अपि तदवयवत्वात् पञ्चगुणितवर्षेषु पूर्वं योजनेनर्णत्वाच्चात्र योजिताः । अथाधिमासावयवत्वात् केवलाधिशेषरूपचान्द्रशुद्धेर्योजने "धनर्णयोरन्तरमेव योगः" इति । धनशेषार्थं तदूनशुद्धिः कार्या सिद्धाब्दपपदार्थस्यानृणत्वेन धनत्वात् । पूर्वसिद्धस्यावमावयवत्वाच्छुद्धेश्चान्द्रावयवत्वाच्चावमोनचन्द्रस्य सावनत्वेन तदूनशुद्धिर्वा कार्या शेषस्याब्दपत्वेन सप्ताधिकत्वेन तष्टमिति पूर्वमेवावमावयवं सिद्धम् । शुद्ध्यधिकं चेत् सप्ततष्टं कार्यमन्यथा तदूनशुद्धिर्न स्यादिति तत् कृतम् । अत एवैतस्य सप्ततष्टेऽपि कदाचिच्छुद्ध्यधिकत्वेऽपि सप्तयोजितशुद्धेर्ग्रहणाच्च क्षतिः । अथ सिद्धस्याब्दपस्य सप्ताधिकत्वसंभवेन तत् तष्टं पुनरुक्तमुपपन्नम् । गताब्दाधिमासान्तरमित्यादिश्लोकोक्तमित्यलम् ॥ ७ ॥

इदानीमवमैर्विनाऽप्यवमशेषघटिका आह ।

यत् त्वधिमासकशेषकनाडी-
पूर्वमिदं रहितं विहितं सत् ।
आद्यदिनाद्यघटीभिरथैवं
स्युः क्षयशेषभवा घटिका वा ॥ ८ ॥

वा-भा-यदधिमासशेषं तिथ्यात्मकं तस्याधो या घटिकास्ता आद्यदिनाद्यस्य घटीभिरूनाः सत्यः क्षयघटिका भवन्ति । अत्र "द्विधाऽब्दा द्विरामैः खरामैश्च भक्ताः" इत्यादिना ये दिनाद्ये फले उत्पद्येते तन्निराकरणार्थमाद्यग्रहणम् ।

अत्रोपपत्तिः सुगमा । यतो दिनावमघटिकैक्येनाधिमासशेषस्य घटिकास्ता दिनघटिकोना अवमघटिकाः । यदाऽवमघटिकोनास्तदा दिनघटिकाः स्युरिति भावः ॥ ८ ॥

वा.वा.–अथावमैर्विनाऽवमशेषघटिकानयनमाह यत् त्वधिमासकशेष-केति ॥ ८ ॥

मरीचिः–अथानीतक्षयाहाधोऽवयवस्य घट्यादित्वेन तज्ज्ञानेऽपि अह-र्गणे केवलघट्यादेरुपयोगात् तदानयनप्राधान्येनाह यत् त्वधिमासकशेष-केति । शुद्ध्यानयनेऽधिमासप्राप्तौ यच्छेषं दिनादिकं तदधोऽवयवभूतं घट्यादि यत् स्थितम् । इदमाद्यदिनाद्यघटीभिरब्दपोपयुक्तानीतदिनाद्य-धोऽवयवरूपघट्यादिभिः । ऊनं कृतं सत् । एवमनेन प्रकारेण शेषं क्षयशे-षभवा घटिकाः स्युः । आनीतक्षयाहानामधोऽवयवरूपघट्याद्यवमशेषो-त्पन्नमिति तच्छेषसंज्ञं स्यात् । वा प्रकारान्तरेण । आनीतक्षयाहैः पूर्व तज्ज्ञानात् । अत्र 'द्विधाऽब्दा द्विरामैः खरामैश्च भक्ताः' इत्यनेन ये दिनाद्ये फले आगते तद्वारणार्थमाद्यपदोपादानमिति ध्येयम् । "दोधकवृत्त-मिदं भभभाद्गौ *"–इति लक्षणाद्दोधकमिदं छन्दः ।

अत्रोपपत्तिः । चान्द्रसावनान्तरेऽवमानीति तद्घट्याद्योरन्तरे-ऽवमघटिका एव । अतोऽधिमासप्राप्तावमशेषस्य चान्द्रत्वेन तद्घटीनामपि तथात्वेनाङ्गीकारादब्दपयुक्तदिनाद्यस्य सावनत्वे तद्घटीनामपि तथा-त्वाङ्गीकाराच्च तदूनं तत् क्षयशेषघट्याद्यं भवेत् । अत एव यदा हीनं तदा षष्टियुक्ताधिशेषघटीग्रहणाच्च घट्याद्यानयने क्षतिः ॥ ८ ॥

इदानीं रव्यब्दान्तग्रहानयनमाह ।

कल्पजचक्रहतास्तु गताब्दाः
कल्पसमाविहृता भगणाद्याः ।
स्युर्ध्रुवका दिनकृद्गणान्ते
पातमृदूच्चचलोच्चखगानाम् ॥ ९ ॥

वा. भा.–स्पष्टार्थमिदम् ।

* इदं वृत्तरत्नाकरे ३ अध्याये ।

अत्रोपपत्तिस्त्रैराशिकेन । यदि कल्पवर्षैः कल्पभगणा लभ्यन्ते तदा गतैः किमिति फलं रविमण्डलान्तिका ग्रहा भवन्ति । ये तत्र ग्रहास्ते ध्रुवकाः कल्पिताः । यदत्र पातमृदूच्चग्रहणं तत् तेषामतिमन्दगतित्वाद्वर्षगणेनैवानयनमुचितमिति सूचितम् ॥ ९ ॥

वा.वा.—इदानीं रव्यब्दान्ते ग्रहानयनं कल्पजचक्रहता इति ॥९॥

मरीचिः—अथ ग्रहसाधनार्थमुपयुक्तं ध्रुवकाख्योपकरणानयनं दोधकवृत्तेनाह कल्पजचक्रहता इति । कल्पगताब्दाः कल्पोक्तभगणगुणाः कल्पवर्षमानभक्ताः फलं पातमृदूच्चचलोच्चग्रहाणां यथायोग्यं दिनकृद्गणान्ते सूर्यस्य मेषादिमीनान्तात्मकभगणभोगपरिपूरणकाले 'रवेश्चक्रभोगोऽर्कवर्षम्'—इत्युक्तेर्मध्यमसौरवर्षादावित्यर्थः । भगणाद्या भगणादिविकलान्तावयवात्मका ध्रुवकाः स्युः ।

अत्रोपपत्तिः । कल्पसौरवर्षैः कल्पभगणास्तदेष्टसौरगतवर्षैः के इत्यनुपातेनोपपन्नम् । वर्षस्य सौरत्वात् तदादौ वर्षपर्यन्तग्रहसाधने एतत्फलस्योपयोगेन स्थिरत्वाद्ध्रुवका इति संज्ञा युक्ता ॥ ९ ॥

इदानीं चन्द्रध्रुवकं प्रकारान्तरेणाह ।

यत् तु दिनाद्यधिशेषमिन१२घ्नं
स्याद् ध्रुवकस्त्वथ वा स लवाद्यः ।
कैरविणीवनिताजनभर्त्तुः
पीतचकोरमरीचिचयस्य ॥ १० ॥

वा.भा.—यदधिमासशेषं तिथ्यात्मकं तद्द्विगुणं भागात्मको विधुर्भवति ।

अत्रोपपत्तिः सुगमा । यतो द्वादशगुणास्तिथयो रवीन्द्वोरन्तरभागाः स्युः । तत्र रविः पूर्णम् । अतस्तादृगेव शशीत्युपपन्नम् ॥ १० ॥

वा.वा.-प्रकारान्तरेण चन्द्रध्रुवकमाह । यत् तु दिनाद्यधिशेषमिति । यदूनाहनाडीविहीनं न कृतं तदधिशेषमेव । शेषं स्पष्टम् ॥ १० ॥

**वा.वा.**—प्रकारान्तरेण चन्द्रध्रुवकमाह यदिति । यद्गुणाहनाडीविहीनं न कृतं तदधिशेषमेव शेषं स्पष्टम् ॥ १० ॥

**मरीचिः**—अथ दोधकवृत्तनिबद्धप्रकारान्तरेण लाघवार्थं चन्द्रध्रुवकानयनमाह यदिति । अधिमासलब्धौ यदधिशेषं दिनादि तद्द्वादशगुणम् । अथ वा प्रकारान्तरेण । स ध्रुवको लवाद्यो भागाद्यवयवात्मकः स्यात् । अयं कस्यागतोऽत आह कैरविणीत्यादि । "समे कुमुदकैरवे" इत्यभिधानात् । कैरविणी कुमुदिनी सैव वनिता स्त्री । तज्जनानां तज्जातीयानां भर्त्ता स्वामी । तस्य स्वविकासकाले चन्द्रोदयसद्भावाच्चन्द्रस्येत्यर्थः ।

"घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ सुधांशोः शङ्कयैव व्यरंसीत् ।
रजनिदिवसभेदं मन्दवाताः शशंसुः
कुमुदकमलगन्धानाहरन्तः क्रमेण" ॥

इत्यादिकाव्यप्रसिद्धेः । ननु के रौतीति केरवो हंसस्तस्येदं प्रियमिति क्षीरस्वाम्युक्तव्युत्पत्त्या कैरविणीति पदेन कमलिन्यपि संभवति ।

"हंसी वेत्ति परागपिञ्जरतनुः * कुत्रापि पद्माकरे
प्रेयान् मे बिसकन्दलीकिसलयं भुङ्क्ते स्वयं निर्वृतः ।
नो जानाति मनस्विनी यदधुना जम्बालमालेडयन्
शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः" ॥

इत्यादिकाव्ये हंसस्य कमलप्रियत्वोक्तेस्तत्पदेन सूर्योपस्थितिरपि संभवत्यतस्तद्वारणार्थमाह पीतेत्यादि । पीता आस्वादिताः । चकोरैरिति दाव्यप्रसिद्धपक्षिभिः । मरीचिचयाः किरणसमूहाः । यस्येत्यर्थाच्चन्द्रस्येत्यर्थः ।

---

* 'परागपङ्कलवपुः'—इति वा पाठः ।

"यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राक् कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते ।
यज्ज्वं वज्वलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयो-
बुद्ध्या व्योम्नि नियोजयन्ति कलशीमाभीरवामभ्रुवः" ॥

इत्यादिकाव्योक्तेः । अथ द्वितीयोक्तावतिप्रसङ्गनिरासात् प्रथमविशेषणस्य वैयर्थ्यमिति चेन्न ।

"चुलकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् ।
अधिकतरमुष्णमनयोः किमिह चकोरावधारयसि" ॥

इत्यादिप्रसिद्धकाव्योक्त्या चकोरैरग्निभक्षणद्वारा तत्किरणाः पीयन्त इति तत्पदेनाग्निरपि सिद्ध्येदिति तन्निवारणार्थं प्रथमविशेषणावश्यकत्वात् । तथा चोभयपदविशेषोपस्थितिश्चन्द्रस्यैव नान्यस्येति भावः ।

अत्रोपपत्तिः । वर्षादौ यश्चन्द्रः स तस्य ध्रुवस्तत्र तत्साधनम् । द्वादशगुणतिथिभागयुतः सूर्य इति । तत्रापि सूर्यस्य राश्याद्यवयवाभावात् तिथयो द्वादशगुणाश्चन्द्रध्रुवकोऽंशाद्यः । तिथयस्तु तत्राधिमासप्राप्तौ यदधिशेषं सावयवं दिनाद्यम् । अत उपपन्नं यत् तु दिनाद्यधिशेषमिनघ्नमित्यादि ॥ १० ॥

इदानीं कलिगतादाह ।

कलेर्गताब्दैरथ वा दिनाद्यं
पूर्वं यदुक्तं खलु तत् प्रसाध्यम् ।
अब्दाधिपस्तत्र सितादिकः स्याद्-
ध्रुवाश्च युक्ताः कलिवक्त्रखेटैः * ॥ ११ ॥

वा भा—स्पष्टम् ॥ ११ ॥

* वासनावार्त्तिके नृसिंहभट्टश्चर्याऽव्यस्य श्लोकस्य नाकरोदिति ।

**मरीचिः**—अथोपजातिकया कलिगतवर्षेभ्यः पूर्वोक्तोपकरणसाधनं लाघवादाह कलेरिति । अथ वा लाघवार्थं प्रकारान्तरेण । यद्दिनादिपूर्वपदादब्दपशुद्धित्रयाहर्गणध्रुवकाणां संग्रह उक्तः पश्चात् तत् सर्वमुपकरणजातं कलेर्गताब्दैः कलिसम्बन्धिगतवर्षैः पूर्वप्रकारान्तरेणैव साध्यम् । कल्पगतस्थाने कलिगतग्रहणेन यथोक्तं कार्यमित्यर्थः । अब्दाधिपे विरोधपरीहाररूपविशेषमाह अब्दाधिप इति । तत्र कलिगतसाधितोपकरणमध्येऽब्दपो य आगतः स सितादिकः शुक्रपूर्ववारगणनया स्यात् । तेन कल्पगतसाधिताब्दपेनाविरोधः । कलिगतसाधितग्रहध्रुवाणां कल्पगतसाधितग्रहध्रुवेभ्यो विसंवादादाह ध्रुवा इति । कलिगतसाधितध्रुवग्रहाणां कलिवक्रखेटैः कल्यादिस्थग्रहध्रुवैः प्रागुक्तैर्युक्ताः सन्तः राश्यादिध्रुवाः पूर्वागतसमा भवन्तीति ।

अत्रोपपत्तिः । कल्यादौ शुक्रवासरसत्त्वात् तदादिगणना । अधिशेषावमशेषाभावाल्लाघवाच्च तद्गतादुपकरणसाधनम् । ग्रहास्तु कल्पादपेक्षिताः । कल्यादौ सर्वेषां भगणपूरणाभावात् । अतः कल्यादिध्रुवैर्युक्ता आनीतध्रुवा राश्यादिका भवन्ति । भगणानां फलाभावेनाप्रयोजकत्वात् तत्त्यागात् । अतः सम्यगुक्तं कलेरित्यादि ॥ ११ ॥

इदानीमहर्गणार्थं क्षेपदिनान्याह ।

**स्वीयनखांशयुताः क्षयनाड्यः**
**क्षेपदिनानि दिवागणसिद्धौ * ।**

**वा. भा.**—पूर्वमानीता ये तयाहास्तेषामधो यत्राडिकाद्यं तत् स्वीयविंशांशयुतं सद्दिनाद्यं कल्प्यम् । या घटिकास्तानि दिनानि या विघटिकास्ता घटिकास्तासामप्यधो ये षष्ट्यंशास्तानि पानीयपलानि कल्प्यानीति । किमर्थम् । दिवागणसिद्धौ अहर्गणसिद्ध्यर्थम् ।

---

* एतत्पद्यार्धस्य वासनावार्त्तिकमरीचिसमाख्ये टीके अपतश्चैत्रसितादिगत इत्यादिलघ्वहर्गणानयनपद्यव्याख्यावसर एव पूर्वं निहिते द्रष्टव्ये ।

अत्रोपपत्तिः । लघ्वर्कादेऽहर्गणानयने यदवमानयनं तत्र चतुःषष्टि-र्भागहारः कृतः । ततश्चान्द्राहाणां चतुःषष्ट्यैकमवमं पतति । अतो रव्य-ब्दान्ते यदवमशेषं तच्छुद्धूनासु तिथिषु स्वीयकराभ्रतुरङ्ग-७०२ लवयुतासु सदृशच्छेदं कृत्वा क्षेप्यम् । ततश्चतुःषष्ट्या भागे गृहीते लब्धमवमानी-त्युचितम् । तत्र रव्यब्दान्ते यदवमशेषं घटिकात्मकं पूर्वं गृहीतमस्ति तत् तु षष्टिच्छेदं तच्चतुःषष्टिच्छेदं कार्यम् । अतस्ता घटिकाश्चतुःषष्ट्या किल गुण्याः षष्ट्या भाज्याः । एवं चतुःषष्टिच्छेदमवमशेषं भवति । अथ चतुः-षष्टिस्थाने त्रिषष्टिरेव कृता । किमिति । तत्रोच्यते पूर्वं या अधिमासशे-षतिथय आगतास्ता एव शुद्धित्वेन ग्रहीतुं युज्यन्ते । यतस्ताभिरूनाश्चै-त्राद्यास्तिथयोऽब्दान्तादयतो गृहीता भवन्ति । अथ च शुद्धितिथयः कार्यान्तरवशादवमघटीभिरूनाः शुद्धित्वेन परिकल्पिताः । अवमघटिको-नया शुद्ध्या यावच्चैत्राद्यास्तिथय ऊनीकृतास्तावच्छेषतिथिष्ववमशेषघटि-का अधिका जाताः । यतः शोध्यमानमृणं धनं स्यादिति । यत एकगुणा युक्ताः । अतस्त्रिषष्टिगुणा योज्याः । तत्रावमघटिकानां त्रिषष्टिर्गुणकारः षष्टिर्भागहारः । तत्र गुणकभागहारौ त्रिभिरपवर्तितौ । गुणकस्थाने एक-विंशति २१ भागहारस्थाने विंशतिः २० । फलं दिनानि । अत्र हराद्गुणको विंशांशाधिकोऽतः स्वीयखांशयुताः क्षयनाड्यः क्षेपदिनानीत्युपपन्नम् ।

इदानीमहर्गणानयनमाह ।

> चैत्रसितादिगतस्तिथिसंघः
>
> शोधितशुद्धिरधस्तु समेतः ॥ १२ ॥
>
> स्वीयकराभ्रतुरङ्ग-७०२ लवेन
>
> क्षेपयुतः कुनगाङ्कविभक्तः ।
>
> लब्धदिनक्षयवर्जितशेषो
>
> रव्युदये द्युगणोऽब्दपतेः स्यात् * ॥ १३ ॥

---

* चैत्रसितादीत्यनेन लघ्वहर्गण आनीतः । स च वर्षान्तेष्टाहर्गणयोरन्तरेण सुगम इति तद्व्याख्या ।

**वा. भा.**—चैत्रादेर्गततिथिसंचयः शुद्धिरहितस्त्रिष्ठः कार्यः । अन्तिमो द्विखतुरङ्गै-७०२ र्भाज्यः । फलं मध्यस्थे क्षेप्यम् । ततोऽनन्तरानीतानि क्षेपदिनानि तत्र क्षिप्त्वा स राशिश्चतुःषष्ट्या भाज्यः फलमवमानि शेषमवमशेषम् । चन्द्रानयनार्थं तत् पृथगनष्टं स्थाप्यम् । अवमैरूनः प्रथमो राशिरहर्गणः स्यात् । स चाब्दपत्यादिः । यस्मिन् वारे यावतीषु घटिकासु रव्यब्दान्तो जातस्तस्मात् कालात् तदनन्तरार्कोदयं यावद्या घटिकास्ता एवाहर्गणावयवीभूताः । यतस्तासु गतास्वब्दान्तो जातोऽभूत् । तदग्रतो दिनतुल्या वारा इति बुद्धिमता गणनीयम् ।

---

वअंअह = वअंचां − वअंक्षदि − वअंक्षघ ।

इअह = वअंचां + इचां − वअंक्षदि − अपूअ । ( अवमपूर्त्तितोऽवमः = अपूअ )

∴ इअह − वअंअह = इचां − अपूअ + वअंक्षघ = लअह

अत्र इचां = चैसितिसं − वअंअधिशे

∴ लअह = चैसितिसं − वअंअधिशे + वअंक्षघ − अपूअ

= चैसितिसं − (वअंअधिशे − वअंक्षघ) − अपूअ

= चैसितिसं − शु − अपूअ = शे − अपूअ

$$\text{इह, अपूअ} = \frac{\text{वअंक्षघ}}{६०} + \text{इअव} = \frac{\text{वअंक्षघ}}{६०} + \frac{\text{कअव} \times \text{इचां}}{\text{कचां}} \text{ ।}$$

$$\text{अत्र } \frac{\text{कअव} \times \text{इचां}}{\text{कचां}} = \text{इअव} = \frac{\text{इचां}}{६४} \times \frac{\text{कअव} \times ६४}{\text{कचां}} \text{ ।}$$

$$\text{अत्रापि } \frac{\text{कअव} \times ६४}{\text{कचां}} = \frac{२५०८२५५०००० \times ६४}{१६०२९९९०००००००} = \frac{१६७२१७ \times ६४}{१०६८६६६०} = \frac{१०७०१८८८}{१०६८६६६०}$$

$$= १ + \frac{१५२२८}{१०६८६६६०} = १ + \frac{१}{७०१} + \frac{६८८}{१२६९} \text{ ।}$$

$$\text{“अर्धाधिके रूपं ग्राह्यम्”-इत्यतः इअव} = \frac{\text{इचां} + \frac{\text{इचां}}{७०२}}{६४}$$

$$\therefore \text{ अपूअ} = \frac{\text{वअंक्षघ}}{६०} + \frac{\text{इचां} + \frac{\text{इचां}}{७०२}}{६४}$$

$$= \frac{६४ \frac{\text{वअंक्षघ}}{६०} + \text{इचां} + \frac{\text{इचां}}{७०२}}{६४} = \frac{६३ \frac{\text{वअंक्षघ}}{६०} + \frac{\text{वअंक्षघ}}{६०} + \text{इचां} + \frac{\text{इचां}}{७०२}}{६४}$$

अत्रोपपत्तिः । अत्र चैत्रादिगततिथयः शुद्ध्यूना अतः कृत यतोऽधिमासशेषतिथिभिः सावयवाभिरूनीकृताः सत्यो रव्यब्दान्ताद-यतो गृहीता भवन्ति । रव्यब्दान्तादूर्ध्वमिष्टदिनोदयं यावद्द्युगणः साध्यः । अतोऽब्दान्तानन्तरार्कोदयान्तरघटीतुल्येनाहर्गणाधोऽवयवेन भवितव्यम् । अब्दान्तस्तु दिनाद्यस्य घटिकान्ते । अतः शुद्धितिथिषु सावयवास्ववमघटिका विशोध्य दिनघटिका एव शेषीकृतास्ताभिस्ति-थिभ्यः शोधिताभिरहर्गणावयवघटिका यथोक्ता भवन्ति । एवं कृतेऽव-मानयनं किञ्चित् सान्तरं स्यात् । तत् क्षेपदिनानयनेन निरन्तरीकृतम् । अवमानयनेऽनुपातः । यदि कल्पतिथिभिः कल्पावमानि लभ्यन्ते तदाऽऽभि-किमिति । एवमवमानि गुणश्चन्द्रदिनानि हारः । ततः संचारः । यदि चन्द्रदिनहारेणावमानि गुणस्तदा चतुःषष्ट्या किमिति । चतुःषष्ट्या गुणितानामवमानां चन्द्रदिनहृतानां लब्धं रूपम् । शेषेण शेषमपवर्तितं जातं रूपम् ! हारश्चापवर्त्तितो जातो द्विखशैलमितः $\frac{१}{\frac{१}{७०२}}$ । अयं गततिथीनां गुणश्चतुःषष्टिर्हरोऽतः समेतः स्वीयकराश्चतुरङ्गुलवेनेति सर्वं निरवद्यम् ॥ १२-१३ ॥

---

$$= \frac{\frac{२१\ \text{वअंत्तघ}}{२०} + \text{चैमितिसं} - \text{वअंअधिशे} + \frac{\text{वअंत्तघ}}{६०} + \frac{\text{द्द्यचां}}{७०२}}{६४}$$

$$= \frac{\text{चेदि} + \text{चैमितिसं} - \text{शु} + \frac{\text{द्द्यचां}}{७०२}}{६४} = \frac{\text{चेदि} + \text{शे} + \frac{\text{द्द्यचां}}{७०२}}{६४}$$

$$\therefore \text{स्वल्पान्तरात् लअ} = \text{शे} - \frac{\left(\text{चेदि} + \text{शे} + \frac{\text{शे}}{७०२}\right)}{६४}$$

अतः स्वीयनखांशेत्याद्युपपत्तिपूर्वकं लघ्वहर्गणानयनं साधेपद्यं सूपपन्नम् ।

अत्रान्तिमभाज्यखण्डस्येष्टचान्द्रस्थाने श्रीमद्भास्कराचार्यैर्वर्षान्तावमघटीयुक्तेष्टचान्द्र एव 'शे'—इत्यभिधो गृहीतः क्रियालाघवात् । कदाचित् सूक्ष्मावयवग्रहणेनापूर्त्तिस्थले पूर्णत्वादिष्टावमस्यैकाधिकत्वेऽपीष्टवारालाभात् सैकनिरेककरणेन न काचिदापत्तिरन्यन्मरीचाववलोक्यम् ।

इष्टदिनोदयं यावद्ये ऽहर्गणास्त एव लघ्वहर्गणे दिवसा इति । अथावमानयनं सावनीकरणाय । कल्पचान्द्रैः कल्पावमास्तदाऽनेन सावनशुद्धिनचैत्रसितादिगततिथिसंघेन किमिति दिनक्षयानयनम् । तत्र संचारः । यदि कल्पचान्द्रमिते हरे कल्पावमानि गुणस्तदा चतुःषष्टिमिते हरे को वा गुण इति लब्धो गुणः सावयवः १ । ० । ५ । ३ । ४२ । हरस्तु चतुःषष्टिरेव । तत्रैकखण्डं रूपमितम् १ । द्वितीयमिदम् ० । ० । ५ । ३ । ४२ । कराब्धतुरङ्गैः सर्वाग्रं जातमुपरि * रूपम् । अत उक्तं पृथक् च समेतः स्वीयकराब्धतुरङ्गलवैनेति । इदं चतुःषष्टिच्छेदम् । पूर्वोक्तखण्डद्वयसाधितावमयोगेन कल्पादेरिष्टदिनोदयावधिसाधितनिरवयवावमतुल्येन भवितव्यमिति : सौरवर्षादिजा अवमघटिकाः षष्टिभक्ता अस्मिन्नवमाद्ये योज्याः । एवं कृतेऽत्र ये निरवावमाः सिद्ध्यन्ति त एव लघ्वहर्गणे शोध्याः । तत्र सौरवर्षादौ या दिनक्षयघटिकास्ताः षष्ट्या भाज्या दिनानि भवन्ति । एतेषामवमदिनानां यदि चान्द्राः क्रियन्ते चान्द्राहर्गणे चेत् क्षिप्यन्ते ततोऽवमानयनेनापि येऽवमास्ते यथोक्तापेक्षितावमा एव भवन्तीति षष्टिभक्तावमघटिकाः चतुःषष्टिगुणिताश्चान्द्रगणे योज्याः । तत्र त्रिषष्टिगुणिता एव योजिताः । यथाऽवमानयने केवलशुद्धिनचैत्रादिचान्द्रेभ्य एवावमाः साध्यास्तत्र सावनशुद्धिशोधनादवमघटिकाः केवलशुद्धिनचैत्रादिचान्द्रेभ्योऽधिकाः सन्ति । तस्मात् सौरवर्षादिजावमघटिकास्त्रिषष्ट्या गुणनीयाः षष्ट्या भाज्याः । तत्र गुणहरौ त्रिभिरपवर्त्य गुणस्थाने एकविंशतिः । हरस्थाने विंशतिर्जाता । यस्तु एकविंशत्या गुण्यते विंशत्या ह्रियते स स्वीयनखांशयुक्त एव भवति । अतः क्षेपयुतः कृतषड्विभक्त इत्यादिशोभनमुक्तम् । अत्र चतुःषष्ट्या गुणनं स्थूलमपि क्षेपे स्वीकृतं स्वल्पान्तरत्वात् । न हि चतुःषष्टिचान्द्राणामेकोऽवमो भवति "रुद्रांशकोनाब्धिरसैः क्षयाह"-इति

* द्विखतुरङ्गैर्गुणनेन पुनरन्त्याङ्कतः षष्टिलब्धिग्रहणादाद्यावेकोनषष्टिरंशच्छतपतति ततो दिनकरणाद्रूपमिति ।

दत्तादीनां मते तु ज्ञा नियोगे इति चौरादिकस्य न काऽप्यनुपपत्तिः । कम्पने चलिः । चल कम्पने इति ज्वलादिः । चलयति शाखाम् । कम्पनादन्यत्र तु शीलं चालयति । अन्यथा करोतीत्यर्थ इति । हरतीत्यर्थ इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः । छदिरूर्जने छद अपवारणे इति चौरादिकस्य स्वार्थे णिजभावे मित्त्वार्थोऽयमनुवादः । अनेकार्थत्वादूर्जेऽर्थे वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । अन्यत्र छादयति । अपवारयन्तं प्रयुङ्क्ते इत्यर्थः । स्वार्थे णिचि तु छादयति । बलीभवति । प्राणीभवति । अपवारयति वेत्यर्थः । जिह्वोन्मथने लडिः । लड विलासे इति पठितस्य मित्त्वार्थोऽनुवादः । उन्मथनं ज्ञापनम् । जिह्वाशब्देन षष्ठीतत्पुरुषः । लडयति जिह्वाम् । तृतीयातत्पुरुषो वा । लडयति जिह्वया । अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते । समाहारद्वन्द्वोऽयम् । लडयति शत्रुम् । गालयतीत्यर्थः । लडयति दधि । उन्मथ्नाति विलोडयतीत्यर्थः । अन्यत्र लाडयति पुत्रम् । मदी हर्षग्लेपनयोः । ग्लेपनं दैन्यम् । दैवादिकस्य मित्त्वार्थोऽयमनुवादः । ईदित्त्वन्त्वस्यैवानुवाद इति बोधनार्थम् । मदयति । हर्षयति ग्लेपयति वेत्यर्थः । अन्यत्र मादयति । चित्तविकारमुत्पादयतीत्यर्थः । ध्वन शब्दे । भौव्ययं मित्त्वार्थमनूद्यते । ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः । अत्र भोजः । दलि वलि स्खलि रणि ध्वनि त्रपि क्षपयश्चेति पपाठ । तत्र ध्वनिरणी उदाहृतौ । दल विदारणे वल संवरणे । स्खल सञ्चलने । त्रपूष् लज्जायामिति गताः । तेषां णौ । दलयति । वलयति । स्खलयति । त्रपयति । क्षै क्षये इति

वक्ष्यमाणस्य कृतात्वस्य पुक्का निर्देशः । चपयति । स्वन अवतंसने । शब्दे इति पठिष्यमाणस्यानुवादः । स्वनयति । अन्यत्र स्वानयति । घटादयो मितः । मित्संज्ञा इत्यर्थः । जनीजॄष्क्नसुरञ्जोऽमन्ताश्च । मित इत्यनुवर्तते । जॄषिति षिन्निर्देशाज्जीर्यतेर्ग्रहणम् । जृणातेस्तु जारयति । केचित्तु जनीजॄष्णसु इति पठित्वा ष्णसु निरसने इति दैवादिकमुदाहरन्ति । ज्वलह्वलह्मलनमामनुपसर्गाद्वा । एषां मित्त्वं वा । प्राप्तविभाषेयम् । ज्वलयति । ज्वालयति । उपसृष्टे तु नित्यं मित्त्वम् । प्रज्वलयति । कथन्तर्हि प्रज्वालयति उन्नामयतीति । घञन्तात्तत्करोतीति णौ । एवमपि कथं संक्रामयतीति नोदात्तोपदेशस्येति वृद्धिनिषेधादिति चेत् । मितां ह्रस्व इति सूत्रे वा चित्तविराग इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत् । एतेन रजो विश्रामयन् राज्ञां धुर्यान् विश्रामयेति स इत्यादि व्याख्यातम् । ग्लास्नावनुवमां च । अनुपसर्गादेषां मित्त्वं वा स्यात् । आद्ययोरप्राप्ते इतरयोः प्राप्ते विभाषा । न कम्यमचमाम् ॥ अमन्तत्वात् प्राप्तं मित्त्वमेषां न स्यात् । कामयते । आमयति । चामयति । शमो दर्शने । शाम्यतिर्दर्शने मिन्न स्यात् । निशामयति रूपम् । अन्यत्र तु प्रणयिनो निशमय्य वधूः कथाः । कथन्तर्हि निशाम्य तदुत्पत्तिं विस्तराद्गदतो ममेति । शम आलोचने इति चौरादिकस्येदम् । धातूनामनेकार्थत्वात् श्रवणे वृत्तिः शाम्यतिवत् । यमोऽपरिवेषणे । यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात् ॥ आयामयति । द्राघयति । व्यापारयति वेत्यर्थः । परिवेषणे तु यमयति ब्राह्मणान् । भोजयतीत्यर्थः । पर्यवसितं नियमयन्नित्यादि तु अर्थआद्यजन्तनियमशब्दात्तत्करोतीति णौ बोध्यम् । स्वदिरवप-

रिभ्याश्च ॥ मित्त्वेत्येव । अवस्वादयति । परिस्वादयति । अपाव-परिभ्य इति न्यासकारः । स्वामी तु न कमीति नञमुत्तरचिसूत्र्या-मननुवर्त्य शम अदर्शने इति चिच्छेद । यमेस्त्वपरिवेषणे मित्व-माह तन्मते पर्यवसितं नियमयन्नित्यादि सम्यगेव । उपसृष्टस्य स्वदेश्चेदवादिपूर्वस्यैवेति नियमात् प्रस्वादयतीत्याह । तस्मात् सूत्र-द्वये उदाहरणयोर्व्यत्यासः फलितः । इदञ्च मतं वृत्तिन्यासादिवि-रोधादुपेक्ष्यम् । फण गतौ । नेति निवृत्तमसम्भवात् । निषेधात् पूर्वमसौ न पठितः फणादिकार्यानुरोधात् । फणयति । वृत् घटादिः समाप्तः । फणेः प्रागेव वृदित्येके । तन्मते फाणयतीत्येव । इति भ्वादिमितः ॥ प्रकृतमनुसरामः ॥

## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । ६ । ४ । ९३ ॥

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् ॥ अशमि । अशामि । अतमि । अतामि । शमम् २ । शामम् २ । तमम् २ । तामम् २ । प्रकृतौ मितां ह्रस्व एव तु न विकल्पितः । णयन्तायणौ ह्रस्वविकल्पासिद्धेः । दीर्घविधौ णिचो लोपो न स्थानि-वदिति दीर्घः सिध्यति । ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । किञ्च हेड वेष्टने इति घटादिषूदाहृतस्य ह्रस्वविकल्पे अहिडि अहेडीति स्यात् । दीर्घविकल्पे तु अहिडि अहीडीति भवति । मित्वप्रयुक्तह्रस्वे-कारस्य दीर्घविधानेन दीर्घकारस्यैव प्रवृत्तेः । भाष्ये तु पूर्वत्रासिद्धे न स्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्या-ताः । णाविति जातिपरो निर्देश इति तदाशयः । यङन्तादपि णिचि । अशंशमि । अशंशामि । शंशमम् २ । शंशामम् २ । यङ्लुगन्तादपि णि-च्यप्येवम् । भाष्यमते तु यङन्ताण्णिचि दीर्घो नास्तीति विशेषः ॥

### खचि ह्रस्वः । ६ । ४ । ९४ ॥

खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः । पुरन्दरः ॥

### ल्हादो निष्ठायाम् । ६ । ४ । ९५ ॥

ह्रस्वः स्यात् । प्रल्हन्नः । प्रल्हन्नवान् । ल्हाद इति योगविभागात् क्तिनि ह्रस्वः । प्रल्हत्तिः ॥

### छादेर्घेऽद्व्युपसर्गस्य । ६ । ४ । ९६ ॥

छादेर्ह्रस्वः स्याद् घे परे न तु द्व्युपसर्गस्य । दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः । प्रच्छदः । छदः । पुंसि संज्ञायामिति घः । अद्व्युपसर्गस्य किम् । समुपच्छादः ॥ अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ॥ * ॥ समुपाभिछादः । उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्तयति । न हि त्रिपुत्रो द्विपुत्र उच्यते ॥

### इस्मन्त्रन्क्विषु च । ६ । ४ । ९७ ॥

एषु छादेर्ह्रस्वः स्यात् । छदिः । छद्म । छत्रम् । तनुछत् । क्विप्चेति क्विप् ॥

### गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ ॥

एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि ॥ जग्मतुः । जंग्मति । जघ्नतुः । जंघ्नति । जज्ञतुः । जज्ञे । जज्ञति । जन जनने जुहोत्यादिः । चख्नतुः । चंख्नति । जक्षतुः । अचक्षन्नमीमदन्त । क्ङिति किम् । गमनम् । हननम् । अनङि किम् । अगमत् । अघसत् । अचि किम् । गम्यते । हन्यते ।

## तनिपत्योश्छन्दसि । ६ । ४ । ९९ ॥

एतयोरुपधाया लोपः क्ङिति प्रत्यये परे॥ वितत्निरे कवयः। शकुना इव पप्तिम । छन्दसि किम् । वितेनिरे । पेतिम ।

## घसिभसोर्हलि च । ६ । ४ । १०० ॥

झलो झलीति सलोपः । समाना जग्धिः सग्धिश्च मे । बब्धः । बब्धान्ते हरीधानाः । परान्नित्याच्च लोपात् प्राक् श्लुनिमित्तकमन्तरङ्गं द्वित्वम् । अजादौ खल्वपि । बप्सति । क्ङितीत्येव । पशून् बभस्ति ॥

## हुझल्भ्यो हेर्धिः । ६ । ४ । १०१ ॥

होर्झलन्तेभ्यश्च हेर्धिः स्यात् ॥ जुहुधि । अद्धि । पास्पर्द्धि । सन्दिहीत्यत्र परत्वादिटि धित्वं न ॥

## श्रुशृणुपृकृवृभ्यश्छन्दसि । ६ । ४ । १०२ ॥

श्रुधी हवम् । शृणुधी गिरः । रायस्पूर्धि । उरुणस्कृधि अपां वृधि ॥

## अङितश्च । ६ । ४ । १०३ ॥

हेर्धिः स्यात् । वा छन्दसीति पक्षे पित्त्वेनास्याङित्त्वम् । रारन्धि । रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घश्च । अस्मे प्रयन्धि । युयोधि जातवेदः । यमेः शपो लुक् । यौतेः शपः श्लुः । अङितः किम् । हव्यं प्रीणीहि ॥

## चिणो लुक् । ६ । ४ । १०४ ॥

चिणः परस्य लुक् स्यात् ॥ अकारि । अहारि । अकारितरामित्यादौ तलोपस्यासिद्धत्वात्तरपो न लुक् ॥

**अतो हेः । ६ । ४ । १०५ ॥**

अतः परस्य हेर्लुक् स्यात् । भव । पच । अतः किम् ॥ युहि । रुहि । तपरकरणं किम् । लुनीहि । ईत्वस्यासिद्धत्वादाकारान्तमेतदङ्गं भवति । इह त्वनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जहि ॥

**उतश्च प्रत्ययादसंयोगपूर्वात् । ६ । ४ । १०६ ॥**

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात् परस्य हेर्लुक् स्यात् ॥ धिनु । सनु । चिनु । तनु । कुरु । उतः किम् । लुनीहि । प्रत्ययात् किम् । युहि । रुहि । असंयोगपूर्वात् किम् । आप्नुहि ॥ छन्दसि वेति वक्तव्यम् ॥ * ॥ अवस्थिरा तनुहि धिनुहि । यज्ञम् तेन मा भागिनं कृणुहि ॥

**लोपश्चास्यान्यतरस्यां म्वोः ६ । ४ । १०७ ॥**

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यान्म्वोः परयोः ॥ धिन्वः । धिनुवः । धिन्मः । धिनुमः । सुन्वः । सुनुवः । सुन्मः । सुनुमः । सुन्वहे । सुनुवहे । इह तु परत्वाद्गुणः । धिनोमि । प्रत्ययस्येत्येव । युवः । युमः । असंयोगपूर्वस्य किम् । शक्नुवः । शक्नुमः । लोपग्रहणमन्त्यलोपार्थम् ॥

**नित्यं करोतेः । ६ । ४ । १०८ ॥**

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः ॥ कुर्वः । कुर्मः ॥

**ये च । ६ । ४ । १०९**

कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् ।

## अत उत् सार्वधातुके । ६ । ४ । ११० ॥

उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात् सार्वधातुके क्ङिति ॥ कुरुतः । कुर्वन्ति । तपरकरणं गुणबाधनार्थम् । इह त्वाभीयत्वेन लुकोऽसिद्धत्वादुत्वम् । कुरु । क्ङिति किम् । करोति । उप्रत्ययान्तस्य किम् । सञ्चस्करतुः । कुरुत इत्यत्र तूकारेण व्यवधानान्नैव स्यात् सार्वधातुके इत्युक्तौ तु नास्योपयोगः । येननाव्यवधानन्यायेन कुरुत इत्यादौ चरितार्थस्य करिष्यत इत्यादावप्रवृत्तेः । कर्तेति तास्यन्तेऽपि टिलोपस्याभीयासिद्धत्वेनानेकव्यवधानात् । टिलोपेऽङ्गाधिकारस्थत्वेन समानाश्रयत्वस्य सूपपादत्वात् । ङित्वसामर्थ्यात् क्ङित्प्रत्ययविषयके भाधिकारबाधेऽपि अङ्गाधिकारबाधे मानाभावादिति सूत्राशयः । भाष्यकारेण तु तदुक्तावपि करिष्यत इत्याद्यसिद्धं मत्वोप्रत्ययान्तस्येति स्वीकृत्यैतन्निष्फलीकृतम् ॥

## श्नसोरल्लोपः । ६ । ४ । १११ ॥

श्नस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति ॥ रुन्धः । रुन्धन्ति । स्तः । सन्ति । क्ङिति किम् । भिनत्ति । सार्वधातुके इति निष्फलम् । ईहामासतुरित्यादौ अत आदेरिति दीर्घे परस्य लोपेऽप्यदोषात् ॥

## श्नाभ्यस्तयोरातः । ६ । ४ । ११२ ॥

अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । ईत्वात् पूर्वं झेरन्तादेशः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्याद्भावः । ततोऽनेन लोपः । क्रीणन्ति । क्रीणते । लुनते । मिमते । माङ् माने शब्दे च । जिहते । ओहाङ् गतौ । दत्तः । दत्ते । ददते ।

दरिद्रति । जाहति । श्नाभ्यस्तयोः किम् । यान्ति । वान्ति । आतः किम् । बिभ्यति । जिह्रियति । ङ्किति किम् । क्रीणाति । ददाति । सार्वधातुके किम् । आशिषि जाहायात् ॥

**ई हल्यघोः । ६ । ४ । ११३ ॥**

श्नाभ्यस्तयो रात ईत् स्यात् सार्वधातुके ङ्किति हलि न तु घोः ॥ क्रीणीतः । क्रीणीते । लुनीते । मिमीते । जिहीते । जाहीतः । जाहीथः । जहीहि । अजाहीताम् । जाहीयात् । हलि किम् । क्रीणन्ति । मिमते । अघोः किम् । दत्तः । धत्तः । ङ्किति किम् । क्रीणाति । जहाति । सार्वधातुके किम् । जाहायात् ।

**इद् दरिद्रस्य । ६ । ४ । ११४ ॥**

दरिद्रातेरिकारः स्याद्धलादौ ङ्किति सार्वधातुके ॥ दरिद्रितः । हलि किम् । दरिद्रति । ङ्किति किम् । दरिद्राति । सार्वधातुके इति निष्फलम् ॥ दरिद्रातेरार्द्धधातुके विवक्षिते लोपो वाच्यः ॥ * ॥ दरिद्रातीति दरिद्रः । पचाद्यच् । विवक्षिते इत्यनुक्तौ तु ण्यल्ध्येति णे कृते परत्वाद्युक् स्यात् । लोपस्त्वाशिषि दरिद्र्यादित्यादौ चरितार्थः । ईषद्दरिद्रमित्यातो युजिति च प्रसज्येत । लुङि वा सनि ण्वुलि ल्युटि च नेति वक्तव्यम् ॥ * ॥ अदरिद्रीत् । इट्सकौ । अदरिद्रासीत् । चिणि । अदरिद्रि । अदरिद्रायीति भवति । दिदरिद्रासति । दिदरिद्रिषतीतीट्पक्षे तु आतोलोप इटि चेत्यालोपः । दरिद्रायकः । दरिद्राणम् ॥

**भियोऽन्यतरस्याम् । ६ । ४ । ११५ ॥**

इकारो वा स्याद्धलादौ ङ्किति सार्वधातुके ॥ बिभितः । बिभीतः । हलि किम् । बिभ्यति । ङ्किति किम् । बिभेति ।

सार्वधातुके किम् । बिभीवान् । भीयते बेभीयते इति तु अभ्यस्तस्येत्येव सिद्धम् । यङ्यकारसहितस्य हि द्वित्वेन भियोऽभ्यस्तत्वं नास्ति । अत एव श्नाभ्यस्तयोरित्यत्रेहल्यघोरित्यत्र च यायावरो न प्रत्युदाहृतः । यङो लुका लुप्तत्वाभावेन प्रत्ययलक्षणेन ङित्परत्वसत्त्वेऽपि वलि लोपे कृते उपदेशे आकारान्ताभ्यस्तत्वाभावेन स्यसिच्सूत्रादुपदेशे इत्यनुवृत्त्याऽपि वारयितुं शक्यत्वात् । श्नाभ्यस्तयोरित्यालोपस्य तु वरेऽजादेशस्य स्थानिवत्त्वनिषेधेनापि वारयितुं शक्यत्वाच्च । यत्त्वल्लोपासिद्धत्वेनापि यायावरः परिहर्तुं शक्य इति तन्न । वरच्यल्लोपो यङि त्वीत्वाल्लोपाविति व्याख्यत्वात् ।

## जहातेश्च । ६ । ४ । ११६ ।

इत्स्याद्वा हलादौ क्ङिति सार्वधातुके ॥ पक्षे ईत्वम् । जहितः । जहीतः । हलि किम् । जहति । क्ङिति किम् । जहाति । सार्वधातुके इति निष्फलम् । जाहीत इत्यादाविवाशिषि जाहायादित्यत्रापि श्तिपा निर्देशादेवाप्रवृत्तेः । हीयते । जेहीयते इति त्वभ्यस्तस्येत्येव सिद्धम् ॥

## आ च हौ । ६ । ४ । ११७ ॥

जहातेर्हौ परे आ स्यात् चादिदीतौ ॥ जहाहि । जहिहि । जहीहि । जाहीहीत्यत्र श्तिपा निर्देशादेतदप्रवृत्त्येहल्यघोरितीत्वमेव ॥

## लोपो यि । ६ । ४ । ११८ ॥

जहातेरातो लोपः स्याद्यादौ सार्वधातुके ॥ जह्यात् । सार्वधातुके इति निष्फलम् । हेयादित्यत्र लिङीत्यत्रार्धधातुकाधिकारेण तेनैव बाधात् । जाहीयादित्यत्रैव जाहायादित्यत्रापि श्तिपा

निर्देशादेवाप्रवृत्तेश्च । हीयते । जेहीयते । हेयं हेयादित्यादि चाभ्यस्तस्येत्येव ङ्क्तीति वा यथायथं सिद्धम् ।

**घ्वसोरेद्धावभ्यासलोपश्च । ६ । ४ । ११९ ॥**

घोरस्तेश्चैत्वं स्याद्धौ परे अभ्यासलोपश्च ॥ देहि । धेहि ॥ लोपश्चेति द्विशकारकनिर्देशेन शित्वात् पुनर्लोपग्रहणाद्वा सर्वादेशोऽयं लोपः । आभीयत्वेनैत्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यतो लोपः । एधि । तातङ्पक्षे एत्वं न । परेण तातङा बाधात् । सकृद्गता-विति न्यायात् । दत्तात् । धत्तात् । स्तात् ॥

**अत एकहल्मध्येऽनादेशादेर्लिटि । ६ । ४ । १२० ॥**

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्त-हल्मध्यस्थस्याकारस्यैत्वं स्यादभ्यासलोपश्च क्किति लिटि ॥ रेणतुः । रेणुः । रेमे । रेमाते । येमतुः । येमुः । लेभे । लेभाते । आदे-शश्चेह वैरूप्यसम्पादक एवाश्रीयते । शसिदद्योः प्रतिषेधवचनात् ज्ञापकात् । तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव । देधे । देधाते । देधिरे । पेचतुः । पेचुः । अतः किम् । दिदिवतुः । तपरः किम् । ररासे । एकेत्यादि किम् । तत्सरतुः अनादेशादेः किम् । जगणतुः । चकणतुः । लिटा आदेशविशेषणा-दिह स्यादेव । नेमतुः । सेहे । सेहाते । अभ्यासजश्त्वचर्त्वयोरसि-द्धत्वं तु न फलिभज्योर्विधिवचनात् ज्ञापकात् ॥ दम्भेश्च एत्वाभ्या-सलोपौ वक्तव्यौ ॥ * ॥ देभतुः । देभुः । नलोपस्याभीयासिद्धत्वा-दप्राप्तिः । नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि । किम्प्रयोजनम् अनेशं मेनकेत्येतत् । अनेशमिति । नशेर्लुङि पुषादित्वादङ् ।

मेनकेति मनेराशिषि चेति वुन् । आशिषि वुनश्च नेतीत्वाभावः । भाषायां तु मेनकेति पृषोदरादित्वात् । व्येमानम् । लिङि पेचिरन् । व्येमानमिति विपूर्वादमतेस्ताच्छील्यादिषु चानश् । छान्दसः शपो-लुक् । पेचिरन्निति । पचेरन्निति प्राप्ते छान्दसे एत्वह्रस्वत्वे ॥ यजि-वप्योश्च ॥ * ॥ आयेजे । आवेपे । लङ इट् शप् छन्दस्यपि दृश्यते इत्याट् ॥

## थलि च सेटि । ६ । ४ । १२१ ॥

प्रागुक्तं स्यात् । पेचिथ । शेकिथ । सेटि किम् । पपक्थ । शशक्थ । थलोऽन्यस्याकितो लिटः सेटोऽभावात् सेटीत्येव सिद्धे नार्थस्थलीत्यनेन ॥

## तृफलभजत्रपश्च । ६ । ४ । १२२ ॥

एषामत एकारो ऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च ॥ तेरतुः । तेरुः । तेरिथ । फेलतुः । फेलुः । फेलिथ । भेजतुः । भेजुः । भेजिथ । त्रेपे । त्रेपाते । श्रन्थिग्रन्थ्योरित्यादिना कित्वपक्षे एत्वाभ्यासलोपावपि । श्रन्थिग्रन्थ्योर्वेत्तव्यमिति हरदत्ता-दयः ॥ श्रेथतुः । श्रेथुः । ग्रेथतुः । ग्रेथुः ॥

## राधो हिंसायाम् । ६ । ४ । १२३ ॥

अत इति तपरत्वमविवक्षितमचायोग्यत्वात् । राधोऽकारस्यैत्वं स्यादभ्यासलोपश्च किति लिटि सेटि थलि च ॥ अपरेधतुः । रेधुः । रेधिथ । हिंसायां किम् । आरराधतुः । आरराधुः ।

## वा जृभ्रमुत्रसाम् । ६ । ४ । १२४ ॥

एषामकारस्यैत्वमभ्यासलोपश्च किति लिटि सेटि थलि च ॥ जेरतुः । जजरतुः । जेरिथ । भ्रेमतुः । बभ्रमतुः । भ्रेमिथ । बभ्रमिथ । चेसतुः । चेसिथ । तत्रसिथ ॥

## फणाञ्च सप्तानाम् । ६ । ४ । १२५ ॥

एषामकारस्यैत्वमभ्यासलोपश्च वा किति लिटि सेटि थलि च ॥ फेणतुः । फेणिथ । पफणतुः । पफणिथ । रेजतुः । रेजिथ । रेजे । रराजतुः । रराजिथ । रराजे । अत इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् । भ्रेजे । बभ्राजे । भ्राजतेरिह पाठः फणादिकार्यार्थ एव । पूर्वं पाठस्तु ञ्रश्वादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम् । भ्रेशे । बभ्राशे । भ्लेशे । बभ्लाशे । द्वावपीमौ तालव्यान्तौ । स्येमतुः । सस्यमतुः । स्येमिथ । स्वेनतुः । सस्वनतुः । स्वेनिथ । सस्वनिथ । सप्तानां किम् । दध्वनतुः ॥

## न शसददवादिगुणानाम् । ६ । ४ । १२६ ॥

शसेर्ददेर्वकारादीनां गुणस्य च योऽकारस्तस्य एत्वाभ्यासलोपश्च न ॥ शसु हिंसायाम् । दन्त्यान्तः । शशसतुः । शशसिथ । दद दाने । ददद । दददाते । टुवम उद्गिरणे । इहैव निपातनादत इत्वमिति सुधाकरः । ववमतुः । ववमिथ । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतम् । तद्भाष्यादौ न दृष्टम् । तत्र चेयमुपपत्तिः । सूत्रे आदिग्रहणं व्यर्थं वेत्यकारान्तसङ्घातग्रहणेनेष्टसिद्धेः । एवञ्चादिग्रहणमेोपदेशिकत्वप्रतिपत्त्यर्थम् । अनुबन्धाश्चैकान्ताः । यद्वा वमेरादौ यकारो लुप्तनिर्दिष्टः । तथा चोपदेशे वादित्वाभावात्

निषेधो न । वेमुश्च केचिद्रुधिरमित्यादिप्रयोगाश्चेहानुकूला इति ॥ वट वेष्ठने । ववटतुः । ववटिथ । लुलविथ । आकारस्यावादेशविधानादत्र गुणस्याकारः । शशरतुः । शशरिथेत्यत्रापि उः स्थानेऽण् प्रसज्यमान एव रपरो भवति । पूर्वभक्तश्च रेफ इति विशिष्टस्य गुणत्वाद्गुणस्याकारः । पेचतुः । पेचुरित्यादौ तु गुण एवाकारो न तु गुणस्येति प्रतिषेधाभावः । व्यपदेशिवद्भावस्तु न भवति । विधिप्रतिषेधयोर्विषयभेदानापत्तेः । शसिददिवादिग्रहणवैयर्थ्यापत्तेश्चेति दिक् ॥ एतेन लक्षणया गुणशब्देन भावितपरो गुणशब्द इत्यपास्तमिति दिक् ॥

## अर्वणस्त्रसावनञः । ६ । ४ । १२७ ॥

नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यान्न तु सौ । ऋ इत् उगित्वान्नुम् । अर्वन्तौ २ । अर्वन्तः । अर्वन्तम् । अर्वतः । अर्वता । अर्वद्भ्यामित्यादि । असौ किम् । अर्वा । हे अर्वन् । अनञः किम् । अनर्वा यज्ववत् ॥

## मघवा बहुलम् । ६ । ४ । १२८ ॥

मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात् ॥ उपधादीर्घः । मघवान् । इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति । बहुलग्रहणात् । तथा च श्वन्नुक्षन्निति निपातान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे । हविर्जक्षिति निःशङ्को मखेषु मघवानसाविति भट्टिः । मघवन्तौ २ । मघवन्तः । हे मघवन् । मघवन्तम् । मघवतः । मघवता । मघवद्भ्यामित्यादि । तृत्वाभावे मघवा । छन्दसीवनि-

पौ चेति वनिबन्तं मध्योदात्तं छन्दस्येव । अन्तोदात्तं तु लोकेऽपीति विशेषः । मघवानौ । मघवानः । सुटि राजवत् । शसादौ तु मघोनः । मघोना । मघवभ्यामित्यादि ॥

**भस्य । ६ । ४ । १२९ ॥**

आ अध्यायपरिसमाप्तेरधिकारोऽयम् ॥

**पादः पत् । ६ । ४ । १३० ॥**

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । पदाङ्गाधिकारे तस्य तदन्तस्य च । अनेकाल्त्वात् सर्वादेशे प्राप्ते निर्दिश्यमानस्यादेशा भवन्ति । सुपदः । सुपदा । भस्य किम् । सुपाद्भ्याम् ॥

**वसोः सम्प्रसारणम् । ६ । ४ । १३१ ॥**

वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । पूर्वरूपत्वम् । षत्वम् । विदुषः । विदुषा । अन्तरङ्गोऽपीडागमः सम्प्रसारणविषये न प्रवर्तते अकृतव्यूहा इति परिभाषया । सेदुषः । सेदुषा ॥

**वाह ऊठ् । ६ । ४ । १३२ ॥**

भस्य वाहः सम्प्रसारणमूठ् स्यात् ॥ एत्येधत्यूठ्स्विति वृद्धिः । विश्वौहः । विश्वौहा । छन्दस्येव ण्विरिति पक्षे भाषायां णिजन्ताद्विजिति केचिदिति दिक् ॥

**श्वयुवमघोनामतद्धिते । ६ । ४ । १३३ ॥**

अल्लोपोऽन इत्यतोऽन इत्यपकृष्यते । अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे सम्प्रसारणं स्यात् ॥ शुनः । शुना । यूनः । यूना । मघोनः । मघोना । ननु सम्प्रसारणे वार्णादाङ्गस्य बलीय-

स्त्वेन पूर्वत्वं बाधित्वाल्लोपोऽन इति लोपे शुनेति सर्वानुदात्तं स्यात् । उदात्तनिवृत्तिस्वरेण वान्तोदात्तं स्यात् । इष्यते तु पूर्वरूपेणाद्युदात्तम् । तत्र हि वकारस्थानिकोकारस्य संश्रयधर्महलः स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततयाऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात् । किञ्च लोपे स्थानिवत्त्वेन यणुप्रसङ्गः । अतः शुन इत्यादिनिर्देशैस्तद्वारणे तु बहुश्वा, बहुयुवा बहुमघवेत्यत्रान उपधालोपिन इति ङीप्विकल्पापत्तिः । बहुश्वेत्यत्र गौरादिङीषस्त्वनुपसर्जनाधिकारादप्रवृत्तिः । मघोन इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्चेति चेन्न । वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्याऽदोषात् । श्वन्शब्दे आभीयतया सम्प्रसारणासिद्धत्वेन न संयोगादिति निषेधाच्च । न च वनिबन्तप्रकृतिके मघोन इत्यादौ सम्प्रसारणे यस्येतिलोपापत्तिरिति वाच्यम् । निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धेः । एकादेश उदात्तेनोदात्त इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात् । छन्दस्यापाद्यरूपाभावान्न निष्ठापादनम् । अन्नन्तानां किम् । मघवता । स्त्रियाम् । मघवती । न चैकदेशविकृतन्यायेनान्नन्तत्वम् । अन इत्यपकर्षसामर्थ्यान्नकारप्रश्लेषाद्वा नान्तान्नन्तत्वस्य विवक्षणात् । अतद्धिते किम् । शुन इदं शौवनं मांसम् । तस्येदमित्यण् । द्वारादित्वादैजागमः । यौवनम् । माघवनम् ॥

**अल्लोपोऽनः । ६ । ४ । १३४ ॥**

नेहानन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादित्यर्थस्तत्त्वात्यादौ तकाराकारस्यापि लोपापत्तेः । नापि भस्याङ्गस्यानोऽकार

स्येति । अनसा मनसेत्यादौ नदापत्तेः । तत्रावृत्त्यादिनान्नन्तस्य भस्यानोऽकारस्येत्यपि न । अनस्तक्ष्णेत्यादावतिव्याप्तेः । किन्तु भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषोऽङ्गस्येति द्वयमनो विशेषणम् । अन्त्वकारस्य । तथा चाङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यादित्यर्थः । श्चुत्वम् । न चाल्लोपः स्थानिवत् पूर्वत्रासिद्धे तन्निषेधात् । न च बहिरङ्गतयाऽसिद्धः । यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गाभावे बहिरङ्गपरिभाषाया अप्रवृत्तेः । जज्ञोऽत्र । राज्ञः । राज्ञा । अनः किम् । महता । राजकीयमित्यत्र तु नान्तानन्त्वाभावाददोषः । अनितेः क्षिप्यान इत्यादौ तु तपरकरणाल्लोपाभावः ॥

## षपूर्वहन्धृतराज्ञामणि । ६ । ४ । १३५ ॥

षपूर्वो योऽन् तस्य हनादेश्च भस्यातो लोपोऽणि ॥ ताक्ष्णः । पौष्णः । भ्रौणघ्नः । धृतराज्ञोऽपत्यं धार्तराज्ञः । षेति किम् । सामनः । अणि किम् । ताक्षण्यः । सेनान्तलक्षणकारिभ्यश्चेति ण्यः ॥

## विभाषा ङिश्योः । ६ । ४ । १३६ ॥

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्याण्ङिश्योः परयोः ॥ राज्ञि । राजनि । साम्नि । सामनि ॥

## न संयोगाद्वमन्तात् । ६ । ४ । १३७ ॥

वकारमकारान्तसंयोगात् परस्यानोऽकारस्य लोपो न स्यात् । यज्वनः । सुपर्वणः । ब्रह्मणः । कर्मणः । संयोगात् किम् । प्रतिदीव्नः । साम्ना । वमन्तात् किम् । तक्ष्णः ।

of effect (from its cause). [The man's acting in a certain manner is taken as the *effect* of his ignorance, which is thus *inferred* from its effect].

Then again, by what means do you seek to prove that Inference is not a valid means of knowledge ?* As for Sense-perception it has always a positive entity for its objective and is hence always of an affirmative character; and as such it could not prove the *negation* or *absence* of Inference as a means of knowledge.

"We conclude that it is not a means of cognition, simply because we do not perceive it."

In that case you admit the authority of Inferences based upon *Non-perception.* All this has been thus summed up by the *Bauddhas*: 'The existence of another means of knowledge is proved by.—(1) its similarity to another means of knowledge universally recognised, (2) the fact of our being cognisant of other people's ideas and cognitions and (3) by negation also at times.' That is to say, for these three reasons, it must be admitted that apart from 'Sense-perception' there is a distinct means of knowledge, in the shape of Inference, based upon the 'nature of things,' on 'Effects' and on 'Non-perception.'

---

*Text* (120): *A definite cognition brought about by the due perception of the special features, is called 'Nirnaya;' and this is opposed to Doubtful Cognition. It is only this definite cognition that can be either 'perceptive' of 'inferential.' That which is produced by a sensuous perception of the special features, and sets aside all doubts, is the 'perceptive judgment;' e g. when we see a certain object standing before us, we may perceive only the tallness, which is a pro-*

* The printed reading is evidently wrong : '*Anumānam pramāṇam* &c,' does not give any sense.

*perty common between the pole and the man, and not perceive any of the features belonging specifically to either; and then recalling to our mind the (other) features common to both, we have the doubtful cognition as to whether the object before us is a pole of a man; after a time, perceiving that the object has a head and hands &c., we come to the definite cognition that it is a 'man;' and this is a case of the 'perceptive Definite Cognition. Then again, seeing only a pair of horns in a thicket (and not any other parts of the animal's body), we have the doubtful cognition that it is a cow or a Gavaya; and then noticing the presence of the dewlap, we have the Definite Cognition that it is a 'cow'; and this is a case of the 'inferential' Definite Cognition.'* (IX-ii-12; X-i-3.)

## Commentary.

Some people regard Definite Cognition to be a distinct means of knowledge; and in regard to this view the author says: '*A definite cognition, &c.*' That is to say, in a case where the non-perception of specific features has given rise to a doubtful cognition, the subsequent perception of such features brings about a definite cognition, which is called '*Nirṇaya*,' 'Definite Cognition.' It is called the 'opposite of Doubtful Cognition,' because as soon as it appears, it removes the previous 'doubtful cognition. As Maṇḍana Miçra has declared in his *Vibhramavivēka*,—'As soon as the *pole* has been definitely cognised' there is no longer any doubtful cognition based upon mere *tallness*' Though every definite cognition may be called '*Nirṇaya*,' (no matter whether it does or does not set aside a previous doubt), yet in as much as a *certainty* is generally known to follow after an *uncertainty*, the author has called it 'opposed to Doubtful Cognition.'

With a view to explain his own general statement, the author next shows that *Nirṇaya* is included in Sense-perception

and Inference. The definite cognition with regard to objects perceived by the senses is 'Perceptive *Nirṇaya*,' and that with regard to inferable objects is 'inferential' *Nirṇaya*.

NOTES.—(*a*) When we perceive the horn, the doubtful cognition is due to the following inferential reasoning: 'The animal before us is either a cow or a Gavaya, as it has horns.' And then the perception of the dewlap leads us to the following Inference. 'It must be cow, because it has dewlap.' This is called 'inferential definite cognition,' as the entire animal is not actually seen.

(*b*) It is not quite clear who regard 'Nirṇaya' as a distinct means of knowledge.

---

### SMṚITI-REMEMBRANCE.

***Text* (121):** *From the contact of the soul and the mind as aided by such causes as the perception of an 'Indicative,' 'desire' (for remembering) and 'associated ideas,' and the like, and from a faculty produced by distinct cognition, by repetition and by an impressive regard (for the object concerned),—there arises a Remembrance of objects seen, heard or experienced (inferred) in the past, which becomes the cause of the recalling of what remains (of a previous cognition), of desire, of associated or secondary remembrance, and of aversion.*

### Commentary.

The author now proceeds to describe knowledge in the form of Remembrance: The expression '*and the like*' has been added with a view to include *Praṇidhāna*, 'Close Attention' and others enunciated in the *Nyāyasūtra* (Adh. III *Āhnika II*, *Sūtra* 43). The 'contact of the soul and the mind' aided by these constitutes the cause or source of Remembrance. For this 'Contact' the peculiarity that makes it a cause of Remembrance consists in the 'perception of the Indicative' &c.; as a mere contact of the soul and the mind cannot bring about any Remembrance.

The author next points out that like the 'perception of the Indicative,' 'Faculty' also is an instrumental cause of Remem-

brance. Remembrance follows from a peculiar faculty of the mind; and this faculty is produced —(1) by distinct cognition; as from the cognition of the touch of blades of grass in motion; (2) sometimes it happens that even a distinct cognition does not produce any perceptible impression on the mind, as we find in the case of a chapter of the Veda read for the first time; but in this case when there is a repetition of what has been cognised once, a distinct impression is produced on the mind, which fixes the chapter in the memory; (3) sometimes when we see a strange object, the cognition produced is so impressive that even though the object is seen but once, it is remembered for all times to come.

*With regard to objects seen &c.,'* This points out the objects of Remembrance. '*Seen*'=cognised directly by the senses; '*heard*' =cognised only through hearing from others '*experienced*'=Inferred.

'*Becomes the means &c.,*' This serves to point out the effects of Remembrance. '*Çesha*' is *that which remains* behind. '*Anuvyavasāya*' *is functioning afterwards*; and by the compound '*Çeshānuvyavasāya*' (where '*çesha* qualifies '*anuvyavasāya*'), which literally means the 'recalling of what remains behind,' is meant the cognition of the 'object of the Inference, which is not included in the first cognition of the inferential Indicative;' and the meaning of this is the '*remembrance*' of the invariable concomitance (of that object with that Indicative). The '*remembrance*' of a certain object having afforded pleasure in the past becomes the means of a 'desire' for that object. The '*remembrance*' of the first word of a sentence becomes the means of the 'associated remembrance' of the second word. And the '*remembrance*' of an object having produced pain in the past becomes the cause of an 'aversion' to it.

And remembrance also appears in the form of 'that' ('That thing which I had seen &c.,'): And in as much as in

all Remembrance the object is recognised as having been known *in the past*, Remembrance is called '*atītavishayā*,' 'pertaining to past objects.'

It is for this same reason of its pertaining to past objects, that Remembrance is not regarded as a 'means of knowledge,' as all that it does is to point out an object as *known in the past*; and as such it depends, in the matter of making its objective known, upon previous cognitions (and as such only making known an object that is already known, it cannot be regarded as a 'means of knowledge,' which is a name given only to such means as afford knowledge of things not otherwise known). As for Inferential Cognition, though that also depends upon another cognition for its accomplishment, yet in the matter of bringing about a knowledge of its own objective it is wholly independent; *i. e*, though the Inference is based upon the previous knowledge of concomitance &c., yet it always leads to a conclusion the matter of which is wholly unknown, until pointed out by that same Inference, which thus, with regard to this latter, does not merely recall a previous cognition, as is done by Remembrance. This has been thus declared in the *Tantravārtika* by the superhumanly intelligent Teacher: 'It is only the cognition of some previous cognition that is called *Smṛti*, Remembrance, and hence we can never accept it as true, in the absence of such previous cognition' [I-iii-1, Translation Page 105]. This same idea has been also expressed in the following *Kārikā (Çlokavārtika)*: 'There (in the case of Remembrance) to the previous cognition (which is the origin of the Remembrance) belongs the character of the correct means of knowledge; and the purpose of Remembrance lies in the mere recalling of that previous cognition' [*Anumāna* Verse 158, Translation. Page 204]. Some people hold the non-evidential character of Remembrance to be due to the fact of its not being directly produced by a real object: but for such people there would be no evidential authority for Inferences with regard to past and future objects (which cannot be regarded as *real* at

the time of the inference) and they cannot escape from this objection.

NOTES :—(1) The *Nayāsūtras* referred to in the commentary are स्मरणंत्वात्मनो ज्ञस्वभाव्यात् । ४२ ॥ प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४३ ॥

The first of these Sūtras simply states the fact that Remembrance belongs to the self; as it is the self alone that is endowed with consciousness; and in the next Sūtra Gauṭama declares that Remembrance follows from such causes as *Prāṇidhāna* and the rest; and here we find stated in detail the various grounds of association leading to Remembrance. Each of these is thus explained by Vātsyāyana and Vāchaspati Miçra; (1) '*Praṇidhāna*' is the steadying or concentrating of the mind with view to recall something to the mind; that is to say, when we wish to remember something, we withdraw the mind from all other objects and concentrate it on the various distinguishing features of the one object intended to be recalled; and this concentration is called 'Praṇidhāna.' (2) '*Nibandha*'— When a number of things are treated of in the same *work* ('composition'), the association thus established among them makes each one of them bring the other to the mind. (3) '*Abhyāsa*'—is the name given to that peculiar character of the Self, which in the form of a faculty or Impression is produced by a constant repetition or repeated pondering over the same idea. This faculty thus becomes a means whereby the idea and its object is remembered easily. This *Abhyāsa* includes '*Ādara*' (great regard and '*Pratyaya*' Impressive cognition) also; as these also tend to create in the self a faculty that becomes the means of remembering; when we have a great regard for a certain thing, or when the cognition that we have of it is of a character that leaves a lasting impression on the mind, there appears a certain faculty that fixes those objects in our memory. (4) '*Linga*'—An indicative or distinguishing mark; everything has certain features whereby it is more easily remembered. This Indicative mark is generally of four kinds: (a) A thing is often remembered by the help of something where with it may have been found to have been in contact,—

*f i.*, having seen a cart with a particular horse, on a former occasion, seeing that horse, we remember the carriage; (*b*) it is remembered by means of something wherein it has been found to inhere; for instance, having seen the yarn along with the piece of cloth, whenever afterwards we see the yarn, we at once remember the cloth. (*c*) When two things have been found to in here together in the same object, the perception of one calls the other to the mind; *f. i*, having found *whiteness* and *coolness* together in a piece of ice, whenever we see *whiteness* it brings an idea of *coolness* to the mind; or having seen the hands and feet of a man, when we see his hands we remember his feet also. (*d*) One thing is often found to bring about the idea of its contrad ctory; for instance, on experiencing extreme heat, we are at once put to mind of extreme cold. (5) A certain distinguishing feature fixed by convention often serves to bring to the mind the name of the family to which one belongs, *f. i.* having found by experience that the animals belonging to a certain family are marked by a particular kind of mark on the forehead, whenever we see an animal bearing that mark, we are led to remember the family. (6) Of two similar things, one reminds us of the other; for instance, the picture of a man reminds us of the man himself. (7) By ownership a thing is remembered; for instance on seeing the servant we remember the master, *or vice versa*. (8) Of two things related to one another one reminds us of the other; as the sight of the son reminds us of the father. We often remember a thing through immediate sequence; *f. i.*, finding that the railway train leaves immediately after the whistling, as soon as we hear the whistling we are reminded of the leaving of the train; or being accustomed to take our food immediately after bath, the bath reminds us of the food (10) The *Separation* from a man reminds us of him. (11) The identity of function is another cause of action; *f. i.*, finding that a certain set of eleven men forms a football team, on seeing any one of them we remember the rest. (1) Of two persons opposed to each other, the sight of one reminds us of the other opponent. (13) An excellence of some sort becomes a means of rememberance; *f. i.*,. a student wishing to learn a certain subject remembers the teacher famous in that branch of learning. (14) The likelihood of gain from a certain person puts

us in mind of that person. (15) The covering of a thing reminds us of that thing, *f. i.*, the sight of the scabbard leads us to remember the sword. Similarly pleasure and pain, affection and aversion, fear and want put us in mind of their respective objects, the action of a man reminds us of the man, as the moving of the chariot reminds us of the driver; and Virtue and Vice also remind us of their effects. These are a few of the special instances of the general law of association, which is enunciated as—एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति ।

---

(2) (*a*) Patanjali in his Yoga-sūtra has defined it as the *non-abandonment by the mind of the object that has been once cognised* (I-ii). This definition puts us in mind of the declaration of Bishop Hall, that, "memory is the great keeper of the Rolls of the soul, a power that can make amends for the speed of time, in causing him to leave behind him those things which else he would so carry away as if they had not been."

The Vedantis hold that Remembrance does not depend upon our will; it is in this that it differs from Reflection. Their opinion is that no sooner the necessary conditions present themselves than the Remembrance appears, whether we wish it or no (*Vivaraṇa prameyasamgraha*, p 151).

Remembrance is not regarded as one of the '*valid* means of knowledge,' *Pramāṇa*. And on this point the Nyāyamanjarī says—'The invalidity of Remembrance is due, not to the fact of its pertaining to an object that has already been cognised before, but to the fact of the object whereof it affords the knowledge not having a real existence at the time that we have the Remembrance. Soon this point we find a difference of opinion between our commentator and the Nyāyamanjari. Remembrance enters as a necessary factor in all Inferential and Verbal cognitions; and as such we cannot regard it as absolutely invalid; all that is meant is that it is not an independent *Pramāṇa*.

Some writers hold that the direct cause of remembrance does not consist in the *sanskāra*, which thus stands in the same relation to Remembrance as *sense-contact* does to Sense-perception. Çankara Miçra in the *Upaskāra* (on sutra IX-ii-6) says that a particular kind

of conjunction is the non-material cause, sanskāra the instrumental cause and the Self the material cause, of *Remembrance.*

(3) It will be of interest to notice what some of the western philosophers have got to say in this connection.

Professor Fleming says—" Consciousness testifies that when a thought has once been present to the mind, it may again become present to it, with the knowledge that it has formerly been present; when this takes place we are said to *remember*, and the faculty of which *remembrance* is the act is *memory*." [It is for this reason that 'smirti' cannot be rightly translated as 'memory'].

" This faculty (of memory) implies two things : a capacity of retaining knowledge, and a power of recalling to our thoughts when we have occasion to apply it to use" (Stewart, *Elements* VI-i).

[This is opposed to the Vedantic conception that Remembrance is wholly independent of our effort].

" The next faculty of the mind (after perception), whereby it makes a further progress towards knowledge is that which I call *retention.* This is done in two ways : first by keeping the idea which is called *contemplation* [the '*praṇidhāna*' of the *Nyāyasūtra* explained above]. The other way of *retention* is the power to revive again on our minds those ideas which, after imprinting, have disappeared " (Locke *Essay* II-x-i).

In connection with the 'invalidity' of Remembrance, on which so much stress has been laid above, we may note the opinion of Hobbes who holds that memory is a *decaying* sense. Professor Bain regards it as a wholly independent faculty of the mind ; as the phenomena thereof cannot be included under those of any other power ; or as the Sanskrit writers would put it, the cognition produced by that faculty cannot be classed under the cognition due to any other 'means of knowledge.'

Western psychologists lay down Vividness, Attention and Repitition as the conditions facilitating remembrance. These three are the same as *Ādara, Praṇiddāna* and *Abhyāsa* of *Vātsyāgana* (see above). In relation to the mention of '*sukha*' and '*duhkha*' &c. in the Nyāyasutra, we may note the following from Herbert.

"The things which are best preserved by the memory are the things which *please* or *terrify*, which are *great* or *new* &c., &c."

On the question of Remembrance being independent of our will, strongly put forward in the *Vivaranapramēyasangraha*, the following statement of Professor Fleming's helps to clear the difficulty "In its first manifestations, memory operates spontaneously, and thoughts are allowed to come and go through the mind without direction or control. But it comes subsequently to be exercised with intention and will, some thoughts being sought and invited, and others being shunned and as far as possible excluded. *Spontaneous memory* is *remembrance*, *Intentional memory* is *recollection* or *reminiscence*. Sully calls the former *passive* and the latter *active* memory.

*Text* (122) *In the case of the sages whose acts are in full accordance with the Vedas, we find that from the contact of the Soul and the mind, as aided by a peculiar virtue, there appears an intuitional cognition true in all its objective details,—with regard to objects past, present and future, as also to Dharma and other (supersensuous) objects, such as are spoken of in the scriptures, as well as those that are not so mentioned; and this intuitional cognition is called 'Ārsha' or 'sagic.'*

*This cognition as a rule belongs to the Divine Sages; and only in rare instances to human beings also; as when we find a little girl saying 'my heart tells me that my brother will come tomorrow.'*

## Commentary.

The author now proceeds to describe 'sagic' cognition. With regard to all objects, sensuous as well as supersensuous, the sages have infallibly true intuitional cognitions, free from all doubt and mistake; and this is called '*Ārsha*' or 'sagic.'

The name '*pratibhā*' is given to that form of consciousness which appears (*pratibhāti*) independently of sense-organs and

inferential indicatives. And the 'aṇ' affix in '*prātibham*' has the reflexive sense; where '*prātibha*' is equivalent to '*pratibhā*'

An objection having been raised as to there being no causal agency that could give rise to such a cognition, and as such its appearance being impossible, the author adds:—*Aided by a peculiar virtue. Dharmaviçēsha*=the peculiar character of the virtue of the sages; this peculiar character being due to their special learning, austerities and meditation; and this is what produces in the sages an 'intuitional' consciousness.

*This form of consciousness belongs as a rule only to the Divine Sages &c., &c.* The case of the girl saying 'my heart tells me that my brother will come to-morrow' cannot be called one of 'Doubtful cognition,' as we do not find the two contradictory factors (necessary in all Doubt); nor can it be called a case of 'mistaken cognition'; as it is found to turn out true.

---

NOTE.—This 'intuitional cognition' cannot but be regarded as *valid* and *true*. It has an objective that has a real existence; and being a valid form of cognition it must be regarded as a kind of 'sense-perception,' and not an independent Pramáṇa; it cannot be regarded as 'inferential,' as it is not produced by the cognition of any inferential indicatives; nor is it 'verbal'; nor 'analogical,' not being based upon any form of similarity. Though it is not produced by any of the external sense-organs, yet we regard it as 'sensuous,' because it is produced directly by the *Mind*, which is as much a 'sense-organ' as any other organ of perception. (Page 107, *Nyāyamanjari*.)

The word *prātibha* has been translated as 'intuitional,' this latter word being taken in the sense of 'immediate,' independently of such agencies of cognition as the external sense-organs, inferential indicatives, words and analogy or similarity.

***Text*** (123): *Occult perception is not a distinct form of Knowledge. "Why?" Because the perception of subtle, hidden and remote things, that the perceivers of things have,—through their exerting of such occult powers as are obtained by the application*

*of certain unguents to the eyes and to the feet, and by the use of the 'sword' the 'pill' and the like,—is purely 'sensuous.'*

*Then as for another kind of cognition that is regarded as 'occult'—viz, the cognition of the fruition of past virtues and vicious deeds in the experiences of the living beings, of the heavens, the atmosphere and the Earth, as indicated by the movements of plants and asterisms,—this also is only inferential.*

*As for the cognition of virtue &c., independently of inferential 'indicatives,' this would be included either in 'sensuous' or in 'Ārsha' cognition.*

*Such then is Buddhi.* (IX-ii-13).

## Commentary.

**[Page 259]** Some people regard 'occult perception' to be a distinct form of knowledge; and with a view to setting aside this view, the author says—'*occult perception is not a distinct form of knowledge*'; and this he next proceeds to explain further. Those people are called '*siddha*' ('endowed with occult powers') who are capable of perceiving such things as have definite forms and are capable of being perceived; and those perceivers who have obtained their occult powers by means of unguents &c. have perceptions of such things as are too fine or *subtle* for ordinary perceptions, or are hidden from ordinary vision, or are too remote for ordinary perception; but this perception also is dependent upon the functioning of the sense-organs (aided by the applications &c.); and as such it cannot but be regarded as purely 'sensuous.'

The other kind of cognition put forward is distinctly 'inferential,' being due to the perception of the planetary movement &c., which, thus, serve as 'inferential indicatives'.

Then as for the cognition of virtue &c., independently of the cognition of any such 'indicatives,' it is either 'sensuous'

or '*ārsha*' ; for instance, when the cognition would be brought about by the agency of the sense-organs it would be 'sensuous ;' and if independently of such agencies, it would be '*ārsha*.'

The author sums up the section. Thus, in the above manner has *Buddhi* been described.

**Text (124)** : *Pleasure is of the nature of 'favour' or agreeableness. When there is proximity of such desirable things as a garland and the like, there being a commingling of that thing, its perception and the senseorgan capable of taking cognizance of it, the contact of the soul and the mind, aided by the agency of Dharma etc., brings about a feeling which produces such effects as 'favour', 'affection', brightness of the eyes etc.; and this feeling is what is called 'sukha' or 'pleasure.'*

*In regard to past objects, it is produced by memory ; in regard to future objects it is brought about by reflection ; and that which is felt by the wise, independently of all such agencies as the remembrance of the object, desire and reflection, is due to their knowledge, peacefulness of mind, contentment, and the peculiar character of their virtues.* (*X-i-*1 *to* 6, *and* *V-ii-*15).

## Commentary.

**Page 260.**] In as much as pleasure is a product of *Buddhi*, the author proceeds to describe it after having dealt with *Buddhi*. *Pleasure is of the nature of 'favour'*. Pleasure having the character of something desirable or favourable, when bringing about the experiencing of its objective, *favours* the person as it were. The author explains this further: *When etc.*, when such desired things as a garland, sweet unguents, the woman one loves and so forth, are within his reach, there being a commingling of the object, its preception and the organ percepient of it, this gives rise, through the

help of the agency of virtue etc, to a feeling which is called 'pleasure'. Even when the desired object is within our reach, if our mind is taken up by some other object (and we fail to perceive the former), we do not feel any pleasure; hence we conclude that a *preception* or cognition of the object also is a factor in the cause bringing about pleasure. By '*etcetera*' in the expression '*virtue etc.,*' are meant such other concomitant circumstances as good health and the like.

'*Which produces such effects etc,*' In this the author points out the effects of the feeling described. '*Anugraha*', 'Favour' is the experiencing or feeling of pleasure; '*Abhishvanga,*' 'Affection,' is the feeling of attachment or attraction towards the object; '*Nayanādiprasāda,*' is the brightness of the eyes and face. These indications are the effects of pleasure. When pleasure appears, it produces an experience of itself in the mind of the person; and this is the 'favour' to the experiencing soul; and when pleasure is experienced, the face becomes bright. Pleasure also gives rise to an affection or attraction to wards the objects affording the pleasure.

*In regard to past objects the pleasure is produced by memory* or *remembrance.* That is to say, after we have once derived pleasure from an object, at any subsequent time, whenever we remember that object, we experience a sort of re-trospective pleasure. And in regard to future objects, pleasure is produced by the reflection or anticipation—'such and such an object will be mine.' In the case of the 'wise,' that is persons who have realised the true nature of the self, we find that, even when there is no object to afford the pleasure, no remembrance of any such object, nor again any reflection of it, a pleasure is actually felt; and this is due to their knowledge, the peaceful nature of their minds, their contentment, and the peculiar nature of their virtues. (1) The 'knowledge' here meant is the *realisation of the self*; (2) The 'peaceful nature of their minds' consists in the fact of their senses being

under proper control: (3) contentment consists in their not desiring any thing beyond what may be absolutely necessary for the keeping of the body; (4) the 'peculiar character of their virtues' consists in tending towards withdrawing the mind from the objects of sense. These four are the causes of the pleasures of the 'wise.'

There are some people who hold that 'pleasure' consists in the *absence of pain ;* but this view is not compatible with the well-known experience of bliss in a *positive form* ; nor would it be possible to explain, in accordance with this view, the two-fold action of persons with the-two fold motive (*a*) 'I shall obtain this pleasurable thing' and (*b*) 'I shall avoid that which is undesirable.'

---

*Text* (125) : *Pain is of the nature 'harm.' When there is proximity of such undesirable objects as poison and the like, there being a commingling of the object, its perception and the organ percipient of it, the contact of the soul and the mind, aided by 'adharma,' brings about a condition of the mind which gives rise to the feeling of 'anger,' idea of 'harm' and a depression of spirits ; and this condition of the mind is called 'Pain.' In regard to past objects, such as snakes, tigers and thieves, experienced on some previous occasion, the pain is due to remembrance; and with reference to future objects it is produced by reflection.*

## Commentary.

'Pain' being the opposite of 'Pleasure,' the author proceeds to describe it next: *Pain is of the nature of 'harm'* '*Upaghâta*' is that whereby one *is harmed (upahanyatē)* **Page 261.]** As soon as pain appears it produces a cognition of its objective as something undesirable, and thereby 'harms'

the soul. The author explains this further. Pain is the cause of *anger etc.* The rest is to be explained as in the previous section.

---

Text (126): *Desire, 'Icchā' consists in the wishing for something not already obtained, either for one's own sake or for the sake of another. It proceeds from the contact of mind and soul, through pleasure &c., or through remembrance. It is the source of effort, remembrance, virtue and vice. Lust, Hunger, Affection, Aspiration, Compassion Aversion, Disposition to impose, Inclination and so forth are the various forms of desire. Lust is desire................. .............; Hunger is desire for food; Affection is desire for the repeated experiencing of an object; Aspiration is desire for bringing about something not near at hand; Compassion is disinterested desire for the removal of other's troubles; Disinclination is the desire for renouncing an object, after finding something wrong in it; Disposition to impose is the desire for deceiving others; Inclination is unexpressed desire. 'Desire to do,' 'Desire to take away' and so on are the various desires in reference to various actions* (VI-ii-10 to 14; I-i-6).

## Commentary.

An object that a man does not already possess, he wants, either for his own sake, or for the sake of another person; and he has the wish in the form—'may this be mine,' or 'may this be his;' and this is what is known as 'desire.' *This proceeds from the contact &c., &c.*

When a pleasure-giving object is such as is not present before us, we have still a desire for it; and the cause of this

उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति नच तद्वर्तते तथा ॥ ९९ ॥
ऐश्वर्यमदमत्तांश्च मत्तान्मद्यमदेन च ।
अप्रमत्ताः शठाः शूरा विक्रान्ताः पर्युपासते ॥ १०० ॥

स्वभावमविद्याकामकर्मादिनिविडां स्वीयां प्रकृतिं ये शरीरिणो जीवा नियुक्ताः संसृतिप्रवाहे तथा प्रकृत्या प्रयोजितास्तंतामनिवर्तन्ते नोल्लङ्घयितुं समर्था भवन्तीत्यज्ञानां संसृतिदार्ढ्यप्रदर्शनं परवैराग्योत्पादनार्थमिति द्रष्टव्यम् ॥ ९४—१०० ॥

क्लेशाः परिनिवर्तन्ते केषाञ्चिदसमीक्षिताः ।
स्वं स्वं च पुनरन्येषां न किंचिदधिगम्यते ॥ १ ॥
महच्च फलवैषम्यं दृश्यते कर्मसंधिषु ।
वहन्ति शिविकामन्ये यान्त्यन्ये शिविकागताः ॥२॥
सर्वेषामृद्धिकामानामन्ये रथपुरःसराः ।
मनुष्याश्च शतस्त्रीकाः शतशो विविधास्त्रियः ॥३॥
अर्थाः खलु समृद्धा हि वाढं दुःखं विजानताम् ।
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ॥ ४ ॥
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हन्ति षोडशीं कलाम् ॥५॥
यथैव शृङ्गं गोः काले वर्द्धमानस्य वर्द्धते ।
तथैव तृष्णा चित्तेन वर्द्धमानेन वर्द्धते ॥ ६ ॥
किंचिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते पुनः ॥ ७ ॥

स्वं स्वीयं धनमन्येषां मन्दभाग्यानां किमपि यात्रामात्रार्थमपि नाधिगम्यते नोपलभ्यते इत्यर्थः ॥ १ ॥ कर्मसु संधिर्येषां ते कर्मसंधयः कर्तृत्वाद्यभिमानपूर्वकफलाभिसंधिवत्सु मूढेषु यावदज्ञानं नानाकर्मफलतारतम्यं दृश्यते अतस्तेभ्यो विरज्य परमपुरुषार्थमोक्षाय यतितव्यमिति भावः ॥२-३॥ तत्त्वज्ञानप्रतिबन्धिका सर्वानर्थहेतुस्तृष्णा ममतात्यागेन नाशनीयेति माण्डव्यं प्रति जनकोक्त्या दर्शयति अर्था इति ब्रह्मलोकान्ता विषयाः समृद्धासंपन्ना हि प्रसिद्धं विजानतां विवेकिनां दुःखमेव ॥ ४—७ ॥

न कामाननुरुध्येत दुःखं कामेषु वै रतिः ।
प्राप्यार्थमुपयुञ्जीत धर्मे कामान्विवर्जयेत् ॥ ८ ॥
विद्वान्सर्वेषु भूतेषु आत्मना सोपमो भवेत् ।
कृतकृत्यो विशुद्धात्मा सर्वं त्यजति चैव ह ॥ ९ ॥
उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये ।
भयाभये च संत्यज्य संप्रशान्तो निरामयः ॥ १० ॥
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥११॥
मृत्युनाभ्याहतो लोको जरया परिवारितः ।
अहोरात्राः पतन्तीमे तच्च कस्मान्न बुध्यसे ॥ १२ ॥
रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा ।
ऽगाधोदके मत्स्य इव सुखं विन्देत कस्तदा ॥ १३ ॥
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् ।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥ १४ ॥
अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगान्महान् ।
को हि जानाति कस्याद्य मृत्युकालो भविष्यति॥१५॥

प्राप्येति धर्मार्थमपि वित्तं न लिप्सेत यथोक्तं "धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति" धर्ममपि

अर्थं प्राप्यैव उपयुञ्जीत कामस्तु अर्थं प्राप्यापि विवर्जयेदेव ॥ ८ ॥ आत्मना सोऽयमात्मौपम्येन सर्वेषां सुखमिच्छेत् दुःखं च नेच्छेदित्यर्थः सर्वं पुण्यपापसंचयम् ॥ ९ ॥ ततोऽपि किमत आहोमे इति । जाग्रत्स्वप्नौ सत्यानृते भयं संसारमभयमैश्वर्यम् ॥ १०—१३ ॥ तृष्णात्यागे पुनरपि प्रयत्नमुपदिशति पितापुत्रसंवादेन पुष्पाणि काम्यकर्मफलानि ॥ १४ ॥ १५ ॥

अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ।
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ॥ १६ ॥
कृते धर्मे भवेत्प्रीतिरिह प्रेत्य च शाश्वती ।
मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः ॥ १७ ॥
कृत्वा कार्यमकार्यं वा तुष्टिमेषां प्रयच्छति ।
तं पुत्रपशुसंपन्नं व्यासक्तमनसं नरम् ॥ १८ ॥
सुप्तं व्याघ्रं महौघा वा मृत्युरादाय गच्छति ॥१९॥
दुर्बलं बलवन्तं च प्राज्ञं शूरं जडं कविम् ।
अप्राप्तसर्वकामार्थं मृत्युरादाय गच्छति ॥ २० ॥
मृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम् ।
असन्त्याज्यं यदा मर्त्यैः किं स्वस्थ इव तिष्ठसि ॥२१॥
जातमेवान्तकोऽन्ताय जरदोऽभ्येति देहिनम् ।
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ॥ २२ ॥
न मृत्युसेनामायान्तीं जातु कश्चित् प्रबाधते ।
बलात्सत्यमृते त्वेकं सत्ये ह्यमृतमाश्रितः ॥ २३ ॥
तस्मात्सत्यव्रताचारः सत्यव्रतपरायणः ।
सत्यागमः समो दान्तः सत्येनैवान्तकं जयेत् ॥२४॥

अनिमित्तमिति । आयुरियत्तावधारणकारणहीनम् ॥ १६ ॥ मोहेनेति एषां पुत्रादीनाम्॥१७॥ सुप्तं सैकते महौघा महानदी अकालपूरवती॥१८—

२१॥ द्वयेनानेकजराख्येन ॥ २२ ॥ मृत्युसेनां जराव्याधिरूपां सत्यम् अबाधितात्मतत्त्वप्रापकत्वाद्योगधर्मम् । अमृतं मरणाभावः एतेन तस्य न रोगो न जरा न मृत्युः प्राप्तस्य योऽग्निमयं शरीरमिति श्रुतेरर्थ उक्तः ॥ २३ ॥ सत्यव्रताचारः ब्रह्मप्राप्त्यर्थानि व्रतानि यमनियमरूपाणि आचरतीति तथा सत्ययोगः चिदाभासरूपस्य जीवस्य प्रविलापनं सत्यः प्रमाणभूतः आगमो गुरुवेदवाक्यं स सत्यागमः श्रद्धावान् ॥ २४ ॥

**अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।**
**मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतम् ॥ २५ ॥**
**नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित् ।**
**पथि संगतमेवेदं दारैरन्यैश्च बन्धुभिः ॥ २६ ॥**
**यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।**
**समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ २७ ॥**
**एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा ।**
**तेषां स्नेहो न कर्त्तव्यो विप्रयोगो ध्रुवो हि तैः॥२८॥**
**अदर्शनादापतितः पुनश्चादर्शनं गतः ।**
**न त्वासौ वेद न त्वं तं कः सन् किमनुशोचसि ॥२९॥**
**स्नेहेन तिलवत्सर्वं सर्गचक्रे निपीड्यते ।**
**तिलपीडैरिवाक्रम्य क्लेशैरज्ञानसंभवैः ॥ ३० ॥**
**पुत्रनाशे वित्तनाशे ज्ञातिसंबन्धिनामपि ।**
**प्राप्यते सुमहद् दुःखं दावाग्निप्रतिमं विभो ॥ ३१ ॥**

ज्ञानाज्ञानकृतौ बन्धमोक्षावित्याहामृतमिति ॥ २५—२८ ॥ अदर्शनादिति । नास्ति दर्शनं दृश्यत्वेन द्रष्टृत्वेन वा प्रकाशो यस्य तददर्शनं शुद्धचिन्मात्रं तस्मात् आपतितस्तव पुत्र इति शेषः त्वा त्वां चिन्मात्रमसौ पुत्रो न वेद स्वप्नोपलब्धपुरुषवत्कल्पनामात्रत्वात्तस्य तथा त्वमपि तं चिन्मात्रं न वेत्थ चितश्चिद्गोचरत्वायोगात् । किमनुशोचसीत्यस्यायं भावः शोच्यः पुत्रः किञ्चिदात्मा उताचिद्रूपो देहो वा । नाद्यः चित

भिप्रायम् अन्तरं मध्यम् ॥ ३७ ॥ सर्वस्यासारतां भावयन्नेव संगपाशाद्वि-मुच्यते इति वक्तुं संगरतार्क्ष्यसंवादे सिद्धमर्थमुपदिशति सुखमिति ॥३८॥

सक्तबुद्धिरशान्तात्मा न शक्यं तच्चिकित्सितुम् ।
स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ॥ ३९ ॥
स्नेहजानिह ते पाशान् वक्ष्यामि शृणु तान्मम ।
सकर्णकेन शिरसा शक्याः श्रोतुं विजानता ॥ ४० ॥
संभाव्य पुत्रान्कालेन यौवनस्थान्निवेश्य च ।
समर्थान् जीवने ज्ञात्वा मुक्तश्चर यथा सुखम् ॥४१॥
भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलाम् ।
ज्ञात्वा प्रजहि कालेन परार्थमनुदृश्य च ॥ ४२ ॥
सापत्यो निरपत्यो वा मुक्तश्चर यथा सुखम् ।
इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि ॥ ४३ ॥
कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम् ।
उपपत्त्योपलब्धेषु लाभेषु च समो भव ॥ ४४ ॥
मुक्ता वीतभया लोके चरन्ति सुखिनो नराः ।
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ ४५ ॥
आहारसंचयाश्चैव तथा कीटपिपीलकाः ।
असक्ताः सुखिनो लोके सक्ताश्चैव विनाशिनः॥४६॥

सक्ता विषयनिमग्ना सा चासौ बुद्धिश्च अशान्तश्चासौ आत्मा च तृष्णाकुलं मनः तद्द्वयं चिकित्सितुमशक्यं सितो बद्धः ॥ ३९ ॥ सकर्णकेन शिरसेति पदाभ्यां सावधानेन जीवतेत्यर्थो लक्ष्यते ॥ ४० ॥ निवेश्य दारैः संयोज्य ॥ ४१ ॥ परार्थे मोक्षे ॥ ४२ ॥ कृतकौतूहलः छिन्नौत्सुक्यः ॥ ४३ ॥ उपपत्त्या यदृच्छया ॥ ४४ ॥ मुक्ताः छिन्नस्नेहपाशाः सक्तभावाः विषयासक्तचित्ताः ॥ ४५ ॥ उक्तेऽर्थे दृष्टान्तमाहाहारेति आहारं संचिन्वन्ति संगृह्णन्ति तादृशाः कीटादयो नश्यन्ति तत्वसंग्राहिण इत्यर्थः ॥ ४६ ॥

स्वजने न तु ते चिन्ता कर्तव्या मोक्षबुद्धिना ।
इमे विनामया भूता भविष्यन्ति कथं त्विति ॥४७॥
स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्द्धते ।
सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति ॥ ४८ ॥
भोजनाच्छादने चैव मात्रा पित्रा च संग्रहम् ।
स्वकृतेनाधिगच्छन्ति लोके नास्त्यकृतं पुरा ॥ ४९ ॥
धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम् ।
लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः ॥ ५० ॥
स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा ।
को हेतुः स्वजनं पोष्टुं रक्षितुं वा दृढात्मनः ॥५१॥
स्वजनं हि यदा मृत्युर्हन्त्येव तव पश्यतः ।
कृतेऽपि यत्ने महति तत्र बोद्धव्यमात्मना ॥ ५२ ॥
जीवन्तमपि चैवैनं भरणे रक्षणे तथा ।
असमाप्ते परित्यज्य पश्चादपि मरिष्यति ॥ ५३ ॥

स्वजनैर्मातापितरौ साध्वी भार्या सुतः शिशुः अप्यकार्यशतं कृत्वा भर्तव्यामनुरब्रवीदिति स्मृतेः संग्रहं विना कथं मात्रादि जीवनं स्यादित्यत आह स्वजन इति त्रिभिः यथा उत्पत्यादिकं तत् तत्कर्माधीनम् । एवं भोजनादिकमपीति मात्रादिविषये चिन्ता न कार्येत्यर्थः ॥ ४७ ॥ ४८ ॥ मात्रा पित्रा कृतेन वा संग्रहम् । अधिगच्छन्तीति योजना ॥ ४९ ॥ धात्रा प्राक्कर्मफलविभाजकेन ॥ ५० ॥ स्वस्याकिञ्चित्करत्वादपि मात्रादिपोषणे चिन्ता न कार्येत्याह स्वयमिति अदृढेति छेदः ॥ ५१ ॥ ५२ ॥ भरणे अन्ने रक्षणे गृहादौ असमाप्तेऽपि अन्नादौ एनं भर्तारं जीवन्तमपि परित्यज्य स्वकर्मणैव यथा भार्यादिर्म्रियते पश्चात्तदुभयनाशादूर्ध्वमपि तथैव मरिष्यत्येवेत्यर्थः ॥ ५३ ॥

यदा मृतश्च स्वजनं न ज्ञास्यसि कदाचन ।
सुखितं दुःखितं वापि नतु बोद्धव्यमात्मना ॥ ५४ ॥

मृते वा त्वयि जीवे वा यदा मोक्ष्यति वै जनः ।
स्वकृतं ननु बुध्वैवं कर्तव्यं हितमात्मनः ॥ ५५ ॥
एवं विजानंल्लोकेऽस्मिन्कः कस्येत्यभिनिश्चितः ।
मोक्षे निवेशय मनो भूयश्चाप्युपधारय ॥ ५६ ॥
दिवसे दिवसे नाम रात्रौ रात्रौ पुमान्सदा ।
भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते ॥५७॥
संभवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः॥५८॥
प्रस्थं वाहसहस्रेषु यात्रार्थं चैव कोटिषु ।
प्रासादे मञ्चकस्थानं यः पश्यति स मुच्यते ॥ ५९ ॥
रक्तमूत्रपुरीषाणां रोगाणां सञ्चयांस्तथा ।
शरीरं दोषबहुलं दृष्ट्वा चैव विमुच्यते ॥ ६० ॥

यदेति मृतं देशान्तरस्थं वा स्वजनं सुखितं दुःखितं वा न ज्ञास्यसि नाप्युपकरिष्यसि यथा एवमात्मना इदं बोद्धव्यं मामपि मृतं देशान्तरगतं पुत्रादयो न ज्ञास्यन्ति नोपकरिष्यन्तीति अत्यल्पमिदमुक्तं त्वयि मृते वा जीवति वा जनः पुत्रादि सुकृतं जरारोगादिकं भोक्ष्यति त्वं च न तद्दूरीकर्तुं शक्नोषि एवमन्येऽपि तवेति बुध्वा ॥ ५४ ॥ ५५ ॥ कियत्प्रत्यहं भोक्तव्यमिति यो भोगात् खिन्नः॥५६॥ जन्ममरणजीवनक्लेशज्ञो मुच्यत इत्यर्थः ॥५७॥ वाहः धान्यपूर्णशकटसहस्रेषु कोटिष्विति सामानाधिकरण्यात् पुरुषाहारपरिमितं धान्यं यात्रार्थं देहव्यवहारार्थमधिकसंग्रहो व्यर्थ इति यः पश्यति॥५८॥ भोगालयस्यापि वीभत्सामालोच्य विरज्येतेत्याह रक्तमूत्रेति ॥ ५९ ॥

वलीं पलितसंयोगं कार्श्यं वैवर्ण्यमेव च ।
कुब्जभावं च जरया यः पश्यति स मुच्यते ॥ ६१ ॥
पुंस्त्वोपघातं कालेन दर्शनोपरमस्तथा ।
बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ॥ ६२ ॥

गतानृषींस्तथा देवानसुरांश्च तथा गतान् ।
लोकादस्मात्परं लोकं यः पश्यति स मुच्यते ॥६३॥

प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः ।
ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते॥६४॥

अर्थांश्च दुर्लभांल्लोके क्लेशांश्च सुलभांस्तथा ।
दुःखं चैव कुटुम्बार्थे यः पश्यति स मुच्यते ॥ ६५ ॥

अपत्यानां च वैगुण्यं जनं विगुणमेव च ।
पश्यन्भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत्॥६६॥

शास्त्राल्लोकाच्च यो बुद्धः सर्वं पश्यति मानवः ।
असारमिव मानुष्यं सर्वथा मुक्त एव सः ॥ ६७ ॥

इयं हि योनिप्रथमा यां प्राप्य जगतीपते ।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥६८॥

कथं न विप्रणश्येम योनितोऽस्या इति प्रभो ।
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ॥ ६९ ॥

यो दुर्लभतरं प्राप्य मानुष्यं द्विषते नरः ।
धर्मावमन्ता कामात्मा स भवेत्खलु वञ्च्यते ॥७०॥

प्राणमन्दत्वं दौर्बल्यम् ॥ ६१ ॥ ६२ ॥ तपस्विनामृषीणां महाप्रभावाणां देवानां राज्ञां च मृत्युनाऽभावतां नीतानां गतिं दृष्ट्वा विरज्येतेत्याह गतानृषीनित्यादिना ॥६३–६७॥ जनकं प्रति पराशरः हे जगतीपते । जनकं प्रति पराशरः स्वर्गापवर्गसाधनानुष्ठानयोग्यां नृयोनिं प्रशंसति इयमिति त्रिभिः ॥ ६८ ॥ ६९ ॥ यो धर्मावमन्ता स कामात्मा भवेत् स च कामेन वञ्च्यते ॥ ७० ॥

जहाति दारांश्च जहाति संपदः
पदं च यानं विविधांश्च सत्क्रियाः ।

त्रिविष्टपे जातमतिर्यदा नर
स्तदास्य बुद्धिर्विषयेषु भिद्यते ॥ ७१ ॥
प्रसक्तबुद्धिर्विषयेषु यो नरो
न बुध्यते ह्यात्महितं कदाचन ।
स सर्वभावानुगतेन चेतसा
नृपामिषेणैव झषो विकृष्यते ॥ ७२ ॥
संघातवन्मर्त्यलोकः परस्परमुपाश्रितः ।
कदलीगर्भनिःसारो नौरिवाप्सु निमज्जते ॥ ७३ ॥
न धर्मकालः पुरुषस्य निश्चितो
न चापि मृत्युः पुरुषं प्रतीक्षते ।
सदा हि धर्मस्य क्रियैव शोभना
यदा नरो मृत्युमुखेऽभिवर्तते ॥ ७४ ॥
यथान्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति ।
तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् ॥७५॥
मरणं जन्मनि प्रोक्तं जन्म वै मरणाश्रितम् ।
अविद्वान्मोक्षधर्मेषु बद्धो भ्रमति चक्रवत् ।
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ॥ ७६ ॥

भिद्यते शब्दादिभ्यो व्यावृत्तो भवति ॥ ७१ ॥ हे नृप आमिषेण वडिशगर्भितेन झषः मत्स्यः संघातवद्देहेन्द्रियादिसमुदायवन्मर्त्यलोकः स्त्रीपुत्रपश्वादिसमुदायः उपाश्रितः उपकारकः ॥ ७२॥७३ ॥ नेति । सदा मृत्युः सन्निहितोऽस्तीति सदैव धर्मः कार्य इत्यर्थः ॥ ७४॥ धर्मेण चित्तशुद्धौ सत्यां योगाभ्यासः कार्य इत्याह यथेति। अगोचरेऽपि मार्गे गुरूक्तयुक्ताभ्यासादेव गच्छतीत्यर्थः ॥ ७५ ॥ योगाभावेऽनिष्टमाह जन्मेति । जन्मनिमित्ते मोक्षधर्मे अविद्वान् मोक्षधर्मान् अजानन् ज्ञानमार्गे प्रवृत्तस्य तूभयत्रापि सुखमित्याहार्धेन बुद्धीति ॥ ७६ ॥

विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः॥ ७७॥
परार्थे वर्तमानस्तु स्वकार्यं नाभिमन्यते।
इन्द्रियार्थेषु संसक्तः स्वकार्यात्परिमुच्यते॥ ७८॥
महापदानि कत्थसे न चाप्यवेक्षसे परम्।
चिरस्य मृत्युकारिकामनागतां न बुध्यसे॥ ७९॥
प्रयायतां किमास्यते समुत्थितं महद्भयम्।
अतिप्रमाथि दारुणं सुखस्य संविधीयताम्॥ ८०॥
पुरामृतः प्रणीयते यमस्य राजशासनात्।
त्वमन्तकाय दारुणैः प्रयत्नमार्जवे कुरु॥ ८१॥
पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित्।
तवेह जीवितं यमो न चास्ति तस्य वारकः॥८२॥
पुराभिवाति मारुतो यमस्य यः पुरःसरः।
पुरैक एव नीयसे कुरुष्व सांपरायिकम्॥ ८३॥
पुरा सहिक्क एव ते प्रवाति मारुतोऽन्तकः।
पुरा च विभ्रमन्ति ते दिशो महाभयागमे॥ ८४॥
श्रुतिश्च स विरुध्यते पुरा तवेह पुत्रक।
समाकुलस्य गच्छतः समाधिमुत्तमं कुरु॥ ८५॥
शुभाशुभे पुराकृते प्रमादकर्मविप्लुते।
स्मरन्पुरा न तप्यसे निधत्स्व केवलं निधिम्॥८६॥
पुरा जरा कलेवरं विजर्जरीकरोति ते।
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम्॥ ८७॥

पुरा शरीरमन्तको भिनत्ति रोगसारथिः ।
प्रसह्य जीवितक्षये तपो महत्समाचर ॥ ८८ ॥

विस्तराः वैतानिकानि अग्निहोत्रादीनि संक्षेपास्त्यागादयः परार्थम् अनात्मभूतफलार्थम् ॥ ७७ ॥ परार्थे इन्द्रियतृप्त्यर्थे एतदेव स्वं कार्यमिति यो मन्यते मूढः सः स्वकार्यात् ॥ ७८ ॥ कुत्रापि सांसारिकविषये संसक्तिर्न कर्त्तव्या सर्वतोऽपि विरज्येत तापत्रयबन्धाद्विमुक्तकामः इति वक्तुं शुकं प्रति व्यासोपदेशेन तीव्रतरवैराग्यसिद्धये निर्वेदहेतूनुपदिशति महापदानी-त्यादिना । ब्रह्मादीनां स्थानानि दृष्ट्वा कत्थसे धन्योऽहमिति श्लाघसे परं तु ब्रह्म नावेक्षसे मृत्युकारिकां जराम् ॥७९॥ प्रयायतां प्रचल्यतां मोक्षमार्गेण प्रस्थातव्यम् ॥ ८० ॥ अन्तकाय आपदि सुखाय दारुणैः कृच्छ्रतपोभिः ॥८१॥ यावज्जीवितहरणं न जायते ततः प्रागेव सांपरायिकं परलोकहितं कुरुष्वेति संबन्धः ॥ ८२—८८ ॥

पुरा वृका भयङ्करा मनुष्यदेहगोचराः ।
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने ॥ ८९ ॥

पुरान्धकारमेकको नु पश्यसि तरस्व वै ।
पुरा हिरण्मयान् नगान्निरीक्षसेऽद्रिमूर्द्धनि ॥ ९० ॥

पुरा कुसंगतानि ते सुहृन्मुखाश्च शत्रवः ।
विचालयन्ति दर्शनाद् घटस्व पुत्र यत्परम् ॥ ९१ ॥

धनस्य यस्य राजतो भयं न चास्ति चौरतः ।
मृतं न यच्च मुञ्चति समर्जयस्व तद्धनम् ॥ ९२ ॥

न तत्र संविभज्यते स्वकर्मभिः परस्परम् ।
यदेव यस्य यौतिकं तदेव तत्र सोऽश्नुते ॥ ९३ ॥

परत्र येन जीव्यते तदेव पुत्र दीयताम् ।
धनं यदक्षरं ध्रुवं समर्जयस्व तत्स्वयम् ॥ ९४ ॥

न यावदेव पच्यते महाजनस्य पावकम् ।
अपक्व एव पावके पुरा प्रलीयसे त्वर ॥ ९५ ॥

वृकाः कामादयः ॥ ८९ ॥ हिरण्मयवृक्षदर्शनं मरणचिन्हम् ॥ ९० ॥ ते त्वां तव मतिं वा ॥ ९१ ॥ तद्धनं विद्याम् ॥ ९२ ॥ यौनिकं विवाहात्तं धनं दायादाग्राह्यं पाथेयमित्यर्थः ॥ ९३ ॥ यावकं घृतखण्डमिश्रे यवपिष्टविकारे त्वं त्वरायुक्तं यथा स्यात्तथा प्रलीयसे म्रियसे भोगान्भुक्त्वा मोक्षे यत्नं करिष्यामीति न मन्तव्यम्। अप्राप्तभोगे मृत्युभयमस्तीति भावः ॥९४॥९५॥

न मातृपुत्रबान्धवा न संस्तुतः प्रियो जनः।
अनुव्रजन्ति संकटे व्रजन्तमेकपातिनम् ॥ ९६ ॥

यदेव कर्म केवलं पुरा कृतं शुभाशुभम्।
तदेव पुत्र सार्थिकं भवत्यमुत्र गच्छतः ॥ ९७ ॥

हिरण्यरत्नसंचयाः शुभाशुभेन संचितः।
न तस्य देहसंक्षये भवन्ति कार्यसाधकाः ॥ ९८ ॥

परत्र गामिकस्य ते कृताकृतस्य कर्मणः।
न साक्षि आत्मना समो नृणामिहास्ति कश्चन॥९९॥

मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः।
प्रविश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वशः ॥ २०० ॥

इहाग्निसूर्यवायवः शरीरमाश्रितास्त्रयः।
त एव तस्य साक्षिणो भवन्ति धर्मदर्शिनः ॥ २०१ ॥

अहर्निशेषु सर्वतः स्पृशत्सु सर्वचारिषु।
प्रकाशगूढवृत्तिषु स्वधर्ममेव पालय ॥ २ ॥

अनेकपारिपन्थिके विरूपरौद्रमक्षिके।
स्वमेव कर्मरक्षतां स्वकर्म तत्र गच्छति ॥ ३ ॥

न तत्र संविभज्यते स्वकर्मणा परस्परम्।
तथा कृतं स्वकर्मजं तदेव भुज्यते फलम् ॥ ४ ॥

यथाप्सरोगणाः फलं सुखं महर्षिभिः सह।
तथाप्नुवन्ति कर्मजं विमानकामगामिनः ॥ ५ ॥

यथेह यत्कृतं शुभं विपाप्मभिः कृतात्मभिः ।
तदाप्नुवन्ति मानवास्तथा विशुद्धयोनयः ॥ ६ ॥
प्रजापतेः सलोकतां बृहस्पतेः शतक्रतोः ।
व्रजन्ति ते परां गतिं गृहस्थधर्मसेतुभिः ॥ ७ ॥

सार्थिकं देहेन्द्रियासार्थवाहिकम् ॥ १६ ॥ १७ ॥ परत्र गामिकस्य-गमनशीलस्य साक्षि आत्मनेति इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेति प्रकृतिवद्भावे ह्रस्वः मामन्यो न जानातीति मत्वा पापं न कर्तव्यमिति भावः॥१८॥१९॥ ननु कर्त्रात्मनोऽतिरिक्तस्य साक्षिणः सत्त्वे किं मानमत आह मनुष्येति। अमुत्र साक्षिणि गच्छतो लीयमानस्य कर्तुर्मनुष्यदेहस्य शून्यमिव शून्यकम् अभावो भवति परदृष्ट्या सन्नपि योगिदृष्ट्या मनुष्यदेहो नष्टो भवतीत्यर्थ अत्र विद्वदनुभवं प्रमाणयति प्रविश्येति हार्दाकाशमिति ॥ २०० ॥ साक्ष्यन्तःराण्याह इहेति ॥ २०१ ॥ २ ॥ तत्र परलोकमार्गे विरूपाः रौद्राश्च मक्षिकदंशा यस्मिन् अनेके परिपन्थिनः शत्रवो लोहतुण्डाः पक्षिवृकादयो यस्मिन् ॥ ३—७ ॥

सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहाम ते ।
अबुद्धमोहनं पुनः प्रभुर्निनाय पावकः ॥ ८ ॥
गता त्रिरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः ।
कुरुष्व धर्मसंचयं वयो हि तेऽतिवर्तते ॥ ९ ॥
पुरा करोति सोऽन्तकः प्रमादगोमुखां चमूम् ।
यथागृहीतमुत्थितस्त्वर स्वधर्मपालने ॥ १० ॥
यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि ।
तथा गतिं गमिष्यतः किमात्मना परेण वा ॥ ११ ॥
यदेकपातिनां सतां भवत्यमुत्र गच्छतः ।
भयेषु सांपरायिकं निधत्स्व केवलं निधिम् ॥ १२ ॥

अबुद्धान्मोहयतीति तथा पावकः पुनातीति पावित्रीकरोतीति व्युत्पत्या धर्मः क्लीबपाठे पावकं सत्कर्म पावकमिति पाठेऽपि पावकमिव पाथेयरू-

पां धर्म एव ॥ ८ ॥ प्रमादगृहवासी अन्तकः चमूं चमति भक्षयतीति चमूरिन्द्रियसेना ताम् असुखां अन्धत्वादिदोषेण स्वविषयभोगहीनां यावत्करोति ततः पुरैव गृहीतं देहम् अनतिक्रम्येति यथागृहीतं देहमात्रेणेत्यर्थः॥९॥१०॥ यथेति। पुरः पश्चाच्च सर्वम् आत्ममात्रं यथा भवति तथा गतिम् आत्मज्ञानरूपाम् आत्मना देहेन परेण तत्संबन्धिपुत्रादिना ॥ ११ ॥ भयेषूपस्थितेषु एकपातिनामेकायिनां यत्सांपरायिकं परलोके हितं तमेव धर्मं ज्ञानं वा निधिमिव निगूह्य निधत्स्व केवलं शुद्धं निष्कामं निर्गुणम् ॥ १२ ॥

सकूलमूलबान्धवं प्रभुर्हरत्यसंगवान् ।
न सन्ति यस्य वारकाः कुरुष्व धर्मसन्निधिम् ॥ १३ ॥
इदं निदर्शनं मया तवेह पुत्र सांप्रतम् ।
सुदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ॥ १४ ॥
दधाति यः स्वकर्मणा ददाति यस्य कस्यचित् ।
अबुद्धिमोहजैर्गुणैः स एक एव युज्यते ॥ १५ ॥
श्रुतं समस्तमश्नुते प्रकुर्वतः शुभाः क्रियाः ।
तदेतदर्थदर्शनं कृतज्ञमर्थसंहितम् ॥ १६ ॥
एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥ १७ ॥
अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः ।
सम्यक् स्वधर्मं कृत्वेह परत्र सुखमश्नुते ॥ १८ ॥

न देहभेदे मरणं विजानतां
नच प्रणाशः स्वनुपालिते पथि ।
धर्मं हि यो वर्द्धयते स पण्डितो
य एष धर्माच्च्यवते स मुह्यति ॥ १९ ॥

कूलम् अग्रं प्राक्कूलेषु दर्भेषूपविश्येति लिङ्गात् बालवृद्धैर्वयस्यैः सहितं यथा स्यात्तथेत्यर्थः ॥ १३ ॥ १४ ॥ यः स्वकर्मणा दधाति आत्मानं

देहं पुष्णाति यस्य कस्यचित् फलस्य कृते ददाति च अबुद्धिरज्ञानं मोहो विपरीतज्ञानं तदुभयजैर्गुणैः दुःखादिभिर्मुच्यते इति पाठे आत्मानं चित्तं ददाति एकस्मिन् तत्त्वं धारयति यस्येति यत्किंचिद्ददाति सर्वं त्यजतीत्यर्थः ॥ १५ ॥ श्रुतं तत्त्वमस्यादिवाक्यजं ज्ञानं कर्तृ समस्तं ब्रह्माण्डमश्नुते व्यप्नोति य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति ब्रह्मविदः सार्वात्म्यश्रुतेः तदेतत्सार्वात्म्यं सार्वज्ञ्यं च अर्थस्य मोक्षाख्यपरमपुरुषार्थस्य दर्शनं नान्यत् कृतज्ञं कृतज्ञे उपदिष्टम् । अर्थसंहितं पुरुषार्थसंगतं भवति न कृतघ्नादौ सार्वज्ञ्यसार्वात्म्यदा इयं विद्या उत्तमायैव दातव्येत्यर्थः॥१६—१८॥ देहभेदेऽपि मरणं नास्तीति जानताम् अनुपालिते शिष्टैराहते पथि वर्तमानानाम् ॥ १९ ॥

पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ २० ॥

अलमन्यैरुपालम्भैः कीर्त्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्त्तव्यं हितमात्मनः ॥ २१ ॥

नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा चाभयं शेते त्यक्त्वा सर्वं सुखी भव ॥२२॥

अकिञ्चनः परिपतन् सुखमास्वादयिष्यसि ।
अकिञ्चनः सुखं शेते समुत्तिष्ठति चैव हि ॥ २३ ॥

आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रमथो ह्येष दुर्लभः सुलभो मतः ॥ २४ ॥

अकिञ्चनस्य शुद्धस्य उपपन्नस्य सर्वतः ।
अवेक्षमाणस्त्रीँल्लोकान्न तुल्यमिह लक्षये ॥ २५ ॥

आकिञ्चन्यं च राज्यं च तुलया समतोलयन् ।
अतिरिच्यते दारिद्र्यं राज्यादपि गुणाधिकम् ॥२६॥

आकिञ्चन्ये च राज्ये च विशेषः सुमहानयम् ।
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ॥२७॥

नैवास्याग्निर्नचानिष्टो न मृत्युर्न च दस्यवः ।
प्रभवन्ति धनत्यागाद्विमुक्तस्य निराशिषः ॥ २८ ॥
तं वै सदा कामचरमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥ २९ ॥
धनवान् क्रोधलोभाभ्यामाविष्टो नष्टचेतनः ।
तिर्यगीक्षः शुष्कमुखः पापकोऽभ्रकुटीमुखः ॥ ३० ॥
निर्दशन्नधरोष्ठं च क्रुद्धो दारुणभाषिता ।
कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥३१॥
श्रियास्त्वभीक्ष्णं संवासो मोहयत्यविचक्षणम् ।
सा तस्य चित्तं हरति शरदाभ्रमिवानलः ॥ ३२ ॥

पुलाका गर्तोष्मणा भक्तसिक्थवन्नष्टबीजभावाः पूतिधान्यामिति यावत् पुत्तिका मशकाः कारणं सुखादिहेतुः ॥ २० ॥ उपालम्भैराक्षेपवाक्यैः व्यतिक्रमैः अपराधैः अलम् उच्चैः पर्याप्तं पेशलं कौशलयुक्तं यथा स्यात्तथा सत्कर्मभिः सद्वासनोदयात्साध्वी प्रज्ञा समुदेतीति भावः ॥ २१ ॥ हितमेवोपदिशति ॥ २२ ॥ नास्ति किञ्चन धनदारादिकं यस्य स अकिञ्चनः परितः पतन् गच्छन् अनिकेतश्चरन्नित्यर्थः ॥ २३ ॥ पथ्यं मोक्षमार्गादनपेतम् अनामयं निर्विघ्नः अनमित्रपथः शत्रुवर्जितः पन्थाः दुर्लभः कामिनां सुलभः पारतन्त्र्याभावात् ॥ २४ ॥ उपपन्नस्य वैराग्यसम्पन्नस्य ॥ २५ ॥ २६ ॥ गुणाधिक्यमेवाह आकिञ्चन्येति ॥ २ ॥ अनुपस्तीर्णे शय्याहीने भूतले शेते तम् ॥ २७—३२ ॥

वृत्त एष हृदि प्रौढो मृत्युरेष मनोभवः ।
क्रोधो नाम शरीरस्थो देहिनां प्रोच्यते बुधैः ॥३३॥
यन्निमित्तं भवेच्छोकस्तापो वा दुःखमेव च ।
आयासो वा यतो मूलमेकाङ्गमपि तत्त्यजेत् ॥ ३४ ॥

सुखं निराशः स्वपिति नैराश्यं परमं सुखम् ।
आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला॥३५॥

न तृप्तिः प्रियलाभेऽपि तृष्णा नाद्भिः प्रशाम्यति ।
संप्रज्वलति सा भूयः समिद्भिरिव पावकः ॥ ३६ ॥

वृत्तो नित्यनिष्पन्नः मृत्युजन्ममरणाख्यसंसारद्वारभूतः मनोभवः कामः स एव केनचिन्निमित्तेन प्रतिहतः क्रोधरूपेण परिणमते इत्यर्थः ॥३३॥ यत आयासस्तन्मूलं कारणम् आयासादेः एकाङ्गं शरीरैकदेशभूतमपि त्यजेत् किमुत धनदारादिः ॥ ३४ ॥ सुखमिति नैराश्यमेव परं सुखं मोक्षाख्यपरमसुखप्रापकम् अशनं भोजनम् आशः विषयभोगः तद्रहितामनाशां भोगार्थं हि धनाद्याशा भोगत्यागादुच्छिद्यत इत्यर्थः ॥३५॥ विपक्षे बाधकमाह नेति तदुक्तम्—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते इति ॥ ३६ ॥

सर्वसाम्यमनायासः सत्यवाक्यं च भारत ।
निर्वेदश्चाविधित्सा च यस्य स्यात्स सुखी नरः॥३७॥

तस्मान्निर्वेद एवेह गन्तव्यः सुखमिच्छता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥ ३८ ॥

यः कामानाप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ ३९ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिसदानन्दविद्वत्कृते मोक्षधर्मसारोद्धारे वैराग्यप्रकरणं द्वितीयं समाप्तिमगमत् ॥ २ ॥



सर्वत्र लाभालाभमानापमानादौ साम्यमवैषम्यं सर्वसाम्यम् अनायासः धनाद्यर्थं श्रमाभावः निर्वेदो वैराग्यम् अविधित्सा कर्मणीच्छाभावः (विधित्सेति पाठे श्रवणादीच्छा लाभादौ वैषम्ये रागादिस्ततः प्रवृत्तिस्तत आ-

यासस्तः सत्यत्याग इति एतानि त्यक्त्वैव सुखी स्यान्न त्वत्यक्त्वा। देहनिर्वाहस्त्वारब्धकर्मोपनतैरेवान्नादिभिर्भविष्यति तस्मादुपरम एव श्रेयानित्यर्थः ॥३७॥ गन्तव्यः अनुसर्तव्यः निराशः निरस्ताशः अर्थश्च तत्साधनं चेति समाहारः तस्मिन् ॥ ३८ ॥ विषयस्वीकारत्यागयोर्महदन्तरं सर्वमोक्षशास्त्रसिद्धान्तशुकवचनेनाह य इति ॥ ३९ ॥

---

कषायं पाचयित्वा शुश्रेणिस्थानेषु च त्रिषु ।
प्रव्रजेत् परं स्थानं पारिव्राज्यमनुत्तमम् ॥ १ ॥

श्रीमत्कृष्णपदाम्भोजमकरन्दस्पृहावताम् ।
शुद्धिर्विवेको वैराग्यं सिद्ध्येयुर्यत्नमन्तरा ॥ १ ॥
गोविन्दपादकमले रतिरेव पुंसां वेदान्ततत्त्वविषयेक्षणसाधनाप्तौ ।
हेतुस्ततोऽद्वयविचारणयापवर्गप्राप्त्येकहेतुरुदियात्परमात्मबोधः ॥ २ ॥

विवेकादिसाधनसंपन्नस्य मुमुक्षोः संन्यास एव तत्त्वज्ञानसाधनश्रवणादिप्रवृत्तौ मुख्यो हेतुर्दृष्टो दृष्टद्वारोपकारकत्वादिति ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुतिसिद्धमर्थं दर्शयति कषायमिति। कषायं चित्तदोषं पाचयित्वा विश्लथं कृत्वा स्थानेषु आश्रमेषु अनुत्तमम् इदं मतं श्रेष्ठमित्यर्थः ॥ १ ॥

शरीरपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे रसज्ञाने च तिष्ठति ॥ २ ॥

एक एव चरेद्धर्मं सिद्ध्यर्थमसहायवान् ।
एकश्चरति यः पश्यन्न जहाति न हीयते ॥ ३ ॥

अनग्निरनिकेतश्च ग्राममन्नार्थमाश्रयेत् ।
अश्वस्तनविधाता स्यान्मुनिर्भावसमाहितः ॥ ४ ॥

कपालं वृक्षमूलानि कुचैलमसहायता ।
उपेक्षासर्वभूतानामेतावद्भिक्षुलक्षणम् ॥ ५ ॥

यस्मिन्वाचः प्रविशन्ति कूपे त्रस्ता द्विपा इव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ ६ ॥

नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् ।
ब्राह्मणानां विशेषेण नैव ब्रूयात्कथं चन ॥ ७ ॥

यद् ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।
तूष्णीमासीत निन्दायां कुर्वन्भैषज्यमात्मनः ॥ ८ ॥

अनभ्याहतचित्तः स्यादनभ्याहतवाग्भवेत् ।
निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम् ॥ ९ ॥

अभयं सर्वभूतेभ्यो भूतानामभयं यतः ।
तस्य मोहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ १० ॥

शरीरपक्तिः स्थूलसूक्ष्मशरीरशुद्धिः कर्माणि कर्मप्रयोज्या साध्यसाधनयोरभेदोपचारः ज्ञानं तु शब्दः पूर्ववैलक्षण्यसूचनार्थः मोक्षसाधनमित्यर्थ तत्र क्रममाह कषाये इति चित्तदोषे कर्मभिः पाचिते सति रसः प्रीतिर्ब्रह्मानन्दस्तस्य ज्ञाने शास्त्रजे तिष्ठति सति ॥ २ ॥ पश्यन् आत्मदृक् न जहाति कञ्चित्पदार्थं सर्वव्याप्तित्वात् न हीयते मोक्षसुखात् ॥ ३ ॥ भावसमाहितः चित्तसमाधानवान् ॥ ४ ॥ कपालं पानमात्रं विवर्णं कषायवस्त्रं कुचैलमित्युच्यते उपेक्षा रागद्वेषराहित्यम् ॥ ५ ॥ यस्मिन्निति आक्रुश्यमानो नाक्रोशेदित्यर्थः ॥ ६ ॥ एतदेवाह नैवेति ॥ ७ ॥ भैषज्यं भवरोगचिकित्साम् ॥ ८ ॥ अभ्याहतं दोषाक्रान्तं निरमित्रस्य अजातशत्रोः ॥ ९ ॥ सर्वभूतेभ्यो यस्येति शेषः ॥ १० ॥

यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ ११ ॥

एवं सर्वमहिंसायां धर्मार्थमपिधीयते ।
अमृतः स नित्यं वसति यो हिंसां न प्रपद्यते ॥ १२ ॥

अहिंसकः समः सत्यो धृतिमान्नियतेन्द्रियः ।
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥ १३ ॥

सर्वाणि भूतानि सुखे रमन्ते
सर्वाणि दुःखस्य भृशं त्रसन्ते ।
तेषां भयोत्पादनजातखेदः
कुर्यान्न कर्माणि हि श्रद्दधानः ॥ १४ ॥

दानं हि भूताभयदक्षिणायाः
सर्वाणि दानान्यधितिष्ठतीह ।
तीक्ष्णां तनुं यः प्रथमं जहाति
सोऽनन्त्यमाप्नोत्यभयं प्रजाभ्यः ॥ १५ ॥

आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्जवम् ।
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा शमस्तथा ॥१६॥

निर्भयत्वमुक्त्वा कृत्स्नानन्दप्राप्तिमप्याह यथेति । नागपदे हस्तिपदे पदगामिनां नृपश्वादीनां पदानि अपिधीयन्ते तथेन्द्रादीनां पदजातानि स्थानानि कौञ्जरे कुं पृथ्वीं शरीररूपां जरयतीति कुञ्जरः समाधिस्थो योगी तस्य स्थाने कौञ्जरे पदे यथा कृताय विजितायाधरेयाः संयन्त्येवमेवैनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेदेति श्रुतेः ॥ ११ ॥ दार्ष्टान्तिकं विवृणोति एवमिति । एवं दृश्यमानप्रकारं धर्मार्थम् अहिंसायां सर्वभूताभयदानरूपे संन्यासयोगे ॥ १२ ॥ १३ ॥ सर्वाणीति कर्ममात्रं हिंसाकरमतस्त्याज्यमित्यर्थः ॥ १४ ॥ अधितिष्ठति अधिकत्वेन वर्तते तीक्ष्णां तनुं हिंसामयं धर्मं सोऽत्यन्तं यतः प्रजाभ्यः प्रजानामभयम् ॥ १५ ॥आनृशंस्यादयः प्रवर्त्तन्ते तैश्च परं ब्रह्म प्राप्नोति आनृशंस्यं भूतदया क्षमा अभिभवेऽप्यविक्षिप्तचित्तता शान्तिः मनोजयः सत्यं यथार्थभाषणम् आर्जवम् अवक्रत्वं शमः कर्मभ्य उपरतिः ॥ १६ ॥

पन्थानो ब्रह्मणस्त्वेते एतैः प्राप्नोति यत्परम् ।
तद्विद्वाननुबुद्ध्येत मनसा कर्मनिश्चयम् ॥ १७ ॥

यां विप्राः सर्वतः शान्ता विशुद्धा ज्ञाननिश्चयाः ।
गतिं गच्छन्ति संतुष्टास्तामाहुः परमां गतिम् ॥१८॥

वेदाश्च वेदितव्यं च विदित्वा च तथा स्थितिम् ।
एवं वेदविदित्याहुरतोऽन्यो वातरेचकः ॥ १९ ॥

कर्मनिश्चयं कषायपक्तिम् अनुवैराग्याद्युत्पत्तिमनुसंजातां बुद्ध्येत॥१७॥ यामिति परमगतेर्लक्षणं यत्र वेदा वेदितव्यं कर्म ब्रह्मस्वरूपं या स्थितिः कर्मणामनुष्ठानं ब्रह्मणश्च ज्ञानं च स एव वेदवित् अन्यस्तु वातरेचकः भस्त्रापरनामा चर्मकोशः ॥ १८ ॥ १९ ॥

सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् ।
वेदे हि निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ॥ २० ॥
एषैव निष्ठा सर्वत्र यत्तदस्ति च नास्ति च ।
एतदन्तं च मध्यं च सच्चासच्च विजानतः ॥ २१ ॥

मानं मेयं मातृस्थितिं च वेदादिपदोपात्तां क्रमेण व्युत्पादयति सर्वमित्यादिना। अस्ति वर्त्तमानं नास्ति अतीतानागतं तस्य सर्वस्य निष्ठा स्वरूपम् ॥ २० ॥ मानमुक्त्वा मेयमाहैषैवेति । सर्वत्र सर्वेषु शास्त्रेषु एषा एकैव निष्ठा कासौ एतद् जगदस्ति च प्रतीतिकाले। नास्ति च बाधकाले ननु घटादिरपिस्थितिकाले अस्ति प्राक्प्रध्वंसाभावकाले नास्तीत्याशङ्कानिरासाय चकारद्वयेन समानकालिकमस्तित्वधर्मद्वयं समुच्चिनोति तेन बुद्धानां प्रतीयमानमपि मायापुरवन्नास्त्येव अबुद्धानां च तत्त्वतः अत्यन्तासदपि वज्रपञ्जरवद्दृढतरमस्त्येव एतदेव विवृणोति एतदिति विजानतः तत्त्वज्ञस्य एतत्परिदृश्यमानं वियदादि अन्तं च मध्यं च अनुवाद्यापेक्षं क्लीबत्वम् अन्तश्च मध्यश्च अन्तो निर्विशेषं लयस्थानं सत्सूत्राख्यं वस्तुतस्त्वसदिति एतद्वै राजरूपं शुद्धाद् ब्रह्मणोऽनन्यदेव रजतमिव शुक्तेः एतन्मायाशबलादप्यनन्यत् कुण्डलमिव कनकात् एतत्सूक्ष्मादप्यनन्यत् उपनेत्रदृष्टः स्थूलाक्षरमिव सूक्ष्मात् तेनैतदसत् अज्ञानमात्रमनिर्वचनीयमिति। नन्वेक एव मायावी सर्वलयस्थानमस्तु किमिति ततोऽन्यन्निर्मायं कल्प्यते इति चेत् श्रुतिप्रामाण्यादिति ब्रूमः तथा हि श्रुतिः स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमिति अप्समुद्रदृष्टान्तेन कार्यलयाधिष्ठानं मायाविनं मुक्त्वा स यथा सैन्धवखिल्य उदके शस्तः सैन्धवखिल्यस्तत्र उदकमेवानुविलीयते इति लवणोदकदृष्टान्तेन कार्यकारणोभयलयाधिष्ठानं चिन्मात्रं दर्शयति यथोदके शस्तः सैन्धवखिल्यस्तत्र स्वोपादानभूतमुदकं विलीनमनुविलीयते नतु करकावत्स्वरूपमात्रेण परिणामानतिरेकादेवं कार्यं कारणे शुद्धे ब्रह्मणि लीयत इति श्रुत्यर्थः ॥ २१ ॥

समाप्तं त्याग इत्येव सर्ववेदेषु निष्ठितम् ।
संतोष इत्यनुगतमपवर्गे प्रतिष्ठितम् ॥ २२ ॥
ऋतं सत्यं विदितं वेदितव्यं सर्वस्यात्मा स्थावरं जङ्गमं च
सर्वं सुखं यच्छिवमुत्तरं च ब्रह्माव्यक्तप्रभवं चाव्ययं च॥२३॥

एवं युक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ।
कर्मैवं पुरुषस्याह शुभं वा यदि वाशुभम् ॥ २४ ॥

एवं पक्वकषायाणामानन्त्येन श्रुतेन च ।
सर्वमानन्त्यमासीद्वै एवं नः शाश्वती श्रुतिः ॥ २५ ॥

तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम् ।
चतुर्थोपनिषद्धर्मः साधारण इति स्मृतिः ॥ २६ ॥

संसिद्धैः साध्यते नित्यं ब्राह्मणैर्नियतात्मभिः ।
संतोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते ॥ २७ ॥

एवं विदः समाधिव्युत्थानयोः स्थितिमाह । समाप्तमिति त्यागे सत्येव क्षेत्रारामगृहपशुपत्नीपुत्रशरीरेन्द्रियप्राणमनोबुद्ध्यहङ्कारान्तानां त्यागे निर्विकल्पसमाधौ सत्येव सम्यगाप्तं भवति एतदेव सर्ववेदार्थः यथोक्तं वासिष्ठे निर्विकल्पकसमाधिर्हि सिद्धान्तः सर्ववाङ्मय इति अपि संराधने प्रत्यक्षानुमानाभ्यामिति सूत्रं च संराधने समाधौ प्रत्यक्षं श्रुतिः प्रामाण्ये अन्यानपेक्षत्वात् अनुमानं स्मृतिः मूलसापेक्षत्वात् दृश्यते त्वग्र्यया बुद्ध्या योगिनस्तं प्रपश्यन्तीति श्रुतिस्मृतिभ्यां समाधौ आत्मनः सम्यग्दर्शनं भवतीति सूत्रार्थः व्युत्थानावस्थामाह सन्तोष इति श्रुतौ हि ते वै शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्येत्यादिनोत्तरोत्तरशतगुणेषु मानुषानन्दादिब्रह्मानन्दान्तेषु आनन्देषु श्रोत्रियत्वाकामहतत्वयोरनुगमो दृष्टः तत्र श्रोत्रियत्वं सर्वत्र समानम् अकामहतत्वोत्कर्षादेव चानन्दोत्कर्षः तस्यैव संतोषशब्दितस्य सर्वानन्देष्वनुगतस्य पराकाष्ठाव्युत्थिते ब्रह्मविदि इत्यर्थः ॥ २२ ॥ अपवर्गस्वरूपमाह ऋतमिति ऋतमबाधितं सत्यं सच्चान्यच्चेति सत्यं मूर्त्तामूर्त्तप्रपञ्चात्मकं तदधिष्ठानत्वात् यतः सर्वस्यात्माऽतो विदितं यतः स्थावरजङ्गमं च तत्तद्देहतादात्म्यापन्नमनो विवेक्तव्यं सर्वमविकलं सुखं दुःखासम्भिन्नं सुखमित्यर्थः । उत्तरं सर्वोत्कृष्टं शिवं शान्ताद्वैतं तुरीयमित्यर्थः शिवमद्वैतं चतुर्थं मन्यन्त इति श्रुतेः ब्रह्म त्रिविधपरिच्छेदशून्यम् अव्यक्तस्य प्रभव आविर्भावो यस्मात्तत् ईश्वरस्याप्यधिष्ठानम् अव्य-

यमपरिणामित्वान्नित्यं चात् असङ्गम् ॥ २३ ॥ ब्राह्मणो ब्रह्मवित्त्वे यथार्थनामा अन्यो ब्राह्मणको ब्राह्मणप्रतिकृतिः दारुगजवन्नाममात्रधारीत्यर्थः एवं ब्राह्मण इति ब्राह्मणक इति च कर्मसदसद्रूपं पुरुषस्य नाम आह ॥ २४ ॥ एवं निष्क्रमप्रनाड्या आनन्त्येन त्वंपदार्थसाक्षात्कारजेन तत्त्वमसिवाक्यार्थज्ञानेन सर्वं कृत्स्नमानन्त्यं प्राक् श्रुतात् ईश्वरो मदन्यः कश्चिदस्तीति सङ्कया समाधौ परिदृश्यमानमप्यानन्त्यमसर्वमभूत् श्रुतानन्तरं तु सर्वमित्यर्थः आसीदित्यनेन सर्वानन्त्यस्याकृत्रिमत्वमुक्तं शाश्वती श्रुतिः क्षेत्रज्ञं चापि मां विद्धीति तत्त्वमसीति च जीवस्य सिद्धवद्ब्रह्मभावकीर्तनात् ॥ २५ ॥ निर्णिक्तानि विशुद्धानां शुभात्मनां मोक्षबुद्धीनां चतुर्थः जाग्रत्स्वप्नसुषुप्ताभिमानिविश्वतैजसप्राज्ञानपेक्ष्य चतुर्थः निर्विशेषः परमात्मा तद्विषयिणी या उपनिषद्विद्या तदर्थो धर्मः शमदमोपरमतितिक्षाश्रद्धासमाध्यात्मकः साधारणो वर्णाश्रमाणामिति शेषः ॥ २६ ॥ संसिद्धैः शुद्धचित्तैर्नियतात्मभिर्निरुद्धचित्तैः नित्यं तुरीयं ब्रह्म साध्यते प्राप्यते ज्ञानं शास्त्रीयं श्रवणमपि निर्विक्षेपं संन्यास एव भवतीत्यर्थः अपवर्गप्रदा मतिर्विद्या ब्रह्मसाक्षात्काररूपा वृत्तिर्यस्मिन्निति नित्यमावश्यकः एष नित्यो महिमा ब्राह्मणस्येति श्रुते सनातनः सम्प्रदायागतः ॥ २७ ॥

अपवर्गमतिर्नित्यो यतिधर्मः सनातनः ।
साधारणः केवलो वा यथाबलमुपास्यते ।
गच्छतां गच्छतां क्षेमं दुर्बलोऽत्रावसीदति ॥ २८ ॥
ब्रह्मणः पदमन्विच्छन् संसारान्मुच्यते शुचिः ॥२९॥
येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥ ३० ॥
येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥ ३१ ॥
अहेरिव गणाद्भीतः सौहित्यान्नरकादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥ ३२ ॥

न क्रुद्धेन्न प्रहृष्येन्न मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥ ३३ ॥

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥ ३४ ॥

जीवितं यस्य धर्मार्थं धर्मो हर्यर्थमेव च ।
अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ ३५ ॥

साधारणः आश्रमान्तरधर्मसंमिश्रः दुर्बलो रागी ॥ २८ ॥ ज्ञानफलमुपसंहरति ब्राह्मण इत्यर्द्धेन ॥ २९ ॥ ननु संसारान्मुक्तस्य ब्राह्मणस्य कानि लक्षणानीत्यत आह येनेति। येन संप्रज्ञाते अहमेवेदं सर्वोऽस्मीति पश्यता येन रूपादीनगृह्णता च जनपूर्णमपि स्थानं शून्यमिव भवति ब्राह्मणं ब्रह्मिष्ठम् ॥ ३० ॥ ३१ ॥ अहेः सर्पात् गणात् जनसमूहात् सौहित्यात् मिष्टान्नजनिततृप्तेः ॥ ३२ ॥ ३३ ॥ निदेशम् आज्ञाम् ॥ ३४ ॥ यस्य कृतकृत्यस्य जीवन्मुक्तस्य जीवितं धर्मार्थं धर्ममेघाख्यनिर्विकल्पसमाधिजपुण्योत्पत्त्यर्थं तथा च श्रुतिः क्षणमेकं क्रतुशतस्य चतुःसप्तत्या यत्फलं तदवाप्नोतीति धर्ममेघस्य फलमाह सोऽपि धर्मो हर्यर्थं हरन्ति ते हरयः तत्समीपवर्तिनस्तेषामर्थं योगिनो हि पुण्यं तद्भक्ता हरन्ति तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या द्विषन्तः पापकृत्यामिति श्रुतेः। अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्याग इत्यन्यानिष्टं योगाङ्गफलं स्मर्यते च रत्यर्थमिति पाठे परेषां सुखार्थम् अहोरात्राः समाधयो व्युत्थानानि च पुण्यार्थं लोकशिक्षार्थम् ॥३५॥

विमुक्तं सर्वसंगेभ्यो मुनिमाकाशवत्स्थितम् ।
अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ॥ ३६ ॥

निराशिषमनारम्भंनिर्नमस्कारमस्तुतिम् ।
निर्मुक्तं बन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः ॥ ३७ ॥

एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः ।
न मृत्युरतिगोभावः स मृत्युमभिगच्छति ॥ ३८ ॥

सङ्गेभ्यः स्थूलसूक्ष्मकारणशरीरेष्वहमित्यभिमानेभ्यः आकाशवन्निर्विषयत्वात् शून्यवत् अस्वं निर्हृश्यम्। अत एवैकचरं ज्ञातृज्ञेयशून्यज्ञानमात्रम् ॥३६॥ निराशिषमिति स्तुतिनमस्कारजन्यसुखासंगिनामित्यर्थः बन्धनैर्वा-

सनाभिः ॥ ३७ ॥ प्रज्ञानमात्मानुभवस्तेन तृप्तस्य मृत्युरूपो भावः तस्यातिगोऽतिक्रम्य गन्ता न भवति किं तु स एव मृत्युमतिक्रामतीत्यर्थः स यथा स्थानमाखणमृज्वालोष्टो विध्वंसेतैवं हैव ते विष्वञ्चो विनेशुरिति श्रुतेः ऋज्वा प्राप्यते कामादयो असुरा मृत्युरूपा इति श्रुत्यर्थः अखणः खननायोग्य स्वार्थे तद्धितः एत्वमार्षम् ॥ ३८ ॥

**आनन्त्यमुपसंप्राप्ताः संतोषादिति वैदिकम् ।**
**यथा गच्छन्ति संवारं पुनर्योनिषु तादृशाः ।**
**निर्लिप्यन्ते पापकृत्यैः कदाचित्कर्मयोनितः ॥ ३९ ॥**

संतोषाद्वैराग्यात् आनन्त्यं ब्रह्मभावं प्राप्ता अगस्त्यवासिष्ठादयः आधिकारिकाः यद्यागच्छन्ति संसारं तथापि पापैः योनिप्रवेशजैर्दुःखैर्न लिप्यते गृहाद् गृहान्तरप्रवेशवदैच्छिकस्तेषां देहान्तरप्रवेशः यथाम्नातमनुक्रमणिकायां मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे कुम्भे रेतोऽपतत्ततो ऽगस्त्यवसिष्ठावाजायेतामिति वसतीवर्यः सोमाभिषवार्था आपः तत्सबन्धिनि वासतीवरे तेषां शुद्धब्रह्मविदामपि हिरण्यगर्भस्येव यावदधिकारसमाप्ति न विदेहवैकल्यमस्ति यावदधिकारमवस्थितिराधिकारिकाणामिति न्यायात् ननु ।

कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ।

इत्येकं कर्मानेकजन्मारम्भकं दृष्टं तत्र प्रथमे ऽस्मिन्नेव जन्मनि तत्त्वज्ञानोदयेऽपि प्रारब्धकर्मणां भोगादेव क्षय इति न्यायेन प्रारब्धकर्मबलादन्यानि षड्जन्मान्यनिवार्याण्येवेत्याशङ्क्याह कर्मयोनित इति । अत्रेदं विचार्यते किं सप्तजन्मानि तेषु च गर्भवासादीनि दुःखानि अशनपानादिजन्मानि सुखानि च किमेकमेव स्वामिदर्शनाख्यं कर्म प्रापयति उत कर्मान्तरसमवेतम् । आद्ये इष्टसाधनबुद्ध्यानुष्ठितस्य गर्भवासाद्यनिष्टप्रापकत्वे शास्त्रस्यानर्थकरत्वं स्यात् अन्त्ये तत्त्वज्ञानेन कर्मान्तरनाशे सति जन्मायोगाद्दर्शनशास्त्रानर्थक्यं स्यात् तस्माज्जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेतिशास्त्रादविच्छिन्ने जन्ममरणप्रवाहे सप्तसु जन्मसु विप्रत्वादियोगो दर्शनफलं नतु सप्तजन्मान्यपि तस्माद् युक्तमुक्तं प्रारब्धकर्मोपस्थापितयोनिप्रवेशनिमित्ततः पापकृतैः पापफलैर्दुःखैस्ते न लिप्यन्ते इति ॥ ३९ ॥

शब्दादीन्विषयांस्तस्मान्न संरागादयं व्रजेत् ।
क्रोधो हर्षो विषादश्च जायन्ते ह परस्परात् ४० ॥

पञ्चभूतात्मके देहे सत्त्वे राजसतामसे ।
कमभिष्टवते चायं किं च क्रोशति किं वदन् ४१ ॥

स्पर्शरूपरसाद्येषु संगच्छन्ति वालिशाः
नावगच्छन्ति विज्ञानादात्मानं पार्थिवं गुणम् ॥४२ ॥

मृण्मयं शरणं यद्वन्मृदेव परिलिप्यते ।
पार्थिवोऽयं तथा देहो मृद्विकारान्न नश्यति ४३ ॥

मधुतैले पयःसर्पिर्मांऽसानि लवणं गुडः ।
धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा ॥ ४४ ॥

यद्वत् कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत् ।
ग्राम्यमाहारमादद्यादस्वाद्वपि हि यापनम् ॥ ४५॥

यस्मात्संतोषादेवानन्त्यपदप्राप्तेस्तस्मात् संसाराद्रागाधिक्यादयं मुमुक्षुः शब्दादीन्व्रजेदित्यन्वयः । व्रजने दोषमाह क्रोध इति । क्रोधो राजसः हर्षः सात्त्विकः विषादस्तामसः॥४०॥ अभिष्टवते अभिष्टौति चित्तः अविकारित्वाद्विकारिणश्च चेतसो जडत्वात् स्तुत्याक्रोशौ निरास्पदावित्यर्थः॥४१॥ विज्ञानाद्विपर्ययं बुद्धः आत्मानं देहं पार्थिवं पृथ्वीविकारं गुणम्॥४२॥ देहस्य पार्थिवत्वे युक्तिमाह द्वाभ्यां मृन्मयमिति शरणं गृहं मृद्विकारमन्नादिकं प्राप्य न नश्यति जीवतीत्यर्थः ॥४३॥ मृद्विकारानाह मध्विति ॥४४॥ कान्तारमातिष्ठन् संन्यासी औत्सुक्यं मिष्टान्नादौ रागं न समनुव्रजेत् आहारमन्नं यापनं देहनिर्वाहकम् ॥ ४५ ॥

तद्वत्संसारकान्तारमातिष्ठन् श्रमतत्परः ।
यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा ॥ ४६ ॥

सत्यशौचार्जवत्यागैर्वचसा विक्रमेण च ।
क्षान्त्या धृत्या च बुद्ध्या च मनसा तपसैव च ॥ ४७ ॥

भावान् सर्वानुपावृत्तान्समीक्ष्य विषयात्मकान् ।

शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च ॥४८॥

सत्त्वेन रजसा चैव तमसा चैव मोहिताः ।
चक्रवत्परिवर्तन्ते ह्यज्ञानाज्जन्तवो भृशम् ॥ ४९ ॥

तस्मात्सम्यक्परीक्षेत दोषानज्ञानसंभवान् ।
अज्ञानप्रभवं दुःखमहंकारं परित्यजेत् ॥ ५० ॥

महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः ।
त्रैलोक्यं सेश्वरं कर्म अहङ्कारे प्रतिष्ठितम् ॥ ५१ ॥

यथेह नियतः कालो दर्शयत्यात्मवान्गुणान् ।
तद्वद्भूतेऽष्वहंकारं विद्यात् कर्मप्रवर्तकम् ॥ ५२ ॥

संन्यासिवद् गृहिणापि विरक्तेन स्थेयमित्याह तद्वदिति । संसारः गृहं यात्रार्थं वेदान्तश्रवणादिनिर्वाहार्थं नत्विन्द्रियप्रीत्यर्थमित्यर्थः ॥४६॥ एवं द्वयोरपि मिष्टान्नादौ वैराग्यमुत्पाद्याश्रमद्वयसाधारणान्मोक्षधर्मानाह सत्येति सत्यं यथार्थभाषणं शौचं मृज्जलाभ्यां बाह्यं भावशुद्धिरान्तरमिति द्विविधम् आर्जवमकौटिल्यं त्यागो वैराग्यं वर्चः अध्ययनजं तेजस्तेन तत्कारणं लक्ष्यं विक्रमो मनोजये शौर्यं बुद्ध्या श्रवणजन्यया धृत्या क्लेशकालेऽपि चित्त विधारकयत्नेन मनसा क्रियमाणेन तपसा साध्वसाधुनोरालोचनेन भावान्समीक्ष्येत्युत्तरेणान्वयः॥४७॥ अदीनात्मा उदारचित्तः॥४८॥ विक्षेपं दण्डमाह ॥४९॥ अज्ञानात्प्रभव उत्पत्तिर्यस्य तम्॥५०॥ महेति ईश्वरादिसर्वमहंकारकल्पितमित्यर्थः॥५१॥ नन्वेतदहंकारकल्पितं चेत्स्वप्नवन्नित्यमभिनवसंस्थानं स्यादित्याशङ्क्य पूर्वसंस्कारानुरोधात्समानरूपमेव कल्प्यत इति स दृष्टान्तमाह यथेति भूतेति भूतेन्द्रियादीनामुपलक्षणम् ॥ ५२ ॥

दोषैर्मूलादविच्छिन्नैर्विशुद्धात्मा विमुच्यते ।
विनाशयति संभूतमयस्मयमयो यथा ।
तथाकृतात्मा सहजैर्दोषैर्नश्यति तामसैः ॥ ५३ ॥

राजसं तामसं चैव शुद्धात्मकमकल्मषम् ।
तत्सर्वं देहिनां बीजं सत्त्वमात्मवतः समम् ॥ ५४ ॥

तस्मादात्मवता वर्ज्यं रजश्च तम एव च ।
रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् ॥५५॥
सत्त्वस्थः सात्त्विकान्भावाञ्छुद्धान् पश्यति संश्रितः ।
स देही विमलः श्रीमान् शूद्रो विद्यासमन्वितः ॥५६॥
रजसा सद्यते मोहस्तमसा भरतर्षभ ।
क्रोधलोभौ भयं दर्प एतेषां साधनाच्छुचिः ॥ ५७ ॥

दोषैरिति सार्द्धश्लोक एकं वाक्यं मूलान्मूलमज्ञानं तदारभ्यावच्छिन्नैर्लूनैर्मूलच्छेदेनैव दोषान् छिन्द्यात्ततश्च ते पश्चाच्छिन्नमूलतरुविलसितवत्कांचित्कालमनुवर्तमाना अप्यफला एवेत्यर्थः मूलच्छेदे उपायं सदृष्टान्तमाह विनाशयतीति संभूतमुत्पन्नमयस्मयं लोहानिगडमयः वास्यधारामयम् एवं कृतात्मा ध्यानसंस्कृतबुद्धिः तामसैर्विपर्यासरूपैरविद्यादिदोषैः सहजैरनादिभिः सह नश्यति तन्नाशयित्वा स्वयमपि कतकरजोवत् शाम्यति अत्र वास्यधारा निगडं छित्वा स्वयमपि नश्यतीति विवक्षया दृष्टान्तदार्ष्टान्तिकयोः साम्यम् ॥५३॥ शुद्धात्मकं सत्त्वं तच्चाकल्मषं काममोहराहित्यात् गुणत्रयं देहिनं देहप्राप्तौ बीजम् आत्मवतो जितचित्तस्य तु सत्त्वं समं ब्रह्म तत्प्रापकं निर्दोषं हि समं ब्रह्मेति समशब्दस्य ब्रह्मणि प्रयोगात्॥५४॥ सत्त्वं बुद्धिः सात्त्विकमेव मुमुक्षूणां पथ्यमित्याह सत्त्वस्थ इति ॥५५॥ रजस्तमसोः कार्यं मोहः विपर्ययः अनात्मन्यात्मबुद्धिः अज्ञानस्य हि द्वे शक्ती आवरणशक्तिर्विक्षेपशक्तिश्च तत्राद्यया वस्तुस्वरूपं रज्वादि आव्रियते द्वितीयया सर्पादिस्वरूपं विक्षिप्यते ते उभे अत्र क्रमेण तमोरजःशब्दाभ्यामुच्येते मोहजाः क्रोधादयः ॥ ५६ ॥

परमं परमात्मानं देवमक्षय्यमव्ययम् ।
विष्णुमव्यक्तसंस्थानं विदुस्तं देवसत्तमम् ॥ ५८ ॥
तस्य मायापिनद्धाङ्गा ज्ञानभ्रष्टा विचेतसः ।
मानवा ज्ञानसंमोहात्ततः क्रोधं प्रयान्ति वै ॥ ५९ ॥
क्रोधात्काममवाप्याथ लोभमोहौ च मानवाः ।
मानदर्पावहंकारमहंकारात्ततः क्रिया ॥ ६० ॥
क्रियाभिः स्नेहसंबन्धः स्नेहाच्छोकमनन्तरम् ।

सुखदुःखक्रिया रम्भाज्जन्माजन्मकृतक्षणाः ॥ ६१ ॥
जन्मनो गर्भवासं तु शुक्रशोणितसंभवम् ।
पुरीषमूत्रविक्लेदं शोणितप्रभवाविलम् ॥ ६२ ॥
तृष्णाभिभूतस्तैर्बद्धस्तानेवाभिपरिप्लवन् ।
संसारतन्त्रवाहिन्यस्तत्र बुद्ध्येत योषितः ॥ ६३ ॥
प्रकृत्या क्षेत्रभूतास्ता: नराः क्षेत्रज्ञलक्षणाः ।
तस्मादेता विशेषेण नचाभीयुर्विपश्चितः ॥ ६४ ॥

शुद्धेः फलं जीवब्रह्मात्मैक्यज्ञानमित्याह परमिति । परममात्यन्तिकं परं ब्रह्म कोशपञ्चकातीतम् आत्मानं प्रत्यञ्चं अक्षयं नाशहीनम् अव्ययं ह्रासहीनं विदुः प्राञ्चः शुचय इति इदानीन्तनोऽपि शुचिं विन्दतीत्यर्थः॥५७॥पिनद्धाङ्गा रूपादिभिर्जडीकृतेन्द्रिया अत एव नष्टज्ञानास्ततो विचेतसः ज्ञानसंमोहात् बुद्धिवैक्लव्यात् ब्रह्माज्ञानाद्वा क्रोधं विक्षिप्तचित्तताम् ॥५८॥ मान स्वास्मिन्पूज्यताबुद्धिः दर्पः उच्छृङ्खलत्वम् अहङ्कारः परेषां तुच्छीकरणम् ॥५९॥ जन्माजन्मकृतक्षणाः जन्ममरणयोः कृतस्वीकाराः॥६०॥६१॥ तैः क्रोधादिभिर्बद्धास्तान अभितः परिप्लवन् तर्तुमिच्छन् हेतौ शतृप्रत्ययः प्रथमं योषितो हेयत्वेन जानीयात् यतस्ताः संसारपटस्य तन्त्रमिव तन्त्रं तन्तुवायव द्वहन्ति ॥६२॥ यथा प्रकृतिः क्षेत्रज्ञं बध्नाति एवमेता अपत्योत्पत्तिक्षेत्रभूता जीवं बध्नन्तीत्यर्थः अतीयात् अतिक्रामेत् संन्यसेदित्यर्थः नचाभीयुरिति पाठे नानुसरेयुरित्यर्थः ॥ ६३ ॥

कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणान् ।
रजस्यन्तर्हिता मूर्तिरिन्द्रियाणां सनातनी ॥ ६५ ॥
तस्मात्तदात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः
स्वदेहजानस्वसंज्ञान्यद्वदङ्गात्कृमींस्त्यजेत् ।
स्वसंज्ञानस्वकांस्तद्वत्सुतसंज्ञान् कृमींस्त्यजेत् ॥ ६६ ॥
शुक्रतो रसतश्चैव स्नेहाज्जायन्ति जन्तवः ।
स्वभावात्कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ॥ ६७ ॥
रजस्तमसि पर्यस्तं सत्त्वं च रजसि स्थितम् ।
ज्ञानाधिष्ठितमव्यक्तं बुद्ध्यहंकारलक्षणम् ॥ ६८ ॥

तद्बीजं देहिनामाहुस्तद्बीजं देहसंज्ञितम् ।
कर्मणा कालयुक्तेन संसारपरिवर्तनम् ॥ ६८ ॥

रमत्ययं यथा स्वप्ने मनसा देहवानिव ।
कर्मगर्भैर्गुणैर्देही गर्भे तदुपलभ्यते ॥ ७० ॥

शत्रुमारणार्थं मन्त्रमयी शक्तिः कृत्या सैव एताः रजांसि रजोगुणोऽन्तर्हिताः सूक्ष्मरूपेण मृदि घटा इव स्थिता इन्द्रियाणां मूर्त्तिरिन्द्रियैः कल्पितेत्यर्थः॥६४॥ तदात्मकात् स्त्रीप्रधानात् एतेन सार्द्धश्लोकेन दोषनिमित्तं रूपादयो विषयाः संकल्पकृता इति गौतमसूत्रार्थो दर्शितः अस्वसंज्ञान् कृमीन् यूकालिक्षादीन् अस्वकान् अनात्मीयान्॥६५॥शुक्रतः रेतोरूपात् स्नेहात् द्रवांशतः पुत्राः रसतः स्वेदरूपात्स्नेहाद्यूकादयः एषा जन्तूत्पत्तिः स्वभाववादेऽदृष्टवादे च समानैवेत्यर्थः॥६६॥ एवं हेयमुक्त्वा ज्ञेयमाह रज इति प्रवृत्तिप्रकाशात्मकं रजः सत्त्वे तमसि लीयते तच्च तमः अज्ञानाख्यं ज्ञानाधिष्ठितम् अधिष्ठानभूते ज्ञानेऽध्यस्तं सत् बुद्ध्यहंकारयोर्लक्षणं ज्ञापकं भवति॥६७॥ तत् बुद्ध्यहंकारविशिष्टमज्ञानं देहिनां जीवानां देहप्राप्तौ बीजं तस्य कार्यस्याज्ञानस्य बीजम् अधिष्ठानभूतं ज्ञानं तदेव जीवसंज्ञितं देहिशब्दवाच्यं तज्ज्ञानं बीजसंज्ञितमिति पाठे तत् अज्ञानविशिष्टं ज्ञानं बीजम् ईश्वरस्तत्सञ्ज्ञम् ऐश्वर्यमेवाह कर्मणेति ६८ अयं जीवः ईश्वरो वा गर्भे मातुरुदरे ॥ ६९ ॥

कर्मणा बीजभूतेन चोद्यते यद्यदिन्द्रियम् ।
जायते तदहंकाराद्रागयुक्तेन चेतसा ॥ ७१ ॥

शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात्तथा चक्षुर्घ्राणं गन्धचिकीर्षया ॥ ७२ ॥

स्पर्शने त्वक्तथा वायुः प्राणापानव्यपाश्रयः ।
व्यानोदानौ समानश्च पञ्चधा देहयापनम् ॥ ७३ ॥

संजातैर्जायते गात्रैः कर्मजैर्ब्रह्मणावृतः ।
दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः ॥ ७४ ॥

दुःखं विद्यादुपादानादभिमानाच्च वर्धते ।
त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते॥ ७५ ॥

इन्द्रियाणां रजस्येव प्रलयप्रभवावुभौ ।
परीक्ष्य संचरेद्विद्वान्यथावच्छास्त्रचक्षुषा ॥ ७६ ॥
ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्यतर्षुलम् ।
हीनैश्च करणैर्देही न देहं पुनरर्हति ॥ ७७ ॥

तत्र मांसपिण्डभूतोऽसौ पूर्ववासनावशाद्यं यं विषयं स्मरति तत्तद्ग्रहकमिन्द्रियमस्याविर्भवतीत्याह कर्मणेत्यादिना ॥ ७० ॥ घ्राणं गन्धचिकीर्षयेति एतस्यैव वासनावशात्स्रष्टृत्वं दर्शितम् ॥ ७१ ॥ यापनं देहयात्रानिर्वाहकम् ॥ ७२ ॥ संजातैः सम्यङ्निष्पन्नैर्गात्रैः श्रोत्रादिभिः कृत्वा नरो वर्ष्मणा शरीरेणावृत्तः सन् जायते ब्रह्मणा सहेति पाठान्तरम् ॥ ७३ ॥ दुःखान्द्यन्तौरित्येतद्याचष्टे दुःखमिति उपादानाद्देहेन्द्रियादीनां गर्भाङ्गाकारात् अभिमानाज्जन्मानन्तरं दुःखं देहवद्वर्द्धते एवं त्यागान्मरणादपि वर्द्धतेऽतस्तेभ्यो हेतुभ्यः निरोधो दुःखस्य स्यात् कर्तव्यः यतो निरोधज्ञो विमुच्यते ॥ ७४ ॥ रजस्यन्तर्हिता मूर्तिरिन्द्रियाणां रजोमात्रत्वमुपसंहरतिः इन्द्रियाणामिति परीक्ष्येति रजोरूपप्रवृत्तिनिरोधेनेन्द्रियनिरोधात् दुःखनिरोधो भवतीत्यर्थः ॥ ७५ ॥ अतर्षुलं तृष्णाहीनं ज्ञानेन्द्रियाणि नोपसर्पन्ति न व्याप्नुवन्ति इन्द्रियार्थान्प्राप्यापीति शेषः तत्फलमाह हीनैरिति हीनैः क्षीणैः करणैरिन्द्रियैः ॥ ७६ ॥

अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा ।
तद्विज्ञानाच्चरन् राजन्प्राप्नुयात्परमां गतिम् ॥ ७८ ॥
सर्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते ।
पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रदर्शिनः ॥ ७९ ॥
सर्वभूतात्मभूतास्ते सर्वज्ञाः सर्वदर्शिनः ।
ब्राह्मणा वेदशास्त्रज्ञास्तत्त्वार्थगतनिश्चयाः ॥८०॥
नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभते ध्वनी ।
ज्ञानहीनस्तथा लोके तस्माद्ज्ञानविदोऽधिकाः ॥८१॥
तांस्तानुपासते धर्मान् धर्मकामा यथागमम् ।
न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ॥ ८२ ॥
वाग्देहमनसां शौचं क्षमासत्यं धृतिः स्मृतिः ।
सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणान् शुभान् ॥ ८३ ॥

यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम् ।
परं तत्सर्वधर्मेभ्यस्तेन यान्ति पराङ्गतिम् ॥ ८४ ॥

अत्रेन्द्रियजये ज्ञानाज्ज्ञानं प्राप्य चरन् अमादीननुतिष्ठन् ॥ ७८ ॥ पुरुषो मनुष्यः द्विजास्त्रैवर्णिकाः मन्त्रदर्शिनो ब्राह्मणाः ॥ ७९ ॥ तत्त्वार्थं प्रतिगताः निश्चयो येषाम् ॥ ८० ॥ ज्ञानविदो ब्रह्मविदः ॥ ८१ ॥ एवमुपायज्ञान्प्रशस्य तद्गुणानाह तानिति यथागमं यथाशास्त्रं तांस्तान् अनृतइष्टापूर्त्तादीन् अर्थसामान्यं फलसाम्यं मोक्षाख्यं निरतिशयम् इमान् वक्ष्यमाणान् ॥ ८२ ॥ गुणानेवाह वागिति अनृतहिंसाकामादिराहित्यं वागादीनां शौचं सर्वेषु प्रवृत्तिनिवृत्यात्मकेषु धर्मेषु ॥ ८३ ॥ ब्रह्मणि चर्या ब्रह्मचर्यं योगधर्मः ब्रह्मप्रापकत्वात्तदभिन्नं परां गतिं मोक्षम् ॥ ८४ ॥

लिङ्गं संयोगहीनं यच्छब्दस्पर्शविवर्जितम् ।
श्रोत्रेण श्रवणं चैतच्चक्षुषा चैव दर्शनम् ॥ ८५ ॥
वाक्संभाषा प्रवृत्तं यत्तन्मनः परिवर्जितम् ।
बुद्ध्या चाध्यवसायीत ब्रह्मचर्यमकल्मषम् ॥ ८६ ॥
सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान् ।
द्विजाग्र्यो जायते विद्वान्कन्यसीं वृत्तिमास्थितः॥८७॥
सुदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु ।
संप्रवृत्तमुदीर्णं च निगृह्णीयाद्द्विजो रजः ॥ ८८ ॥
योषितो न कथाः श्राव्या न निरीक्ष्या निरम्बराः ।
कथञ्चिद्दर्शनादासां दुर्बलानां विशेद्रजः ॥ ८९ ॥
रागोत्पन्नश्चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः ।
मग्नः स्वप्ने च मनसा त्रिर्जपेदघमर्षणम् ॥ ९० ॥

गतिमेव विशिनष्टि लिङ्गमिति लिङ्गं पञ्च प्राणमनोबुद्धिदशेन्द्रियसंघातरूपं तेन यत्र संयोगो नास्ति अत एव शब्दादिहीनं श्रोत्रेण उपाधिना तदेव श्रवणं शब्दानुभवरूपम् । एवं रूपाद्यनुभवात्मकं तथा च शब्दादीनां व्यभि-

चारित्वाद्यत्केवलानुभवरूपं तदेव मुख्यं ब्रह्म निर्विकल्पकावस्थापरब्रह्मप्रापिकेत्यर्थः ॥ ८५ ॥ वाचा सम्भाषा कथनं प्रवृत्तं यस्मिंस्तथाभूतं यद्ब्रह्मचर्यं तत् मनः मनोमात्रेणावस्थानं परिवर्जितं विषयेन्द्रियहीनं शब्देन वक्तुं योग्या सविकल्पकावस्थेत्यर्थः । यद्बुध्या श्रवणमननोत्थया अध्यवसायीत निश्चिनुयात् निर्विचिकित्सं परोक्षज्ञानमित्यर्थः ॥ ८६ ॥ ब्रह्मचर्याणां क्रमेण फलमाह सम्यगिति ब्रह्मैव लोकस्तं मोक्षं सुरान् सत्यलोके कन्यसीं कनीसीम् ॥ ८७ ॥ सम्प्रदीप्तं समुत्पन्नम् उदीर्णं वृद्धिं गतं रजः कामादिरूपम् ॥ ८८ ॥ कृच्छ्रं त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितं त्र्यहं परं च नाश्नीयात् प्रजापत्योऽमुच्यत इत्यादिनोक्तलक्षणं महार्त्तिः शुक्रवृध्यात्यन्तपीडितः अन्हस्त्रिरिति वा पाठः स्वप्ने च रेतः स्रावेऽप्सुमग्नः अघमर्षणं ऋतं च सत्यं चेत्यृक्त्रयम् ॥ ८९ ॥ मनसा निर्दहेदिति संबन्धः ॥ ९० ॥

पाप्मानं निर्दहेदेवमन्तर्भूतरजोमयम् ।
ज्ञानयुक्तेन मनसा संततेन विचक्षणः ॥ ९१ ॥
कुणपामेध्यसंयुक्तं तद्वदच्छिद्रबन्धनम् ।
तद्वद्देहगतं विद्यादात्मानं देहबन्धनम् ॥ ९२ ॥
वातपित्तकफान् रक्तत्वङ्मांसं स्नायुरस्थि च ।
मज्जामेदःशिराजालैस्तर्पयन्ति रसा नृणाम् ॥ ९३ ॥
दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः ।
याभिः सूक्ष्माः प्रतायन्ते धमन्योऽन्याः सहस्रशः॥९४॥
एवमेताः शिरा नद्यो रसोदा देहसागरम् ।
तर्पयन्ति यथाकालमापगा इव सागरम् ॥ ९५ ॥
मध्ये च हृदयस्यैका शिरा तत्र मनोवहा ।
शुक्रं संकल्पजं नृणां सर्वगात्रैर्विमुञ्चति ॥ ९६ ॥
सर्वगात्रप्रतापिन्यस्तस्या ह्यनुगताः शिराः ।
नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम् ॥ ९७ ॥

पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः ।
शुक्रं निर्मथ्यते तद्वद्देहसंकल्पजैः खजैः ॥ ९८ ॥

कुणपेति शरीरान्तर्गतं मलयन्त्रं तद्यथा दृढं बन्धनम् एवं देह आत्मनो दृढबन्धनमित्यर्थः ॥ ९२ ॥ शिरा नाड्यस्तासां जालैः ॥ ९३ ॥ दश वातादिदशकवहाः धमन्यो नाड्यः पञ्चस्विन्द्रियेषु गुणं स्वस्वविषयग्रहणपाटवम् अत्र रसार्पणद्वारा आवहन्तीति यथा याभिरश्वत्थपर्णशङ्कुतुल्याभिः ॥ ९४ ॥ ९५ ॥ हृदयस्य कदम्बकुसुमाकारस्य मांसपिण्डस्य मध्ये मनोवहा अन्नमयं हि सोम्य मन इति श्रुतेरन्नरसैर्हृदयान्तर्वर्ति मनः प्रीणनकरी नाडी यथोक्तम् अश्वत्थपत्रनाडीवद् द्विसप्ततिशताधिका नाडी मनोवहेत्युक्तं योगशास्त्रविशारदैरिति सा हि सर्वगात्रेभ्यः शुक्रमादायोपस्थोन्मुखं करोति ॥ ९६ ॥ एका शिरा कथं सर्वगात्रैः संबद्धेत्यत आह सर्वगात्रेति तैजसं गुणमुष्माणम् ॥ ९७ ॥ खजैः मन्थनदण्डैः देहस्थात्सङ्कल्पात् खस्य इन्द्रियेभ्यश्च जातैः सङ्कल्पजैः खजैः स्त्रीदर्शनस्पर्शनादिभिः ॥ ९८ ॥

स्वप्ने ह्येवं यथाभ्येति मनः संकल्पजं रजः ।
शुक्रं संकल्पजं देहात्सृजत्यस्य मनोवहा ॥ ९९ ॥

महर्षिर्भगवानत्रिर्वेद तच्छुक्रसम्भवम् ।
त्रिबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते ॥ १०० ॥

ये वै शुक्रगतिं विद्युर्भूतसंकरकारिकाम् ।
विरागदग्धदोषास्ते नाप्नुयुर्देहसम्भवम् ॥ १०१ ॥

गुणानां साम्यमागत्य मनसैव मनोवहम् ।
देहकर्मा नुदन्प्राणानन्तकाले विमुच्यते ॥ २ ॥

भविता मनसो ज्ञानं मन एव प्रजापते ।
ज्योतिष्मद्विरजो नित्यं मन्त्रसिद्धं महात्मनाम् ॥ ३ ॥

शुक्रं सङ्कल्पजमित्येतदुपपादयति स्वप्नेपीति स्त्रीसङ्गाभावेऽपि संकल्पजं रजः स्त्रीरागः यथाभ्येति तथैव मनोवहा नाडी शुक्रं सृजति ॥ ९९ ॥

त्रीणि अन्नरसो मनोवहा नाडी संकल्पश्चेति बीजानि यस्य ॥१००॥ भूतानां दुःखोद्रेकात् अनुलोमप्रतिलोमगमनाद्वर्णसंकरकारिकां विद्युर्विचारयेयुः विचार्य विरागाः दग्धदोषाः निर्वासनाः ॥ १०१ ॥ देहानवाप्तौ थनुष्ठेयान्तरमाह गुणानामिति मनसैव गुणसाम्यं निर्विकल्पत्वम् आगत्य योगबलेनासाद्य मनोवहं सत्यलोकपुरं पूर्वोक्तसुषुम्नाख्यनाडी मार्गं प्रति अन्तकाले प्राणान्नुदन् प्रेरयन् विमुच्यते कः यः देहकर्मा देहनिर्वाहमात्रार्थं कर्म यस्य बाह्यप्रवृत्तिशून्य इत्यर्थः ॥ २ ॥ देहबन्धच्छेदे योगमार्गं क्रममुक्तिदमुक्त्वा जीवन्मुक्तिकरं ज्ञानमार्गमाह भवितेति । मनसो विश्वात्मकस्य ज्ञानं भविता भविष्यति ज्ञानं कीदृशं तज्ज्ञानं मन एव प्रजायते इति स्वप्न इव सर्वविषयाकारं भवतीति एतज्ज्ञानवतः फलमाह मन्त्रसिद्धं प्रणवोपास्तिसिद्धं मनः नित्यमनादि मायामात्रं सत् विरजं निर्वासनं ज्योतिष्मत्प्रकाशवत्सर्वज्ञं सर्वशक्ति च भवति यथोक्तं वासिष्ठे विगतवासनमाशुविपाशतामुपगतं मन आत्मतयोदितं यदभिवाञ्छति तद्भवति क्षणात्सकलशक्तिमयो हि महेश्वर इति ॥ ३ ॥

तस्मात्तदभिघाताय कर्म कुर्यादकल्मषम् ।
रजस्तमश्च हित्वेह यथेष्टां गतिमाप्नुयात् ॥ ४ ॥
तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम् ।
विपक्वबुद्धिकालेन आदत्ते मानसं बलम् ॥ ५ ॥
स दुर्गमिव पन्थानमतीत्य गुणबन्धनम् ।
यथा पश्येत्तथा दोषानतीत्यामृतमश्नुते ॥ ६ ॥

अगर्हणीयो नच गर्हतेऽन्या
न्स वै विप्रः परमात्मानमीक्षेत् ।
विनीतमोहो व्यपनीतकल्मषो
न चेह नामुत्र च सोन्नमर्च्छति ॥ ७ ॥
अरोषमोहः समलोष्टकाञ्चनः
प्रहीणकोशो गति सन्धिविग्रहः ।

अपेतनिन्दास्तुतिरप्रियाप्रिय-
श्चरन्नुदासीनवदेष भिक्षुकः ॥ ८ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषि-
सदानन्दविद्वत्कृते मोक्षधर्मसारोद्धारे
उपरत्यादिसाधनोपदेशनामकं
तृतीयं प्रकरणम् ॥ ३ ॥

तदभिघाताय मनोनाशाय अकल्मषं निवृत्तिरूपं यथा येन प्रकारेण इष्टां गतिं मोक्षम् ॥ ४ ॥ जरया दुर्बलता तां तृतीया तत्कृतार्थेनेति समासः मानसं बलं संकल्पम् आदत्ते संहरति कालेन पूर्वभाग्येन ॥ ५ ॥ गुणा देहेन्द्रियादयस्तदेव बन्धनम् ॥६॥ अमृतं प्राप्तस्य तु न इहामुत्र वा भोगोऽस्ति तद्धेतोर्मूलाज्ञानस्य नाशादित्याहागर्हणीय इति विनीतमोहो नष्टाज्ञानः अत एव व्यपनीतं नष्टं कल्मषं स्थूलसूक्ष्मदेहद्वयं यस्य अन्नमदनीयं भोग्यं लोके आच्छति न तस्य प्राणा उत्क्रामन्तीति तस्य गत्यभावश्रुतेः ॥ ७ ॥ अस्य जीवन्मुक्तावस्थामाहापेतेति न स्तः प्रियाप्रिये यस्य सः अप्रियाप्रियः उदासीनवत् न तु प्रीत्यप्रीतियुक्तं चरन् भुञ्जानो भोगान् ॥ ८ ॥

श्रीमन्मुकुन्दकरुणोत्थविवेकमुख्यैः
सत् साधनैर्युत इहात्मपदावबोधे ।
सम्यग्भवेदधिकृतो विरतोऽखिलेभ्यो
भोगेभ्य इत्यघभिदाह मुनीश्वरेशः ॥

---

## अथ त्वंपदार्थनिरूपणम्

अथ चेद्रोचयेदेतद्गुह्येत स्रोतसा यथा ।
उन्मज्जंश्च निमज्जंश्च ज्ञानवान् प्लववान् भवेत् ॥ १ ॥

नमोऽस्तु कृष्णाय सदसद्द्वयात्मने
निरस्तभेदाय सुखैकमूर्त्तये
विश्वात्मने विश्वधियां प्रवर्त्तिने
विकल्पजालोज्झिततत्त्ववेदिने १

यदर्चनं चित्तविशुद्धये नृणां
ध्यानं यदीयं मनसो विलापनम्
ज्ञानं विशुद्धं परमार्थगोचरं
यदीक्षणात्सिध्यति तं नुमो हरिम् ॥ २ ॥

धर्माच्छुद्धिर्भवति मनसो माधवार्चात्मनोऽस्माद्
वैराग्यं स्याद्विषमविषयात्सद्विवेकैकजन्म
संसारात्स्युः शमदमसुखाः सद्गुणाः सन्मुमुक्षोः
स्याज्जिज्ञासा श्रुतिवरगिरां गोचरे ब्रह्मतत्त्वे ॥ ३ ॥

जिज्ञासोरद्वयसुखकृते मोक्षधर्मान्मुनीन्द्रः
प्राह व्यासो निगमविषयं तत्त्वमत्यादरेण
संक्षेपात्तत्त्वमितिपदयोर्वर्णने तत्रतत्र
तेनाकारि स्फुटमिदमहं दर्शयिष्ये विविच्य ॥ ४ ॥

प्राधान्यतस्त्वंपदलक्ष्यमर्थं
संक्षेपतस्तावदिहादरेण
वाक्यार्थबोधाय विविच्य बुद्ध्या
प्रदर्शयिष्ये मुनिनोक्तरीत्या ॥ ५ ॥

अथेति विवेकादिसाधनसंपत्तेरनन्तरमेतद्वक्ष्यमाणं शान्त्याख्यं कैवल्यं चेद्रोचयेत् तर्हि ज्ञानवान्भवेत् एवं मुमुक्षावान् ज्ञानं साधयेदिति वदता बन्धस्याज्ञानकार्यत्वे मिथ्यात्वं दर्शितं यतो ज्ञानमज्ञानस्यैव निवर्तकं तन्निवृत्तौ तत्कृतस्य बन्धस्य निवृत्तिः संभाव्यते न तु बन्धसत्यत्वपक्षे। तथा च श्रुतिः। तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति। आत्मजिज्ञासाविद्याक्षिप्तमावरणमनुवाद्य तस्य मिथ्यात्वं प्रसिद्धविधयैवाह एत ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा इति। यथासंगो ह्ययं पुरुष इति च। तथा चासङ्गस्यापि संगित्वभानं मिथ्यैव सत्ज्ञाननिवर्त्यं भविष्यतीति युक्तमुक्तं चेदेतद्रोचयेत्तर्हि ज्ञानवान् भवेदिति। ज्ञानप्लवहीनः संसारस्रोतसा ऊह्यमान ऊर्ध्वाधोगतीर्गच्छतीत्यर्थः एतेनाथातो ब्रह्मजिज्ञासेति सूत्रपदानामर्थः साधनसम्पत्त्यनन्तरं बन्धस्य मिथ्यात्वात्तन्निवृत्त्यर्थं ब्रह्म जिज्ञास्यमित्येवं रूपो दर्शितः ॥ १ ॥

**प्रज्ञया निश्चिता धीरास्तारयन्त्यबुधान् प्लवैः ।**
**नाबुधास्तारयन्त्यन्यान्नात्मानं वा कथं चन ॥ २ ॥**

एतत्प्रज्ञामयैर्धीरा निस्तरन्ति मनीषिणः ।
प्लवैरप्लववन्तो हि किं करिष्यन्त्यचेतसः ॥ ३ ॥
उपपन्नं हि यत्प्राज्ञो निस्तरेन्नेतरो जनः ।
दूरतो गुणदोषौ हि प्राज्ञः सर्वत्र पश्यति ॥ ४ ॥
संशयं स तु कामात्मा चलचित्तोऽल्पचेतनः ।
अप्राज्ञो न तरत्येनं यो ह्यास्ते न स गच्छति ॥ ५ ॥
अप्लवो हि महादोषमुह्यमानो नियच्छति ।
कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः ॥ ६ ॥
तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः ।
एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत् ॥ ७ ॥
संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा सिद्धिरिहलोके परत्र च ॥ ८ ॥

प्रज्ञया ध्यानजसाक्षात्कारेण ॥ २ ॥ संसारतरणे प्रज्ञैव परमोपाय इत्येवं बोधयितुमुपक्रमते एतदिति । अज्ञानकार्यं संसारबन्धनम् ॥ ३ ॥ प्रज्ञावतां संसारसिन्धुतरणमुपपन्नमेवेत्याहोपपन्नमिति । युक्तियुक्तम् । तत्रोपपत्तिमाह दूरत इति ॥ ४ ॥ प्रज्ञाहीनं निन्दति संशयमिति । प्राप्त इति शेषः ॥ ५ ॥ संसारतरणोपायचिन्ताहीनं शास्त्रज्ञमपि निन्दति अप्लव इति ॥ ६ ॥ एवं साधकबाधकयुक्तिभ्यां मुमुक्षुमभिमुखीकृत्य मोक्षोपाये प्रवर्त्तयति तस्मादिति । ब्राह्मणो ब्रह्मतत्त्वसाक्षात्कारवानित्यर्थः ॥ ७ ॥ ब्रह्मसाक्षात्कारवतः स्वस्वरूपावस्थानलक्षणो मोक्षो नित्यं प्राप्त एवेत्याह संस्कृतस्येति । निष्कामधर्मेण चित्तशुद्धौ सत्यां गुरुशास्त्रोपदेशवतः दान्तस्य निगृहीतबाह्यान्तःकरणस्य जितात्मनो जितशरीरस्य नियतस्य नियमेन श्रवणादिनिष्ठस्य प्राज्ञस्य ब्रह्मसाक्षात्कारवतोऽनन्तराज्ञानोदयसमसमयसिद्धिर्मोक्षः । जीवतो मृतस्य चेत्यर्थः ॥ ८ ॥

अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमात्मनः ।
उन्मज्जंश्च निमज्जंश्च ज्ञानमेवाभिसञ्चयेत् ॥ ९ ॥

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र सर्वसंत्यागात्सिद्धिं विन्दति कश्चन ॥ १० ॥
मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः ।
पूर्वरात्रापरार्द्धे च धारयेन्मन आत्मनि । ११ ।
जन्तोः पञ्चेन्द्रियस्यास्य यदेकं छिद्रमिन्द्रियम् ।
ततोऽस्य स्रवते प्रज्ञा दृतेः पादादिवोदकम् १२ ।
मनस्तु पूर्वमादद्यात्कुमीनमिव मत्स्यहा ।
ततः श्रोत्रं ततश्चक्षुर्जिह्वां घ्राणं च योगवित् १३ ।
तत एतानि संयम्य मनसि स्थापयेद्यतिः ।
तथैवापोह्य संकल्पान्मनो ह्यात्मनि धारयेत् १४ ।
इन्द्रियाणां तथैवेषां सर्वेषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मानसस्तथा १५ ।

शास्त्राचार्योपदेशजं परोक्षज्ञानरूपं प्लवं संसारसमुद्रतरणसाधनं गृहीत्वा धीरो ध्यानवान् आत्मनः शान्तिं मोक्षहेतुज्ञानमेवाश्रयेत् तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति श्रुतेः ज्ञानं शास्त्रतः संपाद्य तन्निष्ठो भवेत् ॥ ९ ॥ विद्यादिपदैः क्रमेणाश्रमचतुष्टयधर्मा उक्ताः ॥ १० ॥ ऐकाग्र्यं विषयेभ्यः निरोधं कृत्वा आत्मनि बुद्धौ मनो धारयेत्संकल्पात्मकं मनोऽभिरुन्ध्यादित्यर्थः ॥ ११ ॥ इन्द्रियाणामनिरोधे दोषमाह जन्तोरिति । प्रज्ञा-शास्त्रज्ञा बुद्धिः स्रवते विषयप्रावण्यात् क्षीयते दृतेश्चर्मकोशस्य ॥ १२ ॥ मन इति इन्द्रियाणां निग्रहपूर्वक एवेत्यर्थः कुमीनं जालदंशाक्षमं मीनम् ॥१३॥ तत इति संकल्पत्याग एव मन आत्मनि धारणं नाम ॥ १४ ॥ मनोजये सर्वजय इति वक्तुं भूमिकामारचयति एषां शब्दादीनाम् ईश्वरम् उत्पत्तिस्थितिलयहेतुम् नियमे संहारे विसर्गे सृष्टौ ॥ १५ ॥

इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतनात्मनः ।
प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् ॥१६॥

आश्रयो नास्ति सत्त्वस्य गुणाः शब्देन चेतना ।
सत्त्वं हि तेजः सृजति न गुणान् वै कथं च न ॥ १७ ॥

एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः ।
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥१८॥

नह्ययं चक्षुषा दृश्यो नच सर्वैरपीन्द्रियैः ।
मनसा तु प्रदीपेन महानात्मा प्रकाशते ॥ १९ ॥

इन्द्रियार्थाः घटादयः स्वभावः शीतोष्णादिर्धर्मः चेतना धीवृतिः देहेषु हृदयगुहायामेव वर्तते स्वप्न इव कर्मादयोऽत एवाविर्भवन्तीत्यर्थः ॥ १६ ॥ ननु देहस्यापीन्द्रियार्थत्वाद्देहान्तर्गतबुद्धौ स्थितिः स्वस्कन्धारोहणन्यायमनुसरतीत्याशङ्क्याह सत्त्वस्य बुद्धेराश्रयोऽयं प्रागुक्तो देहः सोऽपि नास्ति स्वप्नदेहवत्तस्यापि प्रतिभानमात्रत्वात् कस्तर्हि सत्त्वस्याश्रयः किं च तस्य रूपमत आह गुणा इति त्रिगुणात्मिका मूलप्रकृतिरेव स्वविकारस्य वाचारम्भणं विकारो नाम धेयमिति श्रुतेः शब्दमात्रस्वरूपस्य सत्त्वस्याश्रय इत्यर्थः ननु चेतना सत्त्वस्याश्रयः स्वरूपं वा असङ्गत्वादविकारत्वाच्च ननु गुणाः बुद्धेरेवधर्माः सन्तु तथा च सात्त्विकोऽयं राजसोऽयमिति तेषां तदुपाधिके पुरुषे व्यपदेशो युज्यत इत्याशङ्क्याह सत्त्वं हीति । तेजः वासना सत्त्वं सृजति नतु गुणान् । अनादिवासना हि सत्त्वस्य कारणं सा च त्रिगुणात्मिकेति सत्त्वकार्यत्वं गुणानां घटते सात्त्विकोऽयमित्यादिर्व्यपदेशस्तु परम्परयापि युज्यत इति भावः ॥ १७ ॥ सप्तदशं चिदात्मानं षोडशभिः पञ्चेन्द्रियाणि पञ्चेन्द्रियार्थाः स्वभावादयश्च षट् तैः मनीषी मनोनिग्रहशीलः आत्मनि बुद्धौ ॥ १८ ॥ मनसैवानुद्रष्टव्य इति श्रुतिमाश्रित्याह नहीति ॥ १९ ॥

अशब्दस्पर्शरूपं तदरसागन्धमव्ययम् ।
अशरीरं शरीरेषु निरीक्षेत निरिन्द्रियम् ॥ २० ॥

अव्यक्तं सर्वदेहेषु मर्त्येषु परमाश्रितम् ।
योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे ॥ २१ ॥

एकत्वं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ।
आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम् ॥ २२ ॥

तदेतदुपशान्तेन दान्तेनाध्यात्मशीलिना ।
आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्मणा ॥ २३ ॥

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २४ ॥

तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम् ।
तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ॥ २५ ॥

अशरीरं स्थूलादिशरीरत्रयरहितम् ॥ २० ॥ मर्त्येषु मरणधर्मवत्सु अनुपश्यति गुरुर्वेदवाक्यमनुब्रह्मभूयसे निर्विशेषब्रह्मभावाय ॥ २१ ॥ बोद्धव्यं गुरुमुखादवगन्तव्यम् आचार्यवान् पुरुषो वेदेति श्रुतेः तेन सुषुप्ते घटदुःखादिवृत्त्यभावेन ज्ञानत्वं प्रसक्तं तन्निरस्तम् आनन्दभुक् चेतो मुखः प्राज्ञ इति श्रुतेः । तत्रापि निद्रारूपाया धीवृत्तेः सत्त्वात् प्राज्ञः सुषुप्तः उपशान्तो जितचित्तः दान्तो जितबाह्येन्द्रियः अध्यात्मशीलो ध्याननिष्ठः आत्मारामः आत्मनि रतिमान् बुद्धः ज्ञातशास्त्रतत्त्वः शुचिकर्मा यमनियमादिमान् तेन बोद्धव्यमित्यर्थः घटादिवृत्तिद्वारं मनः तेषामेकत्वं बुद्धिमात्रेणावस्थानं बुद्धिवृत्तिनिरोध इति यावत् एवं वृत्तिनिरोधेन तत्तत्त्वं बोद्धव्यम् एतदेव ज्ञानमनुत्तमं श्रेष्ठमित्यर्थः ॥२२॥२३॥ बोद्धव्यं वस्तु निरूपयति सर्वत इति । सर्वेन्द्रियव्यापाराणां तत्रैवारोपात् सर्वत्रानुगतं तत्त्वमित्थं बोद्धव्यम् ॥ २४ ॥ पुनरपि ज्ञेयं निरूपयति तदिति ॥ २५ ॥

श्रोत्रादीनि न पश्यन्ति स्वंस्वमात्मानमात्मना ।
सर्वज्ञः सर्वदर्शी च सर्वज्ञस्तानि पश्यति ॥ २६ ॥

यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा ।
न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ॥ २७ ॥

तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ॥ २८ ॥

मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा ।
गजानां च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते ॥ ३३ ॥

अहिरेव ह्यहेः पादान्पश्यतीति हि नः श्रुतम् ।
तद्वन्मूर्तिषु मूर्तिस्थं ज्ञेयं ज्ञानेन पश्यति ॥ ३४ ॥

अपि चादृष्टमपि पदार्थमनुमानेन जानन्तीत्याह रूपेति । स्थूलदृष्ट्या रूपवन्तमपि वृक्षमुदयास्तमने आद्यन्ते मृन्मात्रत्वेन अरूपत्वाद् बुधाः धिया अरूपं मृन्मात्रमेव समनुपश्यन्ति यथाहुः "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेति" तथा तद्गताः उदयास्तमयगतास्तद्दर्शिनः सवितुर्गतिं दूरत्वदोषात्प्रत्यक्षेणागृह्यमाणामपि देशान्तरप्राप्तिलिङ्गेन धिया पश्यन्ति । एवं दृश्यमानस्यासत्त्वेऽदृश्यमानस्य सत्त्वे च दृष्टान्तद्वयमुक्तम् ॥ ३० ॥ दार्ष्टान्तिकमाह तथेति । यथेदं तथा दूरस्थं रविगतिवद्दुर्लक्ष्यं प्रकरणादात्मानं बुद्धिप्रदीपेन पूर्वोक्तरीत्या समनुपश्यन्तीत्यनुषज्यते प्रत्यासन्नं निकटस्थमपि ज्ञेयं प्रपञ्चं निनीषन्ते नेतुमिच्छन्ति किं प्रतिज्ञानाभिसंहितं ज्ञानशब्देनाभिसंहितं ज्ञानशब्दाभिधेयं ब्रह्म । सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिभ्यः तत्प्रति ब्रह्मणि प्रविलापयितुमिच्छन्तीत्यर्थः ॥ ३१ ॥ एतच्चोपायेनैव सिद्ध्यतीति सदृष्टान्तमाह । न हीति ॥ ३२ ॥ उपादानोपादेययोरभेदान्मृगेण मृग इव ज्ञानेन स्वसजातीयेन ज्ञेयं गृह्यते वशीक्रियते भूमिरेव वृक्ष इत्यर्थः ॥ ३३ ॥ मूर्तिषु स्थूलदेहेषु मूर्तिस्थलिङ्गदेहस्थं ज्ञेयमात्मानं ज्ञानेन धीवृत्त्या ॥ ३४ ॥

नोत्सहन्ते यथा वेत्तुमिन्द्रियैरिन्द्रियाण्यपि ।
तथैवेह परा बुद्धिः परं बोध्यं न पश्यति ॥ ३५ ॥

यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते ।
न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥३६॥

क्षीणकोशो ह्यमावास्यामलिङ्गत्वान्न दृश्यते ।
नच नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥३७॥

क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।
तद्वन्मूर्तिविमुक्तोऽसौ शरीरी नोपलभ्यते ॥ ३८ ॥

यथाकाशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः ।
तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः ॥ ३८ ॥
जन्मवृद्धिक्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।
सा तु चान्द्रमसी वृत्तिर्न तु तस्य शरीरिणः ॥ ४० ॥

नन्वात्मनो धीवृत्तिविषयत्वे जडत्वापत्तिरित्याशङ्क्याह नोत्सहन्त इति पग बुद्धिश्चरमा धीवृत्तिः परं शुद्धं बोध्यं न पश्यति घटवत् तथा च वृत्तिव्याप्तिरेव ब्रह्मण्यास्ति नतु फलव्याप्तिरित्यर्थः यथोक्तं ॥ फलव्याप्यत्व मेवेह शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्ष्यत इति ॥ ३५ ॥ वृत्तिरूपोपाधिलयेऽपि ब्रह्मास्ति नतु शून्यशेष इति सदृष्टान्त माह यथेति । अमावास्यां सूर्येण सह वासं प्राप्यालिङ्गत्वात् ज्ञापकोपाधिशून्य त्वात्तथाऽनष्टशरीरिणं विद्धि ॥ ३६ ॥ कोशः स्थूलशरीरं मूर्त्या वृत्या विमुक्तः ॥३७॥३८॥ एवं सुप्तिसमाध्योरात्मनः सत्त्वमुक्त्वा व्युत्थानलिङ्गेनापि तदाह यथेति। आकाशन्तरमवकाशभेदं लिङ्गान्तरमित्युक्तेः समाधौ पूर्वलिङ्ग-नाश उक्तः तथा दृष्टिसृष्टिन्यायेन लिगान्तरोत्पत्तिरित्यर्थः ॥ ३९ ॥ जन्मेति चान्द्रमसी चन्द्रमण्डलस्य वृत्तिर्धर्मः एवं शरीरस्यैव जन्मादिर्नात्मन इत्य-र्थः ॥ ४० ॥

उत्पत्तिवृद्धिवयसा यथा स इति गृह्यते ।
चन्द्र एव त्वमावास्यां तथा भवति मूर्त्तिमान् ॥ ४१ ॥
नोपसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः ।
विसृजंश्चोपसर्पंश्च तद्वत्पश्य शरीरिणम् ॥ ४२ ॥
यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते ।
तद्वच्छरीरसंयुक्तः शरीरीत्युपलभ्यते ॥ ४३ ॥
यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते ।
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ॥ ४४ ॥

तत्र परमतेन युक्तिमाहोत्पत्तीति । उत्पत्त्यादिकालभेदात्परिमाणादि-भेदेन शरीरभेदेऽपि स एवायं देवदत्त इति शरीरिण ऐक्यं प्रत्यभिज्ञायते

एवममावास्यामित्यदर्शनं लक्ष्यते तत् अदर्शनं गतोऽपि मूर्तिमान् लब्धदेहश्चन्द्रोऽप्येक एव बाल्याद्यवस्थान्तरप्राप्ताविव देहान्तरप्राप्तावपि एक एव देहीत्यर्थः ॥ ४१ ॥

देहदेहिनोः सम्बन्धः प्रतीयमानोऽपि कालत्रयेऽपि नास्तीत्याह नेति। चिद्रूपं देहिनम् अचिद्रूपो देहः प्रकाशमन्धकार इव स्प्रष्टुं त्यक्तुं वा न शक्नोतीत्यर्थः ॥ ४२ ॥ एवं सत्यपि देहं विना न देहिनः प्रकाशो नापि देहिनं विना देह प्रकाश इति सदृष्टान्तमाह द्वाभ्यां यथेति। तमोराहुरदृश्योऽपि दृश्येनार्कादिना युक्त एव प्रकाशते एवमात्मा देहेनेति। अयमहमस्मीति प्रकाशते देहाभावे तु सुषुप्तौ न स्पष्टं प्रकाशते इत्यर्थः। विनाशमेवापीतो भवतीत्यादिश्रुतेः ॥ ४३ ॥ यथेति दृष्टान्तदार्ष्टान्तिकयोर्व्यत्ययः यथार्कवियुक्तो राहुर्न प्रकाशते एवं चैतन्यमन्तरेण जडो देहो न प्रकाशत इत्यर्थः। दार्ष्टान्तिकेऽक्षरयोजना तु तद्वत् राहुवत् अप्रकाशमानशरीरं स्वीयत्वेन यस्यास्तीति तद्वच्छरीरश्चिदात्मा तेन निर्मुक्तः शरीरी नोपलभ्यते स्वर्गो ध्वस्त इत्यादौ स्वर्गमात्रध्वंस इव शरीरमात्रानुपलम्भो विवक्षितः अनयैव रीत्या पूर्वश्लोकेऽपि शरीरोपलम्भे आत्मनोऽन्वयः प्रदर्शनीयः यथाश्रुतरीत्या च उभयोरपि श्लोकयोरात्मोपलम्भे शरीरान्वयव्यतिरेकौ दर्शनीयौ ॥ ४४ ॥

**यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः ।**
**तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः ॥ ४५ ॥**
**यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम् ।**
**ज्ञानमिन्द्रियसंयुक्तं तद्वत्प्रेत्य भवाभवौ ॥ ४६ ॥**
**इन्द्रियाणि मनश्चैव विज्ञानात्पश्य भारत ।**
**सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञःपुनरष्टमः ॥ ४७ ॥**

नन्वेवं मरणे शरीराभावादात्मनोऽप्यभावः स्यादित्याशङ्क्याह तत्रापि शरीरान्तरसंबन्धोऽस्तीति सदृष्टान्तमाह यथेति। अमावास्यायां सूर्येण सह वासं गतश्चन्द्रोऽस्माभिर्नक्षत्रयुक्तत्वेन समयान्तरे इवादृश्यमानोऽपि तद्युक्तोऽस्त्येव एवमेकशरीरान्निर्मुक्त आत्मा कर्मणः फलभूतैः शरीरान्तरैर्युज्यत एवेति न शरीराभावादात्माभावोऽस्ति हेत्वभावादित्यर्थः

॥ ४५ ॥ देहसंबन्धस्यापरिहार्यत्वं श्रुत्वा मुमुक्षोरुद्वेगो माभूदिति तन्निवृत्ति साधनं साक्षितत्त्वविवेकं वक्तुं सदृष्टान्तं देहवियोगप्रकारमाह यथेति। यथा व्यक्तं स्थूलशरीरं शेते स्वप्ने चेतनं लिङ्गशरीरं प्रेत्य व्यक्ताद्वियुज्य चरति तद्वद्भवः संसारः तथेन्द्रियसंयुक्तं लिङ्गमपि शेते सुषुप्तौ केवलं ज्ञानं प्रेत्य लिङ्गाद्वियुज्य चरति तद्वदभवो मोक्ष इत्यर्थः ॥ ४६ ॥ विवेकमेव विशदयति इन्द्रियाणीति। मन इति कर्ता जीव उच्यते अस्य विज्ञानानि च वृत्तिरूपाणि एतदुभयात्मिका बुद्धिः सप्तमी क्षेत्रज्ञः साक्षी ॥ ४७ ॥

**चक्षुरालोकनायैव संशयं कुरुते मनः ।**
**बुद्धिरध्यवसानाय क्षेत्रज्ञः साक्षिवत्स्थितः ॥ ४८ ॥**
**उर्ध्वं पादतलाभ्यां यदर्वाक्चोर्ध्वं च पश्यति ।**
**एतेन सर्वमेवेदं विद्ध्यभिव्याप्तमन्तरम् ॥ ४९ ॥**
**दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ।**
**मनः सुनियतं यस्य स सुखी प्रेत्य चेह च ॥ ५० ॥**
**सत्त्वक्षेत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः ।**
**सृजते तु गुणानेक एको न सृजते गुणान् ॥ ५१ ॥**
**मशकोदुम्बरौ चापि संप्रयुक्तौ यथा सदा ।**
**अन्योऽन्यमेतौ स्यातां च संप्रयोगस्तथा तयोः ॥ ५२ ॥**

चक्षुरिति पञ्चानामुपलक्षणम् आलोकनाय विषयग्रहणाय अध्यवसानाय निश्चयाय ॥ क्षेत्रज्ञः साक्षिवदुदासीनबोधरूपत्वात् साक्षित्वस्यापि साक्ष्योपाधिकत्वान्नात्मधर्मत्वमितिवत्करणेन दर्शितम् ॥ ४८ ॥ ऊर्ध्वमिति । पादतलद्वयमारभ्योर्ध्वस्थितं शरीरमुपर्यधश्च यत्साक्षि चैतन्यं पश्यति । एतेनेदं बहिर्दृश्यमानम् अन्तरं व्योमोदरं कृत्स्नं व्याप्तम् ॥ ४९ ॥ इत्थं विवेकदृष्ट्या प्रसिद्धमपि साक्षितत्त्वं मनोनिरोधं विना न प्रकाशते तन्निरोधौ साक्षितत्त्वमनायासेन प्रकाशते इति मनःस्वरूपं तन्निरोधफलं चाह दूरगामिति ॥ दूरगं दुर्लभेऽपि वस्तुन्यासक्तं बहुधागामि अनेकेषु विषयेषु युगपन्निपातितुं शीलं यस्य प्रार्थना देहीति दैन्यभाषणं सुनियतं निरुद्धवृ-

त्तिकम् ॥ ५० ॥ तत्फलं सत्त्वसाक्षिणोर्विवेकमाह सत्त्वेति। सत्त्वं बुद्धिसत्त्वं क्षेत्रज्ञः साक्षी तयोरन्तरं भेदं तप्तायःपिण्डवदितरेतराविवेकात् प्रागगृहीत एकः सत्त्वं गुणान् अहंकारादीन् ॥ ५१ ॥ एतौ मशकोदुम्बरौ तयोः सत्त्वक्षेत्रज्ञयोः ॥ ५२ ॥

**पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा ।**
**यथा मत्स्यो जलं चैव संप्रयुक्तौ तथैव तौ ॥ ५३ ॥**
**न गुणा विदुरात्मानं स गुणान् वेत्ति सर्वशः ।**
**परिद्रष्टा गुणानां तु संसृष्टान् मन्यते तथा ॥ ५४ ॥**
**इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसत्तमैः ।**
**निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥ ५५ ॥**
**सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति ।**
**संप्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ ५६ ॥**

प्रकृत्या स्वभावेन ॥ ५३ ॥ ननु मशकोदुम्बरवज्जलमत्स्यवद्वा तयोः संयोगश्चेदुभयोरपि विभुत्वादपरिहार्यः संयोगः स्यादित्यत आह नेति। न विदुरिति गुणानां जडत्वमुक्तं वेत्तीति क्षेत्रज्ञस्य चिदात्मत्वमुक्तम् अतश्चिज्जडयोर्वास्तवः संबन्धो नोपपद्यते दृष्टान्ते तु जडयोरेव मीनादिशरीरयोर्जलादिना जडेनैव संबन्धः एतदेवाह परिद्रष्टेति। पुरुषो गुणानां देहाहंकारादीनां द्रष्टापि सन् तान् संसृष्टान् स्वतादात्म्यापन्नान् मन्यते नहि द्रष्टृदृश्ययोः पुङ्गुणयोरभेदः सम्भवति प्रतीयते चाभेदः अहं गौरोऽहं काणोऽहं बधिरोऽहं सुखी अहं कर्त्तेति। तस्मान्मरुमहाह्रदयोरिवानयोराध्यात्मिकं संबन्ध इत्यर्थः ॥ ५४ ॥

ननु चिदात्मा गुणसंगी चेद् घटापिहितप्रदीपवन्न किञ्चित्प्रकाशयेदिति तत्राहेन्द्रियैरिति। प्रदीपार्थम् अर्थप्रकाशनं घटाच्छिद्रैरिव घटपिहितो दीप इत्यर्थः इन्द्रियैः मनसा सह षड्भिः ॥५५॥ संप्रयोगः संबन्धः ध्रुवोऽनादिः ॥ ५६ ॥

**आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य च कश्चन ।**
**सत्त्वं मनः संसृजते न गुणान् वै कदाचन ॥ ५७ ॥**

**रश्मींस्तेषां समनसा यदा सम्यङ् नियच्छति ।**
**तदा प्रकाशते ह्यात्मा कटे दीपो ज्वलन्निव ॥५८॥**

स सत्त्वक्षेत्रज्ञयोः संप्रयोगोऽनिर्वचनीय इत्याहाश्रय इति । आत्मनः असङ्गत्वान्निर्गुणत्वाच्च जतुकाष्ठवद्रूपरूपिवद्वा न तयोराश्रिताश्रयभावोऽस्तीत्यर्थः । क्षेत्रज्ञस्य च कश्चन आश्रयो नास्ति स्वमहिमप्रतिष्ठत्वात् । गुणः सत्त्वस्य चेतनेति प्राचीनपाठे तु सत्त्वस्याश्रयः । प्रकृतिः शाखाया इव तरुः स नास्ति प्रकृतेस्तुच्छत्वात् । तुच्छेनापिहितं यदासीत् । अनृतेन हि प्रत्यूढा इत्यादिश्रुतिभ्यस्तस्याः तुच्छत्वावगतेः कथं तर्हि सत्त्वस्यात्मलाभ इत्यत आह चेतना सत्त्वस्य गुण इति । शुक्तीदन्ता यथा तत्राध्यस्तरजतस्य विशेषणं भवति तद्वच्चेतनास्वस्मिन्नध्यस्तस्य सत्त्वस्य विशेषणं भवति तमिमं सत्त्वे चेतनानुबन्धमालक्ष्य आत्मा जडश्चेतना तद्गुणः सा च त्रिक्षणावस्थायिनीति बुद्धबन्धवः प्रलपन्ति । उक्तेऽर्थे हेतुमाह सत्त्वमिति । संसृजतं निर्दिशति प्रकाशयतीत्यर्थः । वै प्रसिद्धं मनआदिकमेव सत्त्वस्य कार्यं प्रथते न तन्मूलभूता गुणा अतस्तेषां सकार्याणां मृषात्वमित्यर्थः नहि निपुणैरपि परीक्ष्यमाणं रज्जूरगोपादानमज्ञानं दृष्टिपथमवतरतीति । भावः ॥ ५७ ॥ अध्यासनिवृत्त्युपायमाह । रश्मीनिति । वृत्तिबहुत्वापेक्षया । बहुवचनं । तेषां तस्य सत्त्वस्य रश्मीनिव इन्द्रियाणि ॥ ५८ ॥

**त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ।**
**सर्वभूतात्मभूतस्मात्स गच्छेदुत्तमां गतिम् ॥ ५९ ॥**
**यथा वारिचरः पक्षी सलिलेन न लिप्यते ।**
**एवमेवकृतप्रज्ञो भूतेषु परिवर्तते ॥ ६० ॥**
**एवंस्वभावमेवैतत्स्वबुद्ध्या विरहेन्नरः ।**
**अशोचन्नप्रहृष्यंश्च समो विगतमत्सरः ॥ ६१ ॥**
**स्वभावयुक्त्या युक्तस्तु स नित्यं सृजते गुणान् ।**
**ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः ॥ ६२ ॥**

प्राकृतं स्वाभाविकं कर्म त्यक्त्वा संन्यस्येत्यर्थः । आत्मरतिः अनन्यनिष्ठः मुनिर्ध्यानशीलः सर्वेषां भूतानामात्मैव भवतीति सर्वभूतात्मभूः य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति । आत्मा ह्येषां स भवतीत्यादि-

श्रुतिभ्यः आत्मनः सार्वात्म्यावगतेः तस्मात्संन्यासादेः ॥ ५९ ॥ एवंविदः कर्मालेपं सदृष्टान्तमाह यथेति वारिचरः हंसः । तथा च श्रुतिः तं विदित्वा न कर्मणा लिप्यते पापकेनेति ॥ ६० ॥ एवंस्वभावम् अलेपस्वभावम् एतत् आत्मरूपं स्वबुद्ध्या निश्चित्येति शेषः ॥ ६१ ॥ एवंविदो जीवन्मुक्तिमाह स्वेति स्वभावे स्वरूपे युक्तिर्योगस्तया देहेन्द्रियादितादात्म्याध्यासकृत पररूपतां परित्यज्य स्वरूपावस्थित्या युक्तश्च सः विद्वान् नित्यं गुणान् भूतभौतिकान् योगैश्वर्यबलेन सृजते यस्यानुवित्तः प्रतिबुद्ध आत्मेत्युपक्रम्य स विश्वकृत् स हि विश्वस्य कर्तेति श्रुतेः ऊर्णनाभिदृष्टान्तोऽभिन्ननिमित्तोपादानत्वोपपादनाय दर्शितः ॥ ६२ ॥

**प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।**
**प्रत्यक्षेण परोक्षं तदनुमानेन सिद्ध्यति ॥ ६३ ॥**
**एकमेवाध्यवस्यन्ति निवृत्तिरिति चापरे ।**
**उभयं संप्रधार्यैतद्व्यवस्येत यथामति ॥ ६४ ॥**
**इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढम् ।**
**विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥ ६५ ॥**

एवंजीवन्मुक्तः प्रारब्धकर्मावष्टब्धदेहः प्राक्संस्कारवशात्प्रत्युपस्थितैर्गुणैर्दृष्टिसमसमयां सृष्टिं पश्यन् योगैश्वर्येणाणिमादिना वा निर्विकल्पावधानेन वा पश्यतीत्युक्तं प्रारब्धकर्मसमाप्तौ किं गुणाः घटवन्निवर्तन्ते उत रज्जूरगवद्बाध्यन्ते इति मीमांसते प्रध्वस्ता इति द्वाभ्याम् । तत्र कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति योगाः प्रधानं त्रिगुणात्मकं विदेहकैवल्यभाजं प्रति नष्टं ध्वस्तमपि अध्वस्तं यतोऽन्यसाधारणं निरन्वयनाशे इदानीन्तनानां संसारोपलम्भो न स्यान्न च कश्चिन्मुक्त एव नास्तीति वक्तुं शक्यम् इदानीन्तनानामपि मुक्तानामनाश्वासप्रसंगादित्याहुस्तत्तदनुवदति प्रध्वस्ता न निवर्तन्ते इति । प्रध्वस्ता अपि गुणा निवर्तन्ते इति तदेतद्दूषयति निवृत्तिः प्रत्यक्षेण नोपलभ्यते इति । अयं भावः । सतः पदार्थस्यादर्शनं स्यान्निव्याभावाद्वा दृष्टिलोपाद्वाऽवगतं तत्र नाद्यः प्रधानस्य विभुत्वात् । नान्त्यः पुरुषस्यालुप्तदृष्टित्वात् । तथा रज्जूरगवत्प्रधानस्य बुद्धाबुद्धदृष्टिभेदेन नष्टत्वानष्टत्वे बोध्ये । ननु घटवत्सत्यत्वपक्षे तन्नुज्यते प्रत्यक्षविरोधादिति भावः । परोक्षतदनुमानेन सिद्ध्यति अनुभवानारूढं तत्प्रधानस्य सत्य

स्यापि दृष्टिभेदेन नाशानाशवचनं किं तु केवलानुमानेन बन्धमोक्षव्यवस्थान्यथानुपपत्त्या प्रधानस्य प्रत्याक्षादिप्रमाणसिद्धप्रपञ्चकारणस्य नित्यानुमेयस्य सर्वप्रमाणविरोधापातान्निश्चयात्तदपि नाध्यवसातुं शक्यमतोऽगत्या कृतार्थं प्रति नष्टमनष्टं तदित्यभ्युपेयामिति । यद्वा प्रत्यक्षं श्रुतिः प्रामाण्यं प्रति निरपेक्षत्वात् । अनुमानं स्मृतिः प्रामाण्यं प्रति सापेक्षत्वात् । तथा च नेह नानास्ति किं च नेति प्रपञ्चस्य बाधः प्रत्यक्षसिद्धः नष्टमप्यनष्टमिति ध्वंसपक्षः स्मृतिसिद्धस्तेन विरोधे त्वनपेक्षं स्यादिति न्यायेन ध्वंसस्मृतिरप्रमाणमिति भावः ॥ ६३ ॥ एकमेके नानाजीववादिनो व्यवहारानुरोधात् अध्यवस्यन्ति निश्चिन्वन्ति । अपरे एकजीववादिनो निवृत्तिरेव स्वाज्ञानकृतः प्रपञ्चस्तन्नाशे कार्त्स्न्येन निवर्त्तते नहि चैत्रेण स्वप्ने दृष्टो गजश्चैत्रप्रबोधेन बाधितोऽपि मैत्रदृष्टया रज्जूरगवदस्तीति शक्यं वक्तुं किं तु निरन्वयनाश एव तस्येत्यपि केचिद्व्यवस्यन्ति । एवमेतदुभयं दर्शितं तन्मध्येऽन्यतरन्मतं संप्रधार्य सम्यक् [illegible] यथामति व्यवस्येत ध्यानेन साक्षात्कुर्यात् ॥ ६४ ॥ हृदयग्रन्थिमन्योन्याध्यासं तप्तायःपिण्डवद्बुद्धिक्षेत्रज्ञयोः एकलोलीभावः तथा हि क्षेत्रज्ञे बुद्धिधर्मा दुःखादयो बुद्धौ च क्षेत्रज्ञधर्माः सत्त्वचित्त्वादयो दृश्यन्ते बुद्धिकृतो भेदस्तन्मयं तत्प्रधानं तं विमुच्य सत्त्वपुरुषयोः पृथक्त्वज्ञानेन त्यक्त्वा तथा च श्रुतिः ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया इति ॥ ६५ ॥

**मलिनाः प्राप्नुयुः शुद्धिं यथा पूर्णां नदीं नराः ।**
**अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ॥ ६६ ॥**
**महानद्यां हि पारज्ञस्तप्यते न तदन्यथा ।**
**नतु तप्यति तत्त्वज्ञः फले ज्ञाते तरत्युत ॥ ६७ ॥**
**एवं ये विदुरध्यात्मं कैवल्यं ज्ञानमुत्तमम् ॥ ६८ ॥**
**एतां बुध्वा नरः सर्वां भूतानामागतिं गतिम् ।**
**अवेक्ष्य च शनैर्बुद्ध्या लभते शममन्ततः ॥ ६९ ॥**
**त्रिवर्गो यस्य विदितः प्रेत्य यश्च विमुञ्चति ।**
**अन्विष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ ७० ॥**

नदीमिवेदं ज्ञानमवगाह्य मलिनाः शुद्धिं प्राप्नुयुरिति विद्धि यथोक्तं नहि ज्ञानेन सदृशं पवित्रमिह विद्यते इति ॥ ६६ ॥ महति नहि पारदर्शनमात्रात्कृतकृत्यता किं तु नौकादिना पारप्राप्त्यैव फलम् आत्मनि तु ज्ञानमात्रादेव न पुनरनुष्ठानान्तरापेक्षेति भावः ॥ ६७ ॥ उपसंहरति एवमित्यर्द्धेन अध्यात्ममात्मनि हृदयाकाशे केवलं निर्विषयं कैवल्यमिति पाठे स्वार्थे ष्यञ् ते ज्ञानं लभन्त इति शेषः ॥ ६८ ॥ एतामिति स्त्रीत्वं विधेयलिङ्गापेक्षया इदमेव ज्ञानं सर्वप्रत्यग्भूतं भूतानां लयोदयस्थानमिति शास्त्रतो बुद्ध्या ध्यानेन सूक्ष्मया बुद्ध्या वाऽवेक्ष्य शं सुखमनन्ततः अनन्तं शममन्तत इति पाठः स्पष्टार्थः ॥६९॥ शमं को लभत इत्यत आह त्रिवर्ग इति विदितः क्षयिष्णुत्वेन ज्ञातः प्रेक्ष्य यत्कृतकं तदनित्यं कार्यत्वाद्घटवदित्यनुमानोपगृहीतया तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति श्रुत्या धर्मफलस्य प्रत्यक्षेणैवार्थकामसुखयोश्चानित्यत्वं निश्चित्य विमुञ्चति तं त्यजति संन्यस्यतीत्यर्थः अन्विष्य श्रवणमननाभ्यां निश्चित्य युक्तो ध्यानशीलः निरुत्सुकः आत्मदर्शनेनैव सर्वकामावाप्तेरन्यत्रास्थाशून्यः ॥ ७० ॥

**न चात्मा शक्यते द्रष्टुमिन्द्रियैश्च विभागशः ।**
**तत्र तत्र विसृष्टैश्च दुर्वार्यैश्चाकृतात्मभिः ॥ ७१ ॥**
**एतद्बुध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ।**
**विज्ञाय तद्धिमन्यन्ते कृतकृत्या मनीषिणः ॥ ७२ ॥**
**न भवति विदुषां ततो भयं यदविदुषां सुमहद्भयं भवेत् ।**
**नहि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम् ॥ ७३ ॥**

नचेति तत्र तत्र रूपादौ अकृत्स्नो हि स इति श्रुतेः इन्द्रियैर्वस्तुत आत्मैव गृह्यते परं तु पृथक्त्वेन दर्पणेनेव मुखमतः अभेदस्य भेदग्रहेण तिरोधानादकृतार्थता नाशहेतुता च तेषामिति तानि निरोद्धव्यान्येवेति भावः इतोऽपेक्षयाधिकं ज्ञातव्यं नास्तीत्याहैतदिति ॥७१॥७२॥ ज्ञानफलं दृष्टादृष्टभयनिवृत्तिकमाह न भवतीति द्वाभ्यां भयं संसारदुःखं यद्यस्माद्धेतो रज्जूरगादिवदद्वैतादविदुषां महद्भयं तत एव बाधितात् विदुषां भयं न भवति

हि यस्मात् अज्ञानसंसर्गादेव बन्धमोक्षौ अतः सर्वेषां गतिः मुक्तिः स्वरूपात्मिका तुल्यैव हि यतः गुणे आधेये अपनेये वा सति गुणानामाधानापकर्षतारतम्यात् अतुल्यतां प्रवदन्ति नतु निर्गुणे इत्यर्थः ॥ ७३ ॥

**यः करोत्यनभिसंधिपूर्वकं तच्च निर्णुदति यत्पुराकृतम्**
**नाप्रियं त दुभयं कुतः प्रियं तस्य तज्जनयतीह कुर्वतः॥७४॥**
**लोकमातुरमसूयते जनस्तस्य तज्जनयतीह सर्वतः ॥७५॥**
**लोक आतुरजनान्निराविशत्तत्तदेव बहु पश्य शोचतः**
**तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं पदं सताम् ॥७६**

य इति निष्कामं कर्म प्राचीनदोषापहमिति पूर्वार्द्धार्थः तदुभयं प्राचीनमैहिकं च कर्म तस्य विदुषः कुर्वतोऽपि नाप्रियं बन्धं जनयति । तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवंहास्य सर्वे पाप्मानः प्रदूयन्ते । तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यत इति तयोर्दाहाश्लेषश्रवणात् ॥ कुतः प्रियं ॥ मोक्षं प्रति तु कर्मणां कारणत्वं दूरनिरस्तमिति भावः ॥ नास्त्यकृतः कृतेनेति श्रुतेः अकृतः मोक्षः कृतेन कर्मणा ॥ ७४ ॥ अज्ञानफलं दृष्टादृष्टभयमित्याहार्द्धेन लोकमिति ॥ कामक्रोधादिव्यसनैर्जर्जरीकृतं लोकं जनः परीक्षकोऽसूयते धिक्करोति तस्य कर्माणि षष्ठी तमातुरं तं निन्द्यं कर्म सर्वतः सर्वासु योनिषु इह लोके जनयति जन्म ददाति आतुरो जीवन् निन्द्यते मृतश्च तिर्यक्षु जायत इत्यर्थः ॥ ७५ ॥ तस्माल्लोकतत्त्वमालोच्य यद्धितं तत्कर्तव्यमित्याह लोक इति ॥ लोके निराविशन् सम्यगभिनिवेशं कुर्वन् आतुरान्पश्य कीदृशान् तत्तदेव नष्टं नष्टं पुत्रदारादिकं शोचतः हा कष्टमितीष्टं शोचमानान् तथा तत्रैव पुत्रादिनाशे विषये कुशलान् सारासारविवेकनिपुणानशोचतः शोकहीनान्पश्य उभयं क्रममुक्तिं सद्योमुक्तिं च सतामुपासकानां ज्ञानिनां च पदं पदनीयम् ॥ ७६ ॥

**निवर्तयित्वा रसनां रसेभ्यो**
**घ्राणं च गन्धाच्छ्रवणौ च शब्दात् ।**
**स्पर्शात्त्वचं रूपगुणात्तु चक्षुः**
**ततः परं पश्यति स्वं स्वभावम् ॥ ७७ ॥**

**यतो गृहीत्वा हि करोति यच्च**

**यस्मिंश्च तामारभते प्रवृत्तिम् ।**

**यस्मिंश्च यद्धे न च यश्चकर्त्ता**

**यत्कारणं ते समुदार्यमाहुः ॥ ७८ ॥**

स्वीयं । हितमपि सर्वेन्द्रियजयपूर्वकमात्मतत्त्वं साक्षात्कृत्यैव भवति नान्यथेति वदन्नात्मतत्त्वदर्शने उपायमाह निवर्त्तयित्वेति गुरूक्तं युक्त्येति शेषः नहि पुरुषकारेण शब्दात् श्रोत्रं निवर्तयितुं शक्यम् ।

यथोक्तं वार्तिके शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदिति श्रुतेर्व्याख्याने ।

स्वातन्त्र्यं येषु कर्तुः स्यात्करणाकरणं प्रति ।
तान्येव तु निषिद्धानि कर्माणीह शमादिभिः ॥ १ ॥
अस्वातन्त्र्यं तु येषु स्यात्कर्तुः कर्मसु सर्वदा ।
समाहितोक्त्याऽथेदानीं तन्निरोधो विधीयते ॥ २ ॥
पिण्डीकृत्येन्द्रियग्रामं बुद्धावारोप्य निश्चलम् ।
विषयांस्तत्स्मृतींस्त्यक्त्वा तिष्ठेच्चिदनुरोधतः ॥ ३ ॥
एषोऽभ्युपायः सर्वत्र वेदान्तेषु प्रतिष्ठितः ।
तत्त्वमस्यादिवाक्योत्थज्ञानोत्पत्त्यर्थमादरादिति ॥ ४ ॥

ततो निवर्तकात् प्रमातुः परं तदुपाधिभूतबुद्ध्यादेः परं स्वं प्रत्यगभिन्नं स्वभावं स्वरूपसत्तां पश्यति ॥ ७७ ॥ कोऽसौ स्वभाव इत्यत आह यत इति ते मुनयः समुदायं कर्त्रादिसंघातं यत्कारणं यद्धेतुकमाहुस्तं स्वरूपसत्ताभावं पश्यतीति पूर्वेणान्वयः समुदायमाहुः यः कर्त्ता प्रमाता येन ज्ञानकर्मकरणेन यत्प्राप्यमुद्दिश्य यस्मिन् देशे काले च यस्मिन्सुखे दुःखे वा निमित्तभूते तां तदनुकूलां प्रवृत्तिं यत्नमारभते यच्चारभ्यं तत्कर्मदर्शनगमनादिकं करोति किं कृत्वा करोति यतः रागद्वेषादितः अदृष्टात् ईश्वरेच्छातो वा गृहीत्वा अवलम्ब्येति योजना ततश्च कर्ता कर्म करणं देशकालौ सुखदुःखे प्रवृत्त्यारम्भाख्यो यत्नो गत्यादिकं रागद्वेषेश्वरादिकं च समुदायस्तस्य यत् हेतुः चिन्मात्रं तदेव स्वभाव इत्यर्थः ॥ ७८ ॥

**यद्व्याप्यभूद्व्यापकसाधकं च**

**यन्मन्त्रवत्स्थास्यति चापि लोके ।**

यःसर्वहेतुः परमात्मकारी
तत्कारणं कार्यमतो यदन्यत् ॥ ७९ ॥
यथा हि कश्चित्सुकृतैर्मनुष्यः
शुभाशुभं प्राप्नुतेऽप्यविरोधात् ।
एवं शरीरेषु शुभाशुभेषु
स्वकर्मजैर्ज्ञानमिदं निबद्धम् ॥ ८० ॥

ननु किं तत्कारणं यदपेक्ष्य नित्ययोरपि जीवेशयोः कार्यत्वमुच्यत इत्याशङ्क्याह यद्वेति । वाशब्द एवार्थे यदेव व्यापकम् ईश्वराख्यं साधकं व्याप्यं जीवाख्यं चाभूत् उभयोर्विभुत्वे नित्यत्त्वे च तुल्यत्वेन नियम्यानियामकभावो न स्यात् तथा च "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे" त्यादयः श्रुतयो नोपरुध्येरन् एकस्योभयात्मत्वे मानमाह मन्त्रवदिति । एक एव तु भूतात्मा भूतेभूते व्यवस्थितः 'एकधा बहुधा चैव दृश्यते जलचन्द्रवद्" इति मन्त्र एवात्र प्रमाणमित्यर्थः भूतात्मा नित्यात्मा एकधेति व्यापकत्वेन बहुधेति साधकत्वेन स्थास्यतीति स्थाणुत्वं कूटस्थं वापरपर्यायमुच्यते यः आत्मकारी आत्मनैव एकाद्वितीयेन करोति सर्वमित्यात्मकारी तदात्मानं स्वयमकुरुते" त्यादिश्रुतेः तत्परं कारणम् "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इत्यादिश्रुतेः आनन्दमयाख्य ईश्वरस्त्ववान्तरकारणं शुद्धापेक्षया कार्यमित्यर्थः तदिदमुक्तं कार्यतो यदन्यदिति ॥ ७९ ॥ एवंस्वभावस्यं परमकारणत्वमुक्त्वा ज्ञानात्मतामप्याह त्रिभिः यथा हीति सुकृतैः सम्यगनुष्ठितैः पुण्यपापैः शुभाशुभेषु शरीरेषु जडेषु इदमजडं स्वभावाख्यं परमकारणं ज्ञानं नित्यज्ञप्तिमात्रं निबद्धं शुभाशुभवज्जडे अपि सह भवतोऽविरोधादित्यर्थः ॥ ८० ॥

यथा प्रदीपः पुरतः प्रदीप्तः
प्रकाशमन्यस्य करोति दीप्यन् ।
तथेह पञ्चेन्द्रियदीपवृक्षा
ज्ञानप्रदीप्ताः परवन्त एव ॥ ८१ ॥
यथा च राज्ञो बहवो ह्यमात्याः

पृथक्प्रमाणं प्रवदन्ति युक्ताः ।
तद्वच्छरीरेषु भवन्ति पञ्च
ज्ञानैकदेशाः परमः स तेभ्यः ॥ ८२ ॥
यथार्चिषोऽग्नेः पवनस्य वेगो
मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च संचरन्त्य
स्तद्वच्छरीराणि शरीरिणां तु ॥ ८३ ॥
यथा च कश्चित्परशुं गृहीत्वा
धूमं न पश्येज्ज्वलनं च काष्ठे ।
तद्वच्छरीरोदरपाणिपादं
छित्वा न पश्यन्ति ततो यदन्यत् ॥ ८४ ॥
तान्येव काष्ठानि यथा विमथ्य
धूमं च पश्येज्ज्वलनं च योगात्
तद्वत्सबुद्धिः समसिन्द्रियात्मा ।
बुधः परं पश्यति तं स्वभावम् । ८५ ॥

यथेति यथा वृक्षाग्रस्थो दीपः भूयांसं विषमवभासयति न तथा वृक्षमूलस्थ एवं पञ्चेन्द्रियरूपाः चैतन्यप्रदीपयुक्ता वृक्षा इवाप्रकाशाः ज्ञान दीपेन प्रदीप्ताः परवन्तः चित्प्रकाशाधीनतया प्रकाशकृते न स्वत इत्यर्थः तथा च श्रुतयः येन वागभ्युद्यते येन चक्षूंषि पश्यन्ति येनाहुर्मनोमतामित्याद्याः ॥ ८१ ॥ तेभ्य इन्द्रियेभ्यः सः ज्ञानरूपः स्वभावः परमः ॥ ८२ ॥ अस्य ज्ञानस्य नित्यत्वं साधयति यथार्चिष इति । शरीरेषु मनोद्वारा ज्ञानं निबद्धमपि शरीराण्येव नश्यन्ति न ज्ञानमित्यर्थः ॥ ८३ ॥ उपांश्वुपध्येययो र्धीज्ञानयोरदृश्यत्वं सदृष्टान्तमाह द्वाभ्यां यथा चेति । गृहीत्वा व्यापारयित्वा ॥ ८४ ॥ योगात् उपायात् पश्यामीत्यनुभवान्निन्द्रियात्मा जीवः स बुद्धिः परं बुद्धिं च समम् एककाले पश्यतीत्यर्थः ॥ ८५ ॥

यथाऽऽत्मनोऽङ्गं पतितं पृथिव्यां
स्वप्नान्तरे पश्यति चात्मनोऽन्यत् ।
श्रोत्रादियुक्तः सुमहान्सुबुद्धि
र्लिङ्गात्तथा गच्छति लिङ्गमन्यत् ॥ ८६ ॥

उत्पत्तिवृद्धिव्ययसन्निपातै
र्नयुज्यतेऽसौ परमः शरीरी ।
अनेन लिङ्गेन तु लिङ्गमन्य
द्गच्छत्यदृष्टः फलसंनियोगात् ॥ ८७ ॥

न चक्षुषा पश्यति रूपमात्मनो
न चापि संस्पर्शमुपैति किञ्चित् ।
न चापि तैः साधयतेऽनु कार्यं
ते तं न पश्यन्ति स पश्यते तान् ॥ ८८ ॥

यथा समीपे ज्वलनोऽनलस्य
संतापजं रूपमुपैति कश्चित् ।
न चापरं रूपगुणं बिभर्ति
तथैव तद्दृश्यति रूपमस्य ॥ ८९ ॥

देहनाशोत्पत्त्यादिना बुद्ध्युपाधिश्चिदात्मा न बाध्यते इत्याह द्वाभ्यां यथेति ॥ अङ्गं शरीरम् अन्यदात्मनः पृथक् स्वप्नान्तरे स्वप्नमध्ये यथा पश्यति सुमहान्सुबुद्धिः मनोबुद्धियुक्तः श्रोत्रादिभिःदशभिरिन्द्रियैः पञ्चभिः प्राणैश्च सहितः सप्तदशात्मा मरणे आत्मनः शरीरं पृथक् स्वस्मात्पश्यन्नपि तत्रात्मनो भिन्नत्वमजानन् शरीरान्तरयुक्तो भवति लिङ्गात्स्थूलदेहात् लिङ्गान्तरं देहान्तरम् ॥ ८६ ॥ सन्निपातो मरणं फलसान्नियोगात् सुखदुःखप्रद-कर्मसम्बन्धात् अनेन लिङ्गेन शवीभूतेन अदृष्टः अलक्षितः ॥ ८७ ॥ एवमात्मनो बुद्धितादात्म्यभ्रान्तिकृतसंसारमुक्त्वा वस्तुतोऽसङ्गत्वमाह न चक्षुषेति । इन्द्रियाग्राह्यत्वमुक्त्वा न स्पर्शमुपैतीत्यभोक्तृत्वद्वाराऽसङ्गत्वमुक्तं न

चापीत्यकर्तृत्वद्वारा ते चक्षुराद्याः स पश्यते तानिति साक्षित्वमुक्तं साक्षिणोऽपि बुद्धिवृत्तिग्राह्यत्वात्कर्मव्यतिहारे तङ् । फलद्वारा तु न पश्यतीत्युक्तम् ॥ ८८ ॥ असङ्गस्यापि तप्तायःपिण्डवद्धीतादात्म्यभ्रान्त्या संसारप्रतीतिरित्याह यथेति । रूपं पैङ्गल्यादिकं कश्चित् अयःपिण्डादिः तथापि सः वस्तुवृत्त्या दग्धृत्वपिङ्गलत्वाख्यम् अपरं गुणं रूपं वा यथा न बिभर्ति तथैव तत् अस्यात्मनः रूपं चैतन्यं देहे दृश्यते न तु देहो वस्तुतश्चेतनः तथापि लोहगतं चतुष्कोणत्वादिकं वह्नाविवात्मनि देहगतं दुःखादि प्रतीयते इत्यर्थः।८९

तथा मनुष्यः परिमुच्य काय-
मदृश्यमन्यद्विशते शरीरम् ।
विसृज्य भूतेषु महत्सु देहं
तदाश्रयं चैव बिभर्ति रूपम् ॥ ९० ॥
चलं तथा दृष्टिपथं परैति
सूक्ष्मं महद्रूपमिवाभिभाति ।
स्वरूपमालोचयते च रूपं
परं तथा बुद्धिपथं परैति ॥ ९१ ॥

उक्तदृष्टान्तेनैव यच्छरीरमात्मा प्राप्नोति तस्य तस्य धर्मानात्मन्यभिमन्यत इत्याह तथेति ॥ अदृश्यं तटस्थैः तदाश्रयं देहान्तराश्रयम् ॥ ९० ॥ नन्वेवमपरिहार्यत्वाद्वासनासन्ततेः अलं मोक्षाशयेत्याशङ्क्यानादिकालागतमपि भ्रमं तत्त्वधीः समूलमुन्मूलयितुं क्षमते इति प्रतिपादयितुं सदृष्टान्तं संसारस्य भ्रमपूर्वकत्वमाह चलमिति । यथा दृष्टिपथं दृष्टिज्ञानमनतिक्रान्तं सम्यक्प्रमितं वस्तु तस्य पन्था इव पन्थाः हानोपादानादिमार्गो यस्य तत् यथा दृष्टिपथं भ्रान्तिज्ञानं तच्च चलं बाधविषयतया अस्थिरं जनः परैति पराकृत्य एति अवगच्छति वस्तुतत्त्वं यथा नौस्थः नौचाञ्चल्यं तीरतरौ आरोपयति नौस्थैर्येण तद्बाधितं भवति । एवं परमात्मानं कूटस्थमपि ध्युपादानादकूटस्थमिव भासमानं बुद्धिमार्गं भ्रान्तिजनकत्वरूपं धीनिरोधेन पराकृत्य परं तत्त्वमभ्येति एवं यथा सूक्ष्मं पुस्तकाक्षरं महद्रूपमिव लोचनोत्तेजनबलेनाभितो भाति तथा सूक्ष्ममपि चिदात्मतत्त्वं बुद्धियोगात्स्थूलप्रपञ्चात्मना भाति एवं यथा रूपं स्वमुखप्रतिबिम्बस्वरूपं त्वस्य मुखस्य

तत्त्वं स्वदृष्ट्ययोग्यमपि दर्पणः आलोचयते दर्शयति एवमेकमेव प्रत्यग्वस्तु स्वाज्ञानकल्पितधीदर्पणः पराग्भूतवियदाद्याकारेणावभासयति तत्र यथोपनेत्रदर्पणयोरपायेऽक्षरस्थौल्यं मुखस्य दृश्यत्वं चापैति एवं धीनिग्रहेऽपि चितः स्थूलत्वं चापैति तदेवं कूटस्थस्यात्मनोऽविकारत्वे सूक्ष्मस्य स्थूलत्वे दृग्रूपस्य दृश्यत्वे च क्रमेण दृष्टान्तत्रयम् एवं चानादिरपि भ्रान्तिस्तत्त्वज्ञानेन पाश्चात्येनापि बाधितुं शक्या न च भ्रान्तेरुन्मज्जनं भवति बुद्धेस्तत्पक्षपातित्वात् तस्माद्भ्रान्तिज्ञानापनयनाय आत्मज्ञाने यतितव्यमिति भावः ॥ ९१ ॥

**यदिन्द्रियैस्तूपहितं पुरस्ता**
**त्प्राप्तान्गुणान्संस्मरते चिराय ।**
**तेष्विन्द्रियेषूपहितेषु पश्चा**
**त्सबुद्धिरूपः परमस्वभावः ॥ ९२ ॥**

ननु यदुक्तं निर्विकारस्य विकारित्वं सूक्ष्मस्य स्थूलत्वम् अदृश्यस्य दृश्यत्वं च बुद्धियोगादिति । तत्र बुद्ध्यतिरिक्तस्यात्मनोऽनुपलम्भादित्याशङ्क्याह यदिति । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति श्रुतेः समनस्केन्द्रियैरुपहितं तज्जीवचैतन्यं तच्चिराय बहुकालं पुरस्तात्पूर्वं प्राप्तान् गुणान्विषयान् कालान्तरे संस्मरते बाल्येऽहमिदमन्वभूवमिति । तदा मनोरथकाले विषयेन्द्रियसंनिकर्षाद्यभावात् ज्ञेयज्ञानज्ञातृवासनावासिता बुद्धिरेव सर्वात्मतां प्राप्ता तदन्येन चैतन्येनावभास्यते इति अस्ति बुद्ध्यधिरिक्तश्चेतन इत्यर्थः । ननु तथेन्द्रियाण्येव विषयवासनावासितानि बुद्ध्या न प्रकाश्यन्त इत्याशङ्क्याह तेष्विति । इन्द्रियेष्वप्युपहतेषु विलीनेषु शब्दाद्यग्रहात् पश्चात्स्वप्नकाले बुद्धेः रूपं त्रिपुटीज्ञेयज्ञानज्ञात्रात्मिका तद्‌द्रूपमस्य स बुद्धिरूपः स समानः सन्नुभा लोकावनुसंचरति ध्यायतीव लेलायतीवेति श्रुतेः । समानो बुद्धितादात्म्यं प्राप्तः परमः सर्वोत्कृष्टः स्वभावश्चिद्रूप आत्मा बुद्धेरन्योऽस्त्येव । अयं भावः यथा जाग्रत्काले घटचक्षुषोर्भास्यभासकयोर्व्यतिरिक्तः कूटस्थो निर्विकार आदित्यः सत्तामात्रेण चक्षुषोऽनुग्रहं घटस्य च प्रकाशं करोति । एवं स्वप्नेऽपि मातृमेयात्मना स्थितां बुद्धिं तदन्यः उदासीनः प्रकाशोऽवभासयेदिति । तस्मादस्ति बुद्धेरन्यस्तत्तादात्म्यभ्रान्त्या विकारित्वाद्याक्रान्त आत्मेति सिद्धम् ॥ ९२ ॥

**यथेन्द्रियार्थान्युगपत्समन्ता**
**न्नोपेक्षते कृत्स्नमतुल्यकालम् ।**
**तथा चलं संचरते स विद्वां**
**स्तस्मात्स एकः परमः शरीरी ॥ ८३ ॥**

ननु मनोरथे इव स्वप्नेऽपि वासनामयानीन्द्रियाणि सन्त्येवातस्तत्राप्यविशिष्टं बुद्धेरेव भासकत्वं तथा च श्रुतिः स्वप्नावस्थां प्रकृत्याह । "अथो खल्वाहुर्जागरितदेश एवास्येति" तच्च स्वप्नस्य जागरे रूपत्वमिन्द्रियाणामसत्त्वेऽनुपपन्नम् । इन्द्रियैरर्थोपलब्धिर्जागरितामिति प्रसिद्धेः अतो न मनोरथे इव स्वप्नेऽपि बुद्ध्यतिरिक्तचेतनासिद्धिरित्याह यथेति । सः परमः युगपत् एककालम् अतुल्यकालमनेककालं च अतीतानागतं पदार्थजातं कृत्स्नमिह परत्र वा जन्मनि दृष्टमविशेषात्समन्तात् सम्यगन्तः सन्निधिर्येषां तान्सन्निहितान् इन्द्रियार्थान् शब्दादीन्नोपेक्षते किंतु प्रकाशयत्येव यथेति हेतौ तथा चलं परस्परव्यभिचारि अवस्था त्रयं संचरते यतो विद्वान्साक्षी तस्मात्सः व्यावृत्तेभ्योऽनुवृत्तं भिन्नं कुसुमेभ्यः सूत्रमिवेति न्यायादेक इत्यर्थः । अयमर्थः स्वप्नावस्थायां हि अतीतमनागतं च वस्तुजातं युगपत्सन्निहितमिव दृश्यते तथेन्द्रियाणां सत्त्वेऽतीतादिज्ञानं न स्यात् ॥ न ह्यतीतादिना तेषां सन्निकर्षोऽस्ति असन्निकृष्टज्ञाने तु तदानीमिन्द्रियसद्भावकल्पना व्यर्था नहि रज्जूरगादिष्विवाधिष्ठानज्ञानार्थं तथेन्द्रियापेक्षास्ति आत्मनो बुद्धेर्वाधिष्ठानत्वेनाभिमतस्येन्द्रियायोग्यत्वात् । तस्मात्स्वप्ने धीरेवैका मातृमानमेयात्मना सती तदन्येन साक्षिणा भास्यते तस्याश्चावस्थात्रयं चलमिति अविशेषात् ॥ जागरेऽपि सैव मात्राद्याकारेति परिशिष्ट एव साक्षी शरीरदर्शीति ज्ञेयमिति ॥ अथो खल्विति श्रुतिस्तु पूर्वपक्षविषयैवेति श्रुत्यर्थविदां प्रसिद्धम् ॥ अन्यथात्रायं पुरुषः स्वयं ज्योतिरिति स्वप्ने आत्मनः स्वयं ज्योतिष्ट्वज्ञापनार्थं प्रवृत्तस्य ज्योतिर्ब्राह्मणस्य निर्विषयत्वं स्यादिति दिक् ॥ ९३॥

**रजस्तमः सत्त्वमथो तृतीयं**
**गच्छत्यसौ स्थानगुणान्विरूपान् ।**
**तथेन्द्रियाण्याविशते शरीरी**
**हुताशनं वायुरिवेन्धनस्थम् ॥ ८४ ॥**

**न चक्षुषा पश्यति रूपमात्मनो**
**न पश्यति स्पर्शनमिन्द्रियाणाम् ।**
**न श्रोत्रलिङ्गश्रवणेन दर्शनं**
**तथाकृतं पश्यति तद्विनश्यति ॥ ८५ ॥**

चलं सञ्चरते इत्येतद्व्याचष्टे रज इति । प्रत्येकं त्रिगुणात्मकानि जाग्रदादीनि बुद्धेः स्थानानि तेषां गुणान् तद्गतसुखदुःखादीन्विरूपान् परस्परविलक्षणान् गच्छति जानात्येव न भुङ्क्ते अवस्थान्तरगतस्य दुःखादेरन्यत्रादर्शनात् । तथा च श्रुतिः । स यत्तत्र पश्यत्यतिपुण्यं च पापं चानन्वागतस्तेन भवत्यसंगो ह्ययं पुरुष इति अतो बुद्धेरेव दुःखादिभोक्तृत्वं तत एव कर्तृत्वं न त्वात्मा भोक्ता कर्ता वा किंतूदासीनबोधमात्र एवेत्यर्थः ॥ इममेव न्यायमिन्द्रियसंचारेऽप्यातिदिशति अवस्थापथेनापि बुद्धिरेव सुखादिभोक्त्रीत्यर्थः। अत्र दृष्टान्तः हुतेति। यथा काष्ठस्थोऽग्निरेव काष्ठं दहति न वायुः स त्वग्निं दीपयत्येव एवमिन्द्रियस्था धीरेवेन्द्रियसुखादिकं भुङ्क्ते चित्तिस्तु बुद्धिं चेतयत एव न तु तदीयं सुखादिकं भुङ्क्ते इत्यर्थः ॥ ९४ ॥ एवं बुद्धेः पृथक्प्रसाधितमात्मतत्त्वं चक्षुराद्यगोचर इत्याह न चक्षुषेति ॥ रूपं चक्षुषा न पश्यति स्पर्शनं त्वागिन्द्रियं न पश्यति न स्पृशति रूपस्पर्शराहित्यात् तत्र हेतुः यत इन्द्रियप्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसोर्यन्नो मनो विदुरिति श्रुतेरिन्द्रियं प्रकाशकं नेन्द्रियं प्रकाश्यत्वं यातीत्यर्थः॥न हि दारुदाहकोऽग्निर्दारूदाह्यो भवति इन्द्रियाणामिति पाठे निर्धारणे षष्ठी इन्द्रियाणां मध्ये स्पर्शनं यत्तदपि न पश्यतीति योज्यं श्रोत्रेण लिङ्ग्यते गम्यते इति श्रोत्रगम्यमपि न अशब्दत्वात् । एतच्च प्रमाणान्तराणामप्युपलक्षणं कथं तर्हि तस्य तं त्वौपनिषदं पुरुषं पृच्छामीत्युपनिषद्गम्यत्वं दृश्यते त्वग्र्यया बुद्ध्येति धीगम्यत्वं च श्रूयत इत्याशङ्क्याह श्रवणेन दर्शनं तथा कृतमिति तथा कथं येन पश्यति तद्विनश्यतीति तच्छब्दयोगाद्येनेत्यध्याहार्यम् अयमर्थः' 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य"इति आत्मदर्शनार्थत्वेन श्रवणादिकं विधीयते तत्र विदिततत्त्वंपदार्थस्य तत्त्वमसीति वाक्यादात्मनो ब्रह्मभावावगतौ वेदाद्वेदान्तानामपि बाधः श्रूयते अन्यस्य तु वाक्यार्थध्यानेन तदवगतौ मनसोऽपि लयः श्रूयते "तावन्मनो निरोद्धव्यं हृदि यावत् क्षयं गतमि"ति तदिदमुक्तं येन करणेन

शब्देन मनसा वा पश्यति आत्मानं तद्विनश्यतीति एवं श्रवणेन वेदान्तवाक्यविचारेण आत्मनो दर्शनं यथा तादृशं प्रत्यस्तमितसमस्तक्रियाकारकादिद्वैतं कृतं विहितं तथा च श्रुतिः "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि"त्यादिः ९५ ॥

गुणैर्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।
मनःषष्ठानि भूतानि बुद्ध्यभावे कुतो गुणाः ॥९६॥

इति तन्मयमेवैतत्सर्वं स्थावरजङ्गमम् ।
प्रलीयते चोद्भवति तस्मान्निर्दिश्यते तथा ॥९७॥

येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ।
जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया ॥९८॥

अतः सर्वोऽपि संसारो बुद्धेरेव तदाभावे नास्ति केवलात्मन इत्याह गुणैरिति तमआदिभिर्गुणैर्बुद्धिः नेनीयते पुनःपुनरतिशये न विषयात्मतां नीयते अतो बुद्धिरेव मनः षष्ठानीन्द्रियाणि भूतानि च द्विविधानि सैव तदभावे गुणाः कुतः स्वरूपेण तेषां बाधान्न क्वापि सन्तीत्यर्थः एतेन सांख्याभिमतं तेषामबाध्यत्वं नित्यानुमेयत्वं च निरस्तम्। अयमर्थः रज्जुज्ञाने सति तत्कार्यं सर्पस्तज्जं भयादिकं च दृश्यते परीक्षादशायां सर्पाभावे सति रज्जौ न तन्मूलमज्ञानमुपलभ्यते नापि तज्जं भयादिकम् एवं बुद्ध्यभावे बुद्धेः कार्यं कारणं च नश्यतीति गुणशब्देन सत्त्वादयो मन इन्द्रियविषयादयश्च गृह्यन्ते ॥ ९६ ॥ इतीति यत् एवं तस्मात्तन्मयं बुद्धिमयं प्रलीयते बुद्धौ प्रलीनायाम् उद्भवे तस्मात्तथा बुद्धिमयत्वेन निर्दिश्यते वेदे मनसा ह्येव पश्यति मनसा शृणोतीति प्राणेभ्यो देवा देवेभ्यो लोका इति च बुद्धिमयत्वेन निर्दिश्यते तयोरभेदात् बुद्धिरेव श्रवणादिसाधनश्रोत्रादिरूपेण प्राणेभ्यश्चक्षुरादिभ्य इन्द्रियेभ्यः देवास्तदनुग्राहका आदित्यादयः लोकाः भूतभौतिका इति श्रुत्यर्थः ॥९७॥ एतदेवाह द्वाभ्यां येनेति । सा बुद्धिर्येन द्वारेण पश्यति तच्चक्षुरित्यर्थः जिह्वया त्वचेतीत्थंभावे तृतीया जिह्वारूपया बुद्ध्या बुद्धिः कर्त्री रसं जानाति ॥९८॥

त्वचा स्पर्शयते स्पर्शं बुद्धिर्विक्रियते सकृत् ।
येन प्रार्थयते किञ्चित्तदा भवति तन्मनः ॥९९॥

**अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा ।**
**इन्द्रियाणीति यान्याहुस्तान्यदृश्योऽधितिष्ठति॥१००॥**
**पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्तते ।**
**कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ॥१०१॥**
**न सुखेन न दुःखेन कदाचिदपि वर्तते ।**
**एवं नराणां मनसि त्रिषु भावेष्ववस्थिता ॥ २ ॥**

तत्र हेतुः विक्रियते बुद्धिरेव चिदाभासविशिष्टा जीवापरसंज्ञा कर्तृत्वं करणत्वं चापद्यते तथा च श्रुतिः । स प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्च चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्य कर्मनामान्येवेति सकृदिति यौगपद्यमुच्यते कर्त्रादिभावस्य ततश्चाकाशाद्वायुर्वायोरग्निरिति क्रमो न विवक्षितः किं तु ज्ञातृज्ञानज्ञेयानां सहैवोत्पत्तिरित्यर्थः ॥ ९९ ॥ अधितिष्ठति रूपादीनि बुद्धिः प्रकाशयत्येतैरित्यधिष्ठानानि करणानि बुद्धेः कर्त्र्याः अदृश्यश्चिदात्माधितिष्ठति स्वरूपसत्तामात्रेण इन्द्रियाणि व्यापारयति अयस्कान्त इव लोहम् ॥ १०० ॥ एतदेवाह पुरुष इति । त्रिषु भावेषु सत्त्वरजस्तमोमयेषु सुखदुःखमोहात्मकेषु तानेव क्रमेणाह कदाचिदिति ॥ १०१ ॥ एवं त्रिषु भावेष्ववस्थिता बुद्धिर्मनसि वर्तते मनोद्वारा इन्द्रियविषयेष्वपीति द्रष्टव्यम् ॥ २ ॥

**सेयं भावात्मिका भावांस्त्रीनेताननतिवर्तते ।**
**सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥ ३ ॥**
**अतिभावगता बुद्धिर्भावे मनसि वर्तते ।**
**प्रवर्तमानं तु रजस्तद्भावमनुवर्तते ॥ ४ ॥**

सेयमिति सर्वात्मिकापि बुद्धिर्भावान्सुखदुःखमोहान् तदात्मिकापि सती अतिक्रम्य वर्तते तत्र योग्यो दृष्टान्तः सरितां भर्ता पूरयिता ऊर्मिमान्सागरः महावेलामिति अयमेवार्थः यथा समुद्रप्रभवानां नदीनां समुद्रं प्राप्तानां वीच्यः समुद्रोर्मिभिस्तिरोधीयन्ते एवं बुद्धिप्रभवानां देहेन्द्रियविषयाणां योगेन बुद्धौ लीयमानानां संस्काराः बुद्धेर्ब्रह्माकारतया तिरोधीयते इति बुद्धेर्गुणातीतत्वमुच्यते । यथा घटप्रकाशे चक्षुरालोकसहकारेणं समर्थं दीपप्रकाशे तु तन्निरपेक्षं विषयस्यैव प्रकाशात्मत्वात् एवं धीवृत्तिंश्चिदाभा-

ससहकारेणैव घटादीन् प्रकाशयति। यथोक्तं बुद्धितत्स्थचिदाभासावुभौ व्याप्नुवतो घटं तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेदिति। आत्मनि तु धीवृत्तिरेवापेक्षिता विषयस्य प्रकाशात्मत्वात् प्रकाशमाने त्वानन्दधीवृत्तिः कतकरजोवत्सजातीयं वृत्यन्तरं विनाशयन्ती स्वयमपि विलीयते तदा च संस्कारात्मना सती सा सत्त्वादिकार्याणि सुखदुःखमोहाख्यानि अतिक्रम्य गता भवति सुप्तौ तु मोहस्याविनाशात्सुप्तिसमाध्योर्भेद इति ॥ ३ ॥ न त्वात्माकारवृत्तिमत्या बुद्धेर्गुणातीतत्वोपगमे ज्ञानसमकालमेव देहपातः स्यात् नष्टायास्तस्याः मूलकारणस्याज्ञानस्य नाशेन पुनरुत्पादायोगादित्याशङ्क्या हातिभावेति। सुखादिभावातिक्रान्तापि बुद्धिर्भावे मनसि निर्वृत्तिकतया सत्तामात्रे मनसि वर्त्तते ज्ञानकाले सूक्ष्मरूपेणास्तीत्यर्थः। तु पश्चाद्व्युत्थान काले प्रवर्तमानं रजस्तद्भावं बुद्धिर्भावमनुवर्तते। घृतकाठिन्यवद्विलीनापि बुद्धिः रजोगुणेन शीतेन घृतमिव पुनर्घनीक्रियत इत्यर्थः। अयं भावः। सत्यपि ज्ञाननाशे क्षालितलशुनभाण्डगन्धवल्लेशताऽनुवर्तमानाऽविद्या प्रारब्ध कर्मपराधीना पुनः पुनर्देहादीनुत्थापयति प्रारब्धकर्मोपरमेन तु निरन्वयनाशान्निष्प्रत्यूहं कैवल्यमिति ॥ ४ ॥

**इन्द्रियाणि हि सर्वाणि प्रवर्तयति सा तदा ।**
**प्रीतिः सत्त्वं रजः शोकस्तमो मोहस्तु ते त्रयः ॥ ५ ॥**
**ये ये च भावा लोकेस्मिन्सर्वेष्वेतेषु वै त्रिषु ।**
**इति बुद्धिगताः सर्वा व्याख्यातास्तव भारत ॥ ६ ॥**
**यत्तद् बुद्धेः परं प्राहुः सांख्या योगाश्च सर्वशः ।**
**बुद्ध्यमानं महाप्राज्ञमबुद्धपरिवर्जनात् ॥ ७ ॥**

सा बुद्धिर्यदा रजसा लब्धात्मिका भवति तदा हि प्रसिद्धामिन्द्रियाणि प्रवर्तयति ततश्च विषयसम्बन्धात्सत्त्वात्मिका बुद्धिः विषययाथात्म्यज्ञानं प्रवर्तते तथा तमोभावस्तमसा विपयाज्ञानेन जनितो भावः विपर्यासरूपः शुक्तिरजतादिः प्रीतियोगात्पुरुषगतरागादिदोषात्प्रवर्तते प्रमारूपं विपर्ययरूपं वा ज्ञानविषयेन्द्रियसम्बन्धाज्जायत इत्यर्थः ॥ ५ ॥ ततश्च प्रीत्यादयः सत्त्वाद्यात्मनः प्रवर्तन्ते भावाः शमदमकामक्रोधभयविषादादयः बुद्धिव्याख्यानं स प्रयोजनमुपसंहरतीति ॥ ६ ॥ एवं बुद्धिं व्याख्याय ततः परं तत्त्वं निरू-

विश्वो विराडखिलविश्वमकारवाच्यं
मुख्ये गतं नच ततो व्यतिरिक्तमस्ति ॥ २७ ॥
आब्रह्म विश्वमखिलं प्रणवादिमात्रं
नामात्मकर्मसु विविच्य विचिन्त्य धीरः।
भेदं निरस्य पदमेकमखण्डमाद्यं
सूक्ष्मं समष्टिमनुचिन्त्य तयेक्षतेऽन्तः ॥ २८ ॥
सूत्रं च तैजसमुकारमयं विविच्य
ध्यात्वा द्वितीयमखिलं प्रणवस्य रूपम्।
विश्वाद्यकारविदितं प्रविलाप्य तत्र
स्थेयं समाधिमनुसृत्य विपश्चितान्तः ॥ २९ ॥
सूक्ष्मं विलाप्य सकलं तदुकाररूपं
प्राज्ञे मकारविदितेऽखिलविश्वमूले।
ईशेऽद्वयेऽपि विततं प्रणवान्तमात्रे
ध्यायेत्ततः प्रणवमागममूलमेवम् ॥ ३० ॥
प्राज्ञं महेश्वरमपि प्रविलाप्य विद्वां-
स्तुर्येऽर्द्धमात्रविदिते प्रणवान्तसारे।
तत्त्वं चिदद्वयमखण्डमनादिसिद्धं
ध्यायेत्ततः प्रणवलक्ष्यमशेषदर्शी ॥ ३१ ॥
एवं विचारकुशलः प्रणवं विविच्य
सव्याहृतं त्रिपदमागममौलिमूलम्।
ध्यायेत्तदक्षरगतं परमार्थवस्तु
स्वाराज्यलाभहितमेकमनन्यमाद्यम् ॥ ३२ ॥
ब्रह्मैव भूप्रभृतिरूपमवाप्य विश्व-
माविश्य सर्वकलया यमयत्यशेषम्।
प्रत्यक्तयान्तरगतं सकलात्मवृत्तीः
संचोदयत्यभिमुखं भजनानुरूपम् ॥ ३२ ॥
स्थित्वार्कमण्डल उदारगुणाभिरामं
ब्रह्मैव सर्वमतिवृत्तिविभासकत्वात्।
स्तुत्यं गिरा श्रुतिशिरोभिमतं धिया तद्
ध्येयं स्वधामपरमार्थसुखात्मकत्वात् ॥ ३५ ॥

तत्त्वं पदार्थवपुषा विदितं श्रुतौ य-
त्तस्यादिमं निगमसूप्रथमे पदे स्यात् ।
तस्यैव विश्वजनकत्वमुदाजहार
मायाविनः सवितुरित्यपरेण तत्र ॥ ३५ ॥

विश्वात्मना स्फुरति यद्यपि बोधतः प्राक्
तत्त्वं तथापि निजभावगतं महिम्ना ।
स्वेनोदितं सकलमायिकवस्तुभिस्त-
द्भाति स्वयं सकलविश्वगतं यथार्कः ॥ ३६ ॥

श्रेष्ठं महःपदमलं परमं पवित्रं
स्वज्योतिरद्वयमखण्डसुखैकरूपम् ।
वेदान्तवेद्यमखिलेश्वरवर्णनीयं
ध्येयं तदेव परमार्थपदं मुमुक्षोः ॥ ३७ ॥

तार्तीयमागमजनैरपि तत्तुरीये
तत्त्वं पदे विदितमेकमशेषसारम् ।
पातं तयोरपि गतं न विभेदमाप
ज्ञेयं मुमुक्षुभिरखण्डपदं प्रयत्नात् ॥ ३८ ॥

राहो शिरस्त्विति भिदेव न वस्तुतोऽस्ति
स्वज्योतिषः सवितुरत्र भिदाणुमात्रम् ।
यज्ज्योतिषा सकलविश्वमिदं विभाति
प्रत्यङ्महस्तदजडं श्रुतिमौलिगम्यम् ॥ ३९ ॥

ब्रह्मादयः सुरगणा जगदीश्वरा ये
ते यस्य धाम कलयेक्षणतो बभूवुः ।
देवाः स्वभानवपुषः किमुवाच्यमस्य
देवत्वमद्भुतपदस्य चिदद्वयस्य ॥ ४० ॥

तज्ज्योतिरेव मनसा वचसा धिया च
ध्येयं सदैव सवितुः सकलेश्वरत्वात् ।
दृश्यं विहाय सकलं भ्रममूलजत्वा-
ज्ज्ञेयं तदेव सततं किल कीर्तनीयम् ॥ ४१ ॥

यः प्रत्यगात्मवपुषाखिलबुद्धिवृत्तीः
स्वज्योतिषे रपति सर्वकलेश्वरत्वात् ।

आराधितो निजसुखात्मपदाभिमुख्यं
योनो धियो नयति तं शरणं व्रजामः ॥ ४२ ॥
यज्ज्योतिरस्ति मिहिरे सकलावभासं
तज्ज्योतिरेव परमात्मपदाभिधेयम्।
दक्षेक्षिणि स्वयमखण्डसुखैकधाम
प्रख्यातमागमशिरो जननीपदेषु ॥ ४३ ॥
यज्ज्योतिरीक्षणकटाक्षलवैकसिद्धं
ब्रह्मादिविश्वमखिलं सचराचरं स्यात्।
तज्ज्योतिरान्तरहृदा परमादरेण
ध्येयं विचार्यमथ वेद्यमखण्डतत्त्वम् ॥ ४४ ॥
एवं मुनेर्हृदयमत्र विचारणीयं
स्याज्ज्जापकप्रकरणेऽतिरहस्यगीते।
सारेप्सुना सकलशास्त्ररहस्यमेवं
स्वराज्यसिद्धय उदारधियेक्षणीयम् ॥ ४५ ॥
निष्कामभक्तिफलमक्षयमोक्षमाहु-
स्तद्दर्शितं जयमखैकनिविष्टबुद्धेः।
यद्द्रोहशून्यमचिरेण तदेव सिद्ध्ये-
त्कर्मापि जापककथासु विशेष उक्तः ॥ ४६ ॥
मन्त्राक्षरैर्निखिलकर्मसमाप्तिरुक्ता-
मन्त्रार्थचिन्तनमुपासनमत्र सिद्ध्येत्।
मन्त्राशयेन परमार्थपदैक्यबोध-
स्त्रैविध्यमत्र विशदान्निगमप्रसूतौ ॥ ४७ ॥
योगात्ततो जपवतामजरामरत्वं
स्वेच्छातनुत्यजनमक्षयलोकयानम्।
कैवल्यमित्यपि फलं गदितं ह्यकामात्
कामात्तु लौकिकफलं निरयाभिधानम् ॥ ४८ ॥
आख्यायिकामुखत आगमसूजपेन
वश्या भवन्ति यममृत्युमुखा हि देवाः।
सत्यं परं सपदि तारयतीत्यवादि
सत्यादिकं जपवतापि च रक्षणीयम् ॥ ४९ ॥

ज्ञात्वापि शास्त्रहृदयं सकलं यथाव-
द्‌ज्ञावबोधनकृते सुजना यतन्ते ।
आरोप्य बोधविमलेऽपि निजात्मवस्तु
न्यज्ञानमित्यवददिन्द्रगुरुक्तितोऽसौ ॥ ५० ॥

शिष्यो गुरुर्मनुरभून्निगमोपदेष्टा
यत्रात्मबोध इति बोधकृते जनानाम् ।
माहात्म्यमाह परमात्मपदैकनिष्ठा-
सिद्ध्यै यथा त्रिविधतापविलापहेतुः ॥ ५१ ॥

दुःखं सुखं विषयजं त्यजतीशनिष्ठो
नान्यो यतो जगति कर्मफलं द्वयं तत् ।
विद्यामृते भगवतो न परं सुखं स्यात्
सा कृष्णभक्तिविमुखस्य कुतोऽस्ति जन्तोः ॥ ५२ ॥

यावत्तनुद्वयमतिर्जन एष ताव-
त्स्यात्कर्मपाशसित आन्ध्यनिबद्धचक्षुः ।
स्याच्चेद्धरेः करुणया भगवत्प्रबोधो
वैराग्यभक्तियुत आशु विमुच्यतेऽसौ ॥ ५२ ॥

ब्रह्मैव सर्वमिति बोधजनिर्यथास्या-
दालोचनीयमतियत्नत आदरेण ।
भूतानि भौतिकगणांश्च तथात्मतत्त्वं
सम्यग्विविच्य गुरुशास्त्रनयैकबुद्ध्या ॥ ५३ ॥

अन्तर्बहिर्भगवतो विशदं स्वरूपं
दृग्दृश्यभावमपहाय सुसूक्ष्मबुद्ध्या ।
पश्येदखण्डपदमद्वयसौख्यमेत-
त्स्वायम्भुवोक्तित इहावददात्मसिद्ध्यै ॥ ५४ ॥

तत्त्वं हरिर्नच ततः परमस्ति किंचिद्
ध्येयोर्च्य एष निजभागवतश्च वेद्यः ।
वेदान्तविद्भिरपि वेदगिरां सभूमि-
रित्याह भीष्म इह धर्मसुतं प्रतीष्टम् ॥ ५५ ॥

श्रीकृष्ण एव परमार्थपदं नचान्य-
त्तज्ज्ञास्त एव जगतामिह कीर्तनीयाः ।

तद्ध्यानतः परममङ्गलमस्ति पुंसां
तज्ज्ञानमेव परमार्थपदैकलाभः ॥ ५६ ॥
तस्यावतारचरितानि सुमङ्गलानि
ध्येयानि सर्वमुनिभिर्निखिलैः सुरैश्च ।
वेद्यं परं पुरुषभूषणमन्तरेणं
ध्यायेद्धरिं गुरुमुखाच्छ्रुतमादरेण ॥ ५७ ॥
विश्वोद्भवस्थितिलया यत आगमाश्च
स्युर्हेतुरस्ति पुरुषप्रकृतिप्रवृत्तः ।
यो भूतभौतिकगणान्विनियुक्त आरा-
ध्यो वेद्य आगमविदामृत एष कृष्णः ॥ ५८ ॥
वैमुख्यमेव निखिलार्त्तिनिदानमस्य
भोगार्थिनोऽपि मनुजस्य यदीयमाहुः ।
यस्यावबोध उदितोऽखिलकर्मजालं
सन्देहमूलमपि हन्ति स एष कृष्णः ॥ ५९ ॥
यस्य प्रसादलव आशु तनोति दैवीं
पुंसोऽस्य संपदमनन्तसुखं च सद्यः ।
वैतृष्ण्यमेति गुणजालमपोह्य दूरा-
द्यद्दीक्षितोपमचिराज्जन एष कृष्णः ॥ ६० ॥
यन्मायायावृतधियो न विदन्ति तत्त्वं
स्वीयं जना गुणमयैरपि मोहिता ये ।
भावैस्त एव यदनुग्रहतस्तरन्ति
ज्ञात्वा परं पदमिहाक्षिग एष कृष्णः ॥ ६१ ॥
कामादिजालमपहाय नियम्य सर्वं
सर्वेन्द्रियादिगणमात्मविचारणेन ।
बुद्ध्यात्मतत्त्वमपवर्गमुपैति धीरो
यत्पादपद्मनिरतो जन एष कृष्णः ॥ ५९ ॥
शुद्धिर्विवेकविरतिप्रशमादयश्च
स्वाभाविकी रतिरशेषगुरौ मुकुन्दे ।
योगः परात्मधिषणाविमलस्वभावो
ह्येते भवन्ति यदनुग्रहतः स कृष्णः ॥ ६० ॥

यस्येक्षणं भगवतो विनिहन्त्यविद्या-
मैश्वर्यमप्यखिलमेत्य न चालयेत ।
स्वप्नाभमप्यपगतं जगदाशु भाति
यद्भक्तियुक्तमनसोऽक्षिग एष कृष्णः ॥ ६१ ॥

अज्ञानजं जगदिदं विलयं प्रयाति
देहत्रयं विलयमेति यतः प्रतीचः ।
स्वच्छं विमुक्तिपदमेति पदङ्घ्रिभक्त्या
तं सर्वभूतहृदयं हरिमानतोऽस्मि ॥ ६२ ॥

वाचो न यत्र मनसा सह संविशन्ति
नान्येन्द्रियाणि नच सूर्यशशाङ्कभासः ।
सर्वावधिः परमतत्त्वमशेषसारः
श्रीकृष्ण एव शरणं सुमनोभिरामः ॥ ६३ ॥

एवं मुनिर्हरिपदं विशदं मुमुक्षोः
सम्यग् हिताय निजगाद दयार्द्रचेताः ।
वार्ष्णेयतत्त्वकथनं कुरुवर्यभीष्म-
संवादतोऽत्र हरिणेरित एव साक्षात् ॥ ६४ ॥

वेदान्तबाह्यमतजालमयो ह्यविद्वा-
न्वेदान्तसिद्धपरमार्थपदं विचार्य ।
बुद्ध्वैति मोक्षमिह नेतरथा कथंचि-
द्वैदेहपञ्चशिखवादत एवमाह ॥ ६५ ॥

दान्तो य इन्द्रियदमाच्छ्रुतशीलवान् स्या-
त्संतुष्ट आर्जवगुणैः सुहृदात्मविच्च ।
सर्वैषणोज्झित उदारगुणाभिरामो
लोके सुखीति मुनिराह पुनर्द्वयेन ॥ ६६ ॥

प्रह्लादशक्रवचनेषु चराचरस्या-
वश्यं भवेन्नियतिरीश्वरनिर्मिता या ।
सर्वं मृषा जगदितीष्टमवेक्ष्य बुद्ध्या
जीवन्सुखीति सततं मुनिराह सारम् ॥ ६७ ॥

न स्थायिता जगति कस्यचिदस्ति सर्व-
माद्यन्तवीन्नखिलसारमखण्डमेकम् ।

ब्रह्मैव तत्त्व निजरूपमितीह बुद्ध्या
लोके सुखीति बलशक्रगिराह सारम् ॥ ६८ ॥
ऐश्वर्यदर्पशमनाय जगाद वृत्तं
व्यासो बलेरिह तथा सकलापि सम्पत् ।
न स्थायिनी सुकृतजापि विपर्ययेण
ग्रस्तेति भावमपि लोकहिते प्रवृत्तः ॥ ६९ ॥
शोको विपर्ययधियाहमिति प्रयुक्तः
सर्वोप्यनर्थ उदरैकनिविष्टबुद्धेः ।
मूढस्य सोऽपि विलयं परमार्थतत्त्व-
ज्ञानात्प्रयाति भगवद्रतिनिष्ठबुद्धेः ॥ ७० ॥
एको हरिर्जगति नास्ति परो द्वितीयः
शास्ता स एव जगतां सुहृदात्मनाथः ।
ज्ञात्वेति सर्वमपहाय विमुक्तशोकः
स्यादित्युवाच नमुचीन्द्रवचोमिषेण ॥ ७१ ॥
देवास्तथासुरगणा नृवरा असंख्या
ऐश्वर्यमाप्य जगतीह गता विनाशम् ।
आपद्गतोऽपि धृतिमेव समाश्रयेते-
त्याहाशयं बलिसुरेन्द्रवचस्तु भूयः ॥ ६२ ॥
यत्रास्तिशीलमथ सत्यमदम्भधर्मो-
ह्रीरार्जवं तप उदारजनैश्च योगः ।
तत्र श्रियो निवसनं धृतिसन्नतिह्री
श्रद्धाक्षमाविजितिकीर्तिभिरेव साकम् ॥ ७३ ॥
साम्यं गता विविधभावनियोजिता ये
ब्रह्माद्वयं निजमहिम्नि सदा प्रतिष्ठम् ।
विज्ञाय विश्वमनृतं च सुखामृताब्धौ
भग्नाः सदात इति देवलयोगियोगे ॥ ७४ ॥
वैराग्यभक्तिनिजतत्त्वधियः प्रशान्तिः
क्षान्तिर्दया च समता विमला च वाणी ।
नाहंकृतिश्च सुगुणा निवसन्ति यस्मि-
न्नेते स पूज्य इति नारदकीर्तिभावः ॥ ७५ ॥

सृष्टेः पुरा परमतत्त्वमखण्डमेकं
ह्यासीन्न चापरमिति श्रुतिरेवमाह ।
तस्माज्जगत्प्रकृतिहेतुमुखेन जातं
सर्वं महत्प्रमुखमत्र विचित्ररूपम् ॥ ७६ ॥

दुर्ज्ञेयमस्ति परमात्मपदं यतस्त-
न्नानाविवादविमतं मनसाप्यगम्यम् ।
वादान्धकारमपहृत्य विविच्य सम्यक्
को वेद कृष्णकरुणालवमन्तरेण ॥ ७७ ॥

यस्मिन्निदं प्रलयमेति लये विचित्रं
व्योमानिलानलजलावनिभूतजातम् ।
यच्छिष्यते विमलमद्वयतत्त्वमेकं
शान्तं तदेव निगमान्तगिरैकवेद्यम् ॥ ७८ ॥

वेदानधीत्य विधिनाखिलकर्मयज्ञ
दानादिकं विहितमाश्रमवर्णरीत्या ।
सम्पाद्य सत्त्वविमलेन चिदात्मतत्त्वं
विज्ञाय सर्वकरणाद्विरमेद्विपश्चित् ॥ ७९ ॥

कालं दुरत्ययमवेक्ष्य निरस्य कामं
भक्तिं विधाय विमलां हरिपादपद्मे ।
घोरां हि संसृतिमिमां निजपौरुषेण
सम्यग् धिया तरति धीर इहैव सद्यः ॥ ८० ॥

चित्तेन्द्रियाणि विनियम्य बहिर्मुखानि
योगेन दैशिकगिरा प्रविविच्य तत्त्वम् ।
पश्येन्निरन्तरधियादरतो विपश्चि-
त्तेनैव संसृतिमिमां तरतीशभक्तः ॥ ८१ ॥

लब्ध्वा नृदेहमजरं प्रवरं द्विजाते-
स्तत्रापि वेदपथनिष्ठतया स्थितिर्या ।
ब्रह्माद्वये सुखघने मनसोऽचला सा
स्यादुत्तमा गतिरशेषभयापहृत्यै ॥ ८२ ॥

त्यक्त्वा विवादमखिलं सकलं कमारात्
कर्मार्जितं फलमशेषमवेक्ष्य बुद्ध्या ।

ज्ञाने यतेत निगमान्तविचारशीलः
स्वोद्धारमेव पुरुषार्थबलेन कुर्यात् ॥ ८३ ॥
भूतानि भौतिकगुणांश्च शरीरनिष्ठान्
बुध्वात्मतत्त्वमखिलक्षमितो विविच्य ।
बुद्ध्यादिसाक्षिणमशेषधियां विरामे
दृष्ट्वैव तन्मयतया नितरां स तिष्ठेत् ॥ ८४ ॥
यावन्न तत्त्वमतिरुज्ज्वलतामुपैति
तावच्छ्रयेद्विमलयोगमपेतकामम् ।
वैराग्यतोऽभ्यसनतश्च मनो नियुञ्ज्यात्
प्रत्यक्सुखे सततमिन्द्रियनिग्रहेण ॥ ८५ ॥
ज्ञानेन कर्म न समुच्चयमेति जातु
नो यौगपद्यमनयोः फलतो विरोधात् ।
ज्ञानेन मुक्तिमितरेण तथैव बन्धं
प्राप्नोति ना तत इदं विषमं द्वयं स्यात् ॥ ८६ ॥
निष्कामकर्म यदपि श्रुतिसंमतं स्या
ज्ज्ञाने तथापि न समुच्चितमेकदा तत् ।
पूर्वं विशुद्धिकृदिदं न पुनर्विबोधे
सिद्धेऽथवा सह तयोः करणे विरोधात् ॥ ८७ ॥
यावत्स्वतस्त्यजति नो विषयस्पृहां स्वां
तावत्स्वधर्ममुचितं नितरां श्रयेत ।
आरूढयोग इतरन्निजकर्मजालं
त्यक्त्वा श्रयेच्छ्रमसमन्वित आत्मयोगम् ॥ ८८ ॥
आद्याश्रमेऽपि निवसन्गुरुभक्तियुक्तः
स्वाध्यायतत्पर उदारगुणेश्वरस्य ।
भक्तिं चरन्नपहरन्युवतीसमाजं
भागं नयेत्प्रथममायुष आ विशुद्धेः ॥ ८९ ॥
धर्मं चरान्विषयभोगत आविरक्त
स्तिष्ठेद् गृहे हरिपदाम्बुजभक्तियुक्तः ।
यावन्न शुद्धिरुदिता मनसोऽस्य ताव
दायुर्द्वितीयमपि भागमिह व्यतीयात् ॥ ९० ॥

त्यक्त्वा गृहं वनमितो निजधर्मनिष्ठो
वेदोक्तमाचरति चित्तविशुद्धयेऽद्धा ।
आपद्गतोऽपि न विमुञ्चति धर्मनिष्ठां
भोगे स्पृहां तृणवदाशु परित्यजेद्वै ॥ ९१ ॥
प्राप्यात्मशुद्धिमथ शास्त्रविचारधीरै-
रालोचनीयमखिलं जडमाशु जह्यात् ।
बाध्यं विचार्य परमात्मनिविष्टबुद्धिः
शान्तः स्वयं ह्युपरमेदपि कृत्यजालात् ॥ ९२ ॥
यावत्स्थितिं परमतत्त्वपदे मुमुक्षु-
र्वृत्तीद्धबोधदृढतो न लभेत तावत् ।
योगेन सांख्यप्रयतो मनसः स्ववृत्ती-
राक्रम्य तत्परधिया सततं यतेत ॥ ९३ ॥
मायागुणैर्विरचितं जडमाविरिञ्च्यं
विश्वं हि भौतिकमशेषभिदा समेतम् ।
बोधेन सर्वमपबाध्य चिदद्वयेद्धा-
निष्ठामियात् सपदि सांख्यविचारणेन ॥ ९४ ॥
बुद्धिर्बहिर्गुणमयी विविधं प्रपञ्चं
मायामयं सृजति देहगता तथातः ।
नानाकृतिं चितियुतानिशमाशुधत्ते
तस्मादिमां परपदे निनयेद्विपश्चित् ॥ ९५ ॥
ऐकाग्र्यमेव परमं तप इन्द्रियाणां
बुद्ध्या सहेह निगमान्तगिरां विचारे ।
तेनैव यान्ति परमं पदमाशु धीरा
स्तीर्त्वातिदुस्तरभवार्णवमार्जवेन ॥ ९६ ॥
न ब्राह्मणत्वमुपयाति जनः श्रुतीनां
स्वाधायतो न जपयज्ञमुखैः प्रयत्नैः ।
ज्ञानेन लभ्यत इदं परमार्थतत्त्व
निष्ठेन चानुभवतो विपरीतमन्यत् ॥ ९७ ॥
आमोक्षमेति विलयं न मनोऽस्य लिङ्गं
सत्त्वे विशुद्ध उपलभ्यत आत्मतत्त्वम् ।

ब्रह्मैक्यमेव विदितं दृढबोधयोगा
त्साम्राज्यमानयति मोक्षपदं प्रबुद्धम् ॥ ९८ ॥
अज्ञानमूलमिह कामतरुं विपश्चि
च्छित्त्वा शरीरपुरमिन्द्रियपौरमन्तः।
जीवं प्रभुं हृदयजापकमाशु बुध्वा
प्रारब्धमद्वयपदं सुखमेति मोक्षम् ॥ ९९ ॥
भूतानि भौतिकगणा धिषणामुखाश्च
ब्रह्मैव तन्निजवपुर्विदितं तदेतत्।
मोक्षं नयेदिति शुकं सति शासनेन
व्यासो जगाद सकलार्तिभयापहृत्यै ॥ १०० ॥
मृत्युः प्रमादजनितो भ्रमतोऽस्य जन्तो
रत्यन्तविस्मृतिरियं वपुषि स्थविष्ठे।
कामादिदोषनिवहे सति नान्यथास्या
दन्तस्त्विवतीह मुनिराह कमृत्युवादे ॥ १०१ ॥
भूताभयं विगतरागमतिश्च शान्तिः
क्षान्तिस्तपो हरिपदस्मृतिरानृशंस्यम्।
दानं दमः श्रुतिपथे रतिरार्जवं स्या
द्धर्मो वरो वदति निश्चयमत्र धर्मे ॥ २ ॥
कृत्वाभयं परमसिद्धिमितोऽण्डजेभ्यो-
विप्रैर्न गर्व इह कार्य उदारधर्मे।
श्रेयान् स्वधर्म इति जाजलिवैश्यवादे
मोक्षप्रदात्ममतिरद्वय एवमाह ॥ ३ ॥
निष्कामधर्म इह शास्त्रमतः पुमर्थो
हिंसा न कुत्रचिदुदारधिया मता स्यात्।
जीवन्मृतो मृतिपदं ह्यपवर्ग्यमिष्टं
श्रुत्यार्जवं निजपथेन तथाह तत्र ॥ ४ ॥
येषां न काम्यमपवर्गमृतेऽस्ति किंचि
न्नानात्मबुद्धिरपि भोगगता स्पृहा नो।
तृप्तास्त एव परमार्थसुखैकलाभाद्
ब्रह्मात्मबोधमहसेति पुनर्जगाद ॥ ५ ॥

वेदोऽतिगूढगतिरीश्वरतत्त्वनिष्ठ
स्तत्तत्त्वमीश्वरकृपालवमन्तरेण ।
कश्चिन्न वेद तत ईश्वरपादमूलं
नित्यं भजेदृजुमतिर्मुनिरेवमाह ॥ ६ ॥

कुर्यान्न कर्म सहसा पदमापदां त-
त्कुर्याद्विमृश्य सकलं सुधिया विपश्चित् ।
गूढापराध इतरस्य तथात्मरागे
पापादिकेऽथ चिरकारिकथा प्रशस्ता ॥ ७ ॥

सत्यं वदेन्न जनहिंसनहेतुमेष
धर्मोऽतिदुर्गमपथो निगमैकवेद्यः ।
सद्भिर्विचार्य्य सकलं श्रुतिसारविद्भिः
कार्यं हि सत्यवत आह सुधीभिरेवम् ॥ ८ ॥

धर्मः कृतः फलति सर्व उदारबुद्ध्या
गार्हस्थ्य एव यतिनाश्रमिणार्जवेन ।
अद्रोह एव तदपीश्वरतत्त्वनिष्ठां
संप्रापयत्यचिरतोऽस्य न हिंसयोक्तः ॥ ९ ॥

सम्यग्निवृत्तिपर आत्मधियेन्द्रियाणि
संयम्य मानसगतीरचला विधाय ।
यद्वत्प्रयाति परमात्मपदं सुखेन
नैवं प्रवृत्तिनिरतो बहिरर्थभावः ॥ १० ॥

तस्मात्त्यजेत्सकलकर्म बहिर्मुखं यत्
संश्रित्य देशिकमुदारगुणं मुमुक्षुः ।
संतोषवान् परमतत्त्वमवेक्ष्य मोक्षं
यातीति गोकपिलवाद उवाच भावम् ॥ ११ ॥

सम्यग्विवेकविरतिप्रमुखैकहेतु
र्निष्कामधर्म उदितो भगवत्प्रियत्वात् ।
कामार्थयोः परिणतेरतितुच्छभावा
न्निन्द्यत्वमाह जलदद्विजयोः प्रसङ्गे ॥ १२ ॥

हिंसोज्झितः क्रतुरिहेश्वरतुष्टये स्यात्
श्यामाकशाकहविषापि कृतो मुमुक्षोः ।

हिंसान्वितोऽध्वर इतोऽपि विगर्हितः स्या-
त्स्वर्गादितुच्छफलदो मुनिना प्रसङ्गात् ॥ १३ ॥
कामात्कृतो जडधियोऽपि सुधर्म ईष
त्पापादिना निरयहेतुरथैकवृद्ध्या ।
तस्मादकामत उदारधियैव कुर्या
द्धर्मं जनो हरिरतिप्रदमित्युवाच ॥ १४ ॥
धर्मेण चित्तविमलत्वमुपेत्य धीमा
न्वैराग्ययोगधृतिशान्तिगुणान्वितः सन् ।
देहेन्द्रियादि विनियम्य चिदात्मतत्त्वं
सम्यग्विचार्य्य हरितत्त्वधियैति मुक्तिम् ॥ १५ ॥
बाह्यान् पदार्थनिचयानवबुध्य बुद्ध्या
दानान्तरानपि मृषा तमसः समुत्थान् ।
ज्ञानेन तत्त्वमवलोक्य परात्मनोर्य-
स्तिष्ठेच्चिदद्वयपदे स च मुच्यतेऽतः ॥ १६ ॥
तृष्णाममत्त्वरहितो श्रुतमात्मबोधं
तेनैव बन्धमपहृत्य विमुक्तिमीयात् ।
इत्याह साधनगणेऽसितनारदोक्तौ
वैदेहमाण्डविगिरा मुनिरत्र भावम् ॥ १७ ॥
मृत्युं प्रतिक्षणमवेक्ष्य निरस्य सर्वं
मायामयं ममतया च गृहीतमिष्टम् ।
सद्यो विचार्य्य परमार्थपदं विमुक्तः
स्यादित्युवाच मुनिपुत्रकथाप्रसङ्गे ॥ १८ ॥
अध्यात्मतत्त्वनिरतो विषयेष्वसक्तो
द्वन्द्वैरस्वल्पमतिरीश्वरभक्तिनिष्ठः ।
स्वाचार आत्मसुख आत्मरतिर्विपश्चि-
ज्जीवन्विमुक्त इति हारितगीतभावः ॥ १९ ॥
स्थायित्वमस्ति नच कस्यचिदत्र तस्मा-
द्धीरो मुकुन्दपदपद्मरतिप्रसक्तः ।
विस्मृत्य नश्वरमिदं जगदात्मतत्त्वं
वीक्ष्यात्र तिष्ठति सदेत्यवदन्मुनीन्द्रः ॥ २० ॥

विष्णुर्जगत्सृजति पाति निहन्त्यलिप्तो
मायावशोऽस्य सततं तत एष सेव्यः ।
एनं भजेत्स च पुमर्थमियादनन्यं
भक्तिर्हरावसुलभास्य कृपामृते नुः ॥ २१ ॥

स्वाध्यायसंयमतपोनिजधर्मतीर्थ
दानव्रतादिकरणं फलमन्तरा चेत् ।
जन्तोर्भवेद् बहुषु जन्मसु तर्हि विष्णो-
र्भक्तेर्जनिः सकलसाधनसिद्धिरेषा ॥ २२ ॥

सा चेद् दृढा सुकृतपुञ्जवतो जनस्य
स्यात्तर्हि जन्म चरमं भवमुक्तिदं स्यात् ।
ज्ञानं विरागयुतमद्वयतत्त्वनिष्ठं
सिद्धं स्वयं हरिपदाम्बुजभक्तियोगात् ॥ २३ ॥

सत्त्वंरजस्तम इति प्रकृतेर्गुणास्त
द्वैचित्र्यतो जनिमतां बहवः स्वभावाः ।
प्रायो भवन्ति जनिमृत्युभयैकभाजः
केचिद्भवन्ति निजधर्मपरा जगत्याम् ॥ २४ ॥

अज्ञानजन्यविषयोत्थधियोऽप्यनन्ताः
कर्माण्यनन्तगुणितानि तथैव कामाः ।
वैचित्र्यतः प्रकृतिकार्यगुणाम्बुराशे
रानन्त्यमेति भव एव दुरत्ययत्वात् ॥ २५ ॥

तत्रापि केचन मुमुक्षव आपवर्ग्यं
भक्तिं चरन्ति हरिदैशिकपादयुग्मे ।
तत्रापि भक्तिरसिका विरला महान्त
स्तीर्णाः स्वयं भवभयाम्बुनिधेः सुखेन ॥ २६ ॥

प्राप्यापदं जगति सम्पदमैश्वरीं वा
नो यान्ति खेदमथ हर्षमुदारनिष्ठाः ।
इत्याह वृत्रचरितेन मुकुन्दभक्ति-
स्वराज्यलाभमुखतो मुनिरत्र भावम् ॥ २७ ॥

श्रीकृष्ण एव परमार्थपदं नचान्य
द्विश्वोद्भवस्थितिलयास्तत एव सन्ति ।

विश्वं स एव नच विश्वमितो विभिन्नं
प्राहेति भीष्ममुखतो मुनिरत्र भावम् ॥ २८ ॥
अर्थी न पश्यति पुमान् वृजिनं हि घोरं
घोरापदं लभत आशु चरंश्च पापम् ।
पापेन योजयति भूमिजलाग्निमुख्या
न्देवानपीति मुनिनेन्द्रकृतावदर्शि ॥ २९ ॥
धर्मं चरञ्जगति नायकतामवाप्य
मान्योऽपि नश्यति हरे कृतहेलनोऽन्नः ।
स्वल्पेन तुष्यति हरः स्तवनादिनापि
तुष्टो ददाति निजसाम्यमुदारसेव्यः ॥ ३० ॥
सम्यक् स्तुतिर्भगवतोऽखिलपापहन्त्री
तत्रैव शास्त्रहृदयं विदुषां विचारात् ।
तेनैव सर्वपुरुषार्थमुपैति विद्वा-
नित्याह दक्षमखलोपकथाप्रसङ्गे ॥ ३१ ॥
यस्येश्वरोऽपि परितुष्यति भक्तिवश्यो
वेत्त्यात्मतत्त्वमतिरिक्तमशेषतोऽसौ ।
भूतानि भौतिकगुणांश्च विविच्य बुद्ध्या
सारं विशुद्धमिति भाव इतः परस्मिन् ॥ ३२ ॥
ज्ञात्वात्मतत्त्वमखिलस्य च तत्त्वमन्त
र्निष्ठामवाप्य विचरन्ति स्वयं कृतार्थाः ।
कुत्रापि नैव विकृतिं सुधियो भजन्ते
स्वस्थाः सदेति मुनिराह समङ्गवाक्यैः ॥ ३३ ॥
सन्तोषसान्तिनिजतत्त्वधियो गुणा ये
शास्त्रे मताः परपुमर्थफलावसानाः ।
तैर्युक्त एव भुवि साधुरसौ विमुक्तः
शान्तः सुखीत्यपि च नारदगालवोक्तौ ॥ ३४ ॥
पुत्रादिसङ्गमतितुच्छमनर्थहेतुं
छित्त्वा चरेद्विरतिमान् श्रुतिसारविज्ञः ।
त्यक्त्वाल्पसारमखिलं जगदेव बुद्ध्या
ब्रह्माश्रयेत्सगरतार्क्ष्यविचाररीत्या ॥ ३५ ॥

सङ्गेन याति नरकं न दिवं प्रयाति
 सङ्गोऽस्त्यनर्थनिवहप्रद आविरिञ्च्यम् ।
सर्वं मृषेति सुधियात्मपदं विमृश्य
 धीरः सुखीति दितिसूनुगुरुप्रसङ्गे ॥ ३६ ॥
हन्तुं न शक्य उशना अपि शम्भुना यो-
 जीर्णो न रुद्रजठरेऽपि जगज्जनन्याः ।
पुत्रत्वमेत्य निजयोगबलेन सोऽपि
 नोर्ध्वं गतः किमु न सङ्गजदोषतोऽन्यः ॥ ३७ ॥
सर्वत्र सङ्गमपहाय चरेत्स्वधर्मं
 धर्मो महाप्लव इहार्णवतारणे नुः ।
निष्काम एव स च कृष्णपदारविन्द
 भक्त्यैकहेतुरखिलाघविनाशकत्वात् ॥ ३८ ॥
योगेन कर्म विनिहन्तुमशेषमिच्छे-
 द्योगो मनोनियमनेन न चान्यथा स्यात् ।
तच्छास्त्रतत्त्वसुविचारणया गुरूक्त्या
 सा कृष्णभक्तिनिरतस्य सतां सभाजात् ॥ ३९ ॥
श्रेयश्चरेत्स्वयमसौ निजपौरुषेण
 नान्यो जनं ह्यपकरोति विचार्य्यमेवम् ।
सूर्येन्दुशक्रगुरुशुक्रमुखा महान्तः
 प्राप्ता महत्त्वमितरेऽपि तथात्मयत्नैः ॥ ४० ॥
दानं तपोऽध्ययनमार्जवतः कृतानि
 कर्माणि सन्ति फलवन्ति सतां प्रसङ्गात् ।
शीलं दमः शम उदारमतिः क्षमाद्याः
 सर्वे गुणाः सुविमलाः खलु जैह्म्यहीने ॥ ४१ ॥
त्यक्त्वा ममत्वमखिलेषु जडेषु धीमान्
 कुर्यात्क्षयः परपुमर्थकृते मुमुक्षुः ।
नान्यत्समं सुतपसा करणं पुमर्थे
 श्रेयस्तपो वदति शास्त्रमतश्चरेत्तत् ॥ ४२ ॥
माहात्म्यमस्ति तपसो नतु जातिनिष्ठं
 हीना महत्त्वमपि यान्ति तपःप्रसादात् ।

मायां विचित्रसरणिं प्रकृतिं विशालां
सत्त्वं रजस्तम इतीरितभेदगर्भाम् ।
तत्सारमक्षयमनाकृतिमाविचार्य्य
तत्त्वं पुमांसमुपलभ्य विमुक्तिमेति ॥ ५० ॥

यावद्विवेकजधिया पुरुषं विशुद्धं
वेदान्तवेद्यममृतं जडसाक्षिणं स्वम् ।
आलोच्य सर्वजननीं प्रकृतिं न वेत्ति
तावन्न लिङ्गमपि नश्यति सर्वदुःखम् ॥ ५१ ॥

नानाविकारपरिणाममयीं विचित्रां
यो वेत्ति तद्गुणविलक्षण आत्ममायाम् ।
साक्षी स एव पुरुषः प्रकृतेरसङ्गो
ज्ञात्वा तमेव भवमृत्युभयक्षयः स्यात् ॥ ५२ ॥

सांख्येन तत्त्वमेवबुद्ध्य समाहितः सन्
योगेन तत्र विनियम्य हृदिन्द्रियाणि ।
पश्येच्चिदद्वयमसङ्गमनादिसिद्धं
दृश्यं ह्यपोह्य सकलं प्रकृतेर्विकारम् ॥ ५३ ॥

क्वायं चिदद्वयसुखः पुरुषो विशुद्धः
क्वेयं विकारजननी प्रकृतिर्जडा स्यात् ।
अत्यन्तभेदमनयोरपि वीक्ष्य बुद्ध्या-
सङ्गं कथं पुनरुपैत्यनया पुमान्सः ॥ ५४ ॥

एवं विचार्य पुरुषं प्रकृतेः परं तं
तां वीक्ष्य नित्यमनृतां प्रकृतिं निवृत्ताम् ।
साक्षाद्विमुक्तिपदमेति पुमान्प्रबुद्धः
प्रोक्तं वसिष्ठमुनिना जनकं प्रतीत्थम् ॥ ५५ ॥

यावन्न धर्मजविशुद्धिरिहास्ति बुद्धे
स्तावन्न सांख्यमतिरप्रतिबन्धशून्या ।
जायेत पुंस इत आशु चरेत्स्वधर्मं
निष्काममेव जनकं प्रति गीतमेवम् ॥ ५६ ॥

ज्ञात्वा विचार्य्य विकृतिं प्रकृतिं विपश्चित्
तत्त्वं चिदद्वयमसङ्गमबाध्यमन्तः ।

देहत्रयोज्झितमतिर्विलस्वभावः
शान्त्यालये सुखपदे सततं स्थितः स्यात् ॥ ५७ ॥
कर्मास्ति नश्वरफलं त्रिविधं कृतं तत्
त्यक्त्वा विरक्तमतिरात्मपदं विवित्सुः ।
मोक्षं सुखं परपुमर्थमवेक्ष्य बुद्ध्या-
नित्यं श्रयेत गुणगौणभिदा विहाय ॥ ५८ ॥
जातं विनश्यति जगत्प्रलये समूलं
ब्रह्मैव शिष्यत इति श्रुतिराह सारम् ।
ब्रह्मैव सर्वमित आत्मपदं विचार्य्य
स्थेयं समुज्झितजगन्मतिरात्मतत्त्वे ॥ ५९ ॥
अध्यात्मतत्त्वमवधार्य्य विविच्य सर्वं
मायाकृतं त्रिविधमान्तरबाह्यभेदम् ।
गौणान् गुणांश्च बहुधा विकृतिं प्रयातान्
सत्त्वादिकांस्त्यजति तिष्ठति चित्स्वरूपे ॥ ६० ॥
दृश्यात्मना परिणतिं प्रकृतिर्गता या-
नादिर्जडा गुणमयी पुरुषैकभास्या ।
तां नित्यबाधितगुणामपबाध्य विद्वां-
श्चैतन्यमेकमवधार्य्य विमुक्तिमेति ॥ ६१ ॥
अध्यस्य चिन्मयपदे प्रकृतेर्विकारान्
देहेन्द्रियासुधिषणाप्रमुखान्प्रमादी ।
तद्धर्मतो व्रजति संसृतिमान्ध्यमूलां
मुक्तोऽपि बद्ध इव यः स च बोधनीयः ॥ ६२ ॥
देहेन्द्रियासुधिषणायमनेन तत्त्वं
ब्रह्मात्मनोऽपि गुरुदर्शितमीक्षतेऽसौ ।
योगः प्रशस्त इत आशु चरेत्समाधिं
सांख्येन मानकुशलः प्रविविक्ततत्त्वम् ॥ ६३ ॥
ज्ञानं विना बहुविधां गतिमेति योगी
योगं विना न सुखमेति निजस्वरूपम् ।
ज्ञानी ततो युगलमेव विचार्य्य कुर्या-
दद्वैतमक्षयपदं सुखमाप्तुमिच्छुः ॥ ६४ ॥

गूढं परं पदमहीविगमैकवेद्यं
यद्याग्यवल्क्यमुनिराह निजप्रबोधम् ।
सूर्येण दिष्टममृतापरमात्मनिष्ठं
विश्वावसुप्रतिमहापुराषार्थसाध्यम् ॥ ६५ ॥
ब्रह्मात्मतत्त्वमगुणं सगुणं विविच्य
मायाकृतं सकलभेदमयो ह्यबुद्ध्या ।
विद्याच्चिदद्वयधियो तत एति मोक्षं
वैदेहियोगिवचसेति जगौ मुनीन्द्रः ॥ ६६ ॥
सर्वं जगन्नियतिबद्धमशेषदुःखं
बुद्ध्वा विचार्य्य रतिमस्य निरस्य धीमान् ।
तत्त्वं किमस्ति परमार्थमिति प्रतीया
दाचार्यवेदवचसेति पुनर्जगाद ॥ ६७ ॥
ज्ञानं भवेदनुभवात्मकमागमोत्थं
वैराग्ययुक्तमिह यस्य स मुच्यतेऽतः ।
नास्त्याश्रमादिनियमो विदुषां फलाप्तौ
वैदेह आह सुलभां प्रतिशास्त्रमित्थम् ॥ ६८ ॥
साक्षात्कृतेऽपि परमार्थपदे विमुक्ते
किं क्षुद्रभागविभवैर्विदुषोऽस्ति कृत्यम् ।
त्यागः स्वभावत इहैषणभोगजाला-
सिद्धः स्वयं सुलभयोक्तमिति स्वशास्त्रम् ॥ ६९ ॥
त्यक्त्वा प्रमादमतिदुःखकरं करालं
कालं कलङ्कमनिशं तनुमाग्रसन्तम् ।
बुद्ध्वाऽभयं त्वरितमीश्वरपादमूलं
सम्यक् श्रयेच्छरणमात्मभयापहत्यै ॥ ७० ॥
सारं बुभुत्सुरखिलस्य भवस्य मूलं
निःसारमाधिजनकं तनुयुग्ममान्ध्यम् ।
वीक्ष्यात्मना निजसमृद्धतमे विपश्चित्-
कृष्णं श्रयेदिति शुकं प्रति भावमाह ॥ ७१ ॥
स्वाध्याययज्ञतपआदिसुधर्ममेव
श्रीकृष्णभक्तिजनकं जन आश्रयेत ।

सद्यः स एव मतिशुद्धिविवेकसम्य
ग्वैराग्यशान्तिदमसुख्यकरो विमुक्त्यै ॥ ७२ ॥
तत्रापरो नच सहायकरः स्वयं त-
च्चैकाकिना सुकृतसंचयमेव कृत्वा ।
संसारसिन्धुमतिदुस्तरमाशु तीर्त्वा
स्थेयं सदा निजमहिम्नि यथा शुकोऽभूत् ॥ ७३ ॥
कृत्वा तपोऽद्भुतमवाप सुतं शुकं श्री-
व्यासः परं पदमथोपदिदेश तस्मै ।
तद्दार्ढ्यसिद्ध्य उदारगुणं नृपान्ते
गच्छेत्युवाच स मुमुक्षुहिताय पुत्रम् ॥ ७४ ॥
तज्ज्ञो न सज्जत इहाखिलभोगजाले
तद्वन्न खिद्यति विपर्ययलाभतोऽपि ।
स्वस्थः सदैव परमार्थपदान्नचाल्यः
कैश्चित्कदापि विषयैः शुकवन्महात्मा ॥ ७५ ॥
बुद्ध्वापि तत्त्वमविपर्ययमात्मबुद्धेः
संवादसिद्ध्य उदारगुणेन साकम् ।
संगम्य पृच्छति मुमुक्षुहिताय विद्वान्
ब्रह्मात्मतत्त्वममृतं शुकवन्महात्मा ॥ ७६ ॥
निःसंशयं विमलतत्त्वमिहावधार्य
स्थेयं विविक्तजनसेवित एव देशे ।
गोप्यं रहस्यमथ चिन्त्यमनन्यदेकं
नासाध्यमस्ति च सतां शुकवत्समस्तम् ॥ ७७ ॥
विद्याप्रचार इह कार्य उदार सिद्ध्यै
न त्याज्यमस्ति विदुषाऽध्ययनं श्रुतीनाम् ।
स्नेहोऽतिदुःखद उदारधियामपीष्टे
त्यागे सुखं न तु परिग्रह एवमाह ॥ ७८ ॥
सर्वं जगच्छ्रममयं किमपि स्थिरं तद्
ब्रह्मादि मृत्युकलितं परितः समीक्ष्य ।
सारं विचार्य झटिति प्रविहाय सर्वं
मन्तव्यमद्वयसुखं त्विति नारदोक्तौ ॥ ७९ ॥

यः स्वात्मनो हितमवेक्ष्य निजात्मनिष्ठ
स्त्यक्त्वाखिलं श्रममयं विपरीतमान्ध्यम् ।
तत्त्वं श्रुतेरनुभवादवधार्य्य सम्यक्
तत्र स्थितः स च सुखीत्यपि नारदोक्तौ ॥ ८० ॥

व्यत्यस्तमस्तधिषणं सततं समस्तं
व्यस्तं विलोक्य जगदद्वयबोधनिष्ठः ।
सर्वं विहाय परमार्थपदं सुखात्मा-
सद्यः प्रयाति शुकवन्निजयोगसिद्धः ॥ ८१ ॥

योगप्रभावमतुलं पुरुषार्थमूलं
प्राप्याद्वयं सुखमनामयमेति योगी ।
मान्यः पितात्मविदुषापि न योगिमार्गो
गम्योऽर्कगोऽतिगहनोऽत्र शुकोपमेयम् ॥ ८२ ॥

ज्ञानी स्वयं श्रुतिविभागकृदीश्वरांशो
ऽप्याचार्य्य आत्मविदुषामपि माननीयः ।
व्यासोऽपि पुत्रगतभावमियाय दुःखं
किं वाच्यमन्यजन एति जगाविती॑ह ॥ ८३ ॥

ज्ञानं विराग उचितानि च साधनानि
सर्वाणि भक्तिफलकानि पुमर्थकानि ।
तस्मान्मुनिः सकलसाधनजालमुक्त्वा-
ऽप्यन्तेऽखिलस्य भजनीयविशेषमाह ॥ ८४ ॥

वर्णैस्तथाश्रममतैः सकलैः सदैव
श्रीकृष्ण एव भजनीय उदारकीर्त्तिः ।
मोक्षार्थिभिर्निखिलविश्वसृजामुपास्यो
देवाधिदेव उरुविक्रम आगमार्थः ॥ ८५ ॥

नातः परं किमपि तत्त्वमिहास्ति कृष्णा-
ज्जातं जगत्सकलमागमजालमस्मात् ।
जाताः सुरा विधिमुखाः सकला मुरारे
रंशांशतो जगति नास्ति ततो द्वितीयः ॥ ८६ ॥

नो गम्यते हरिरयं विधिना कृतेन
यज्ञेन वा सुतपसाऽध्ययनेन पुंसा ।

सत्त्वप्रधानमनसापि विना सुभक्त्या-
दृष्टान्तमत्र गुरुचित्रशिखण्डिभिश्च ॥ ८७ ॥
भक्त्या हरिर्विशदया सुलभो नराणां
यो दुर्लभः सुरगुरोर्मुनिसप्तकस्य ।
लब्धोऽध्वरैर्न गुरुणा तपसा मुनीन्द्रै-
र्लब्धः स गोपवनिताभिरिह व्रजौके ॥ ८८ ॥
यत्तत्त्वमागमविदामपि दुर्विचिन्त्यं
यं नारदोऽपि सततं भजते प्रबन्धैः ।
यद्ध्यानगाः शिवविरञ्चिमुखाः सुरेन्द्राः
स प्रेमभक्तिवशगो व्रजवासिलब्धः ॥ ८९ ॥
मुक्तेः स्वरूपमपि कृष्णपदारविन्द-
प्रेमैव तद्विरहिता भवबन्धबद्धाः ।
मुक्तास्त एव सततं हरिपादपङ्के
प्रेम्णा परेण रमते हृदयं हि येषाम् ॥ ९० ॥
कृष्णः पिता गुरुरसौ परमेष्टदेवः
पूज्यः सुरैः सपितृभिश्च विदां स वेद्यः ।
काण्डत्रयेऽपि निगमे प्रतिपाद्यतेऽसौ
सम्यक् ततः किमपि तत्त्वमभीष्टमस्ति ॥ ९१ ॥
ये प्रेमभक्तिनिरता भुवि वास्य धाम्नि
स्वाराज्यसौख्यवपुषा विहरन्त एते ।
देहेन्द्रियासुरहिताः सहिताः समस्तै
र्मुक्तास्त एव निगमान्तगिरां विचारैः ॥ ९२ ॥
यः पाञ्चसत्रनिगमेन समर्च्य उक्तो
ध्येयः सुवेद्य इह वेदशिरोभिरुक्तः ।
तत्प्रेमभक्तिरमलेन हृदा विधेया
मुक्तिः स्वयं भवति भक्तिमतां चतुर्द्धा ॥ ९३ ॥
यत्रास्ति वेदविदुषामपि संशयो वा
प्रयान्न तत्र सहसा गहनं विपश्चित् ।
वेदार्थ एवमपि यः सहसा ब्रवीति
सोऽधः पतत्यपि महान्वसुवद्दिविस्थः ॥ ९४ ॥

वेदोऽत्यगाधहृदयो महतां मुनीनां
यत्रास्ति संशय उदारधियां सुराणाम् ।
को वेद वेदहृदयं मितधीर्मनुष्यः
प्राहेति भावमिह वेदविदां वरिष्ठः ॥ ९५ ॥
हिंस्रः क्रतुर्भगवतो यजनैर्न कार्यो
वाचापि तादृशमखेऽनुमतिर्न देया ।
नो पक्षपातमनुसृत्य रहस्यमर्थं
ब्रूयाच्छ्रुतेरितरथा वसुवद् गतिः स्यात् ॥ ९६ ॥
देवैरगम्यमपि भागवतोऽतिरम्यं
स्थानं ह्युपैति भगवानपि तेन गम्यः ।
स्वीयं रहस्यमपि वक्ति हरिः स तस्मै-
भक्ताय नारदकथात्र हि मानमस्ति ॥ ९७ ॥
स्तुत्यो हरिः श्रुतिरहस्यविदानुरागात्
तुष्टो ददादि निजदर्शनमद्भुतं सः ।
दृष्टे हरौ हरिजनस्य न शिष्टमन्य
दित्याह नारदचरित्रमिषेण भावम् ॥ ९८ ॥
एको हरिर्निगमतः सगुणोऽगुणश्च
तद्भक्त एव हरितत्त्वमुपैति नान्यः ।
भक्त्या विना न समतीत्य गुणान् विमोक्षं
कश्चित्प्रयाति मुनिराह मुनेः कथायाम् ॥ ९९ ॥
यो वासुदेवपुरुषोत्तमशब्दवाच्यः
सङ्कर्षणः प्रकृतियोगत एष एव ।
प्रद्युम्न एष मनसा वपुषानिरुद्धः
तत्त्वं स एक उरुरूप इहावभाति ॥ २०० ॥
नानावतारचरितानि करोत्यकर्ता-
यः सर्वलोकहितमात्रपरोऽप्यसङ्गः ।
यः स्वे महिम्नि सततं स्थित आदरेण
ध्येयः स सेव्य उरुविक्रम एष कृष्णः ॥ २०१ ॥
आराधनीयहरिनामनिरुक्तितो यो-
ज्ञात्वा हरिं भजति भक्तिरसे निमग्नः ।

तस्मै हरिर्निजवपुः सकलं यथाव-
त्संदर्शयत्यपि सुखैकरसार्णवं च ॥ २ ॥
एवं हरेरमृतनामनिरुक्तितो यो
ज्ञात्वा भजेदयमशेषपुमर्थभाक् स्यात् ।
किं तत्सहस्रमवधानहृता भजेद्यो
मुक्तिं लभेत स च चित्रमिहास्ति लोके ॥ ३ ॥
भक्तिर्यथा हरिपदेऽस्ति तथैव तस्य
भक्तेषु विप्रगुरुशास्त्ररहस्यवित्सु ।
स्याद्यस्य तस्य हरिरात्मगतो विभाति
साक्षात्स्वयं प्रभुरुदारगुणैकधामा ॥ ४ ॥
मायाविनिर्मितरजस्तमसी जनानां
सम्भूय सत्त्वमभिभूय रहस्य शत्रून् ।
ते एव वेदमतसारहरे भवाब्धौ
पातैककारणतया खलु नाशनीये ॥ ५ ॥
तन्नाशको हरिपदाब्जरसानुरागः
सम्पादनीय इतरार्थविरागहेतुः ।
तत्साधनं श्रवणकीर्तनमुख्यमस्य
ध्यानं सदैव गुणकर्मविचारनिष्ठम् ॥ ६ ॥
यत्र प्रधानमतिसारतयास्य विष्णोः
सङ्कीर्त्तनं तदखिलं श्रुतिसाररूपम् ।
ग्राह्यं तदेव निगमात्मतया नचान्य
त्स्यात् पञ्चरात्रनिगमस्तवनेऽस्य भावः ॥ ७ ॥
यः सात्त्विकीं प्रकृतिमाप्य जनोऽभिजातः
स स्याद्धरौ सकलभावगतेन भक्तः ।
तं जन्मनैव हरिरात्मतयात्मसाद्वै
कुर्यान्न चेतररजस्तमआत्मभावम् ॥ ८ ॥
स्वीयं हरिस्त्यजति नो विलयेऽपि सृष्टौ
किन्तूत्तरोत्तरमहत्त्वमुदावहेत ।
व्यासं ह्यपान्तरतमं निजभावनिष्ठं
कृत्वेत्यदर्शि हरिणा स्वयमंशभावे ॥ ९ ॥

तत्त्वं हरिः श्रुतिमतं पुरुषार्थभूमि-
स्तत्रैव सर्वजगदीश्वरतावसेया ।
सर्वात्मना सकलसाधनसिद्धिरेषा
भक्तिर्भवेद्भगवतीश्वर आत्मनाथे ॥ १० ॥
इत्याशयं हृदि निधाय मुनिर्जगाद
नारायणीयचरितं निगमान्तसारम् ।
यस्मिञ्छ्रुते सकलदोषविलापनं स्या-
च्छ्र्याते मते हरिपदे रतिरद्भुता स्यात् ॥ ११ ॥
श्रीकृष्ण एव सकलात्मनिगूढतत्त्वं
जीवो न कश्चिदपरश्चिदणुर्विभुर्वा ।
तद्भक्तिरेव सुपुमर्थतयादरेण
कार्येति भेददलने स जगौ मुनीन्द्रः ॥ १२ ॥
वैराग्यभक्तिहरितत्त्वधियां प्रसूतिः
स्यात्सत्त्वशुद्धित उदारगुणप्रसूतेः ।
आहारशुद्धित उदेति धियो विशुद्धिः
प्राहेति भावमिह साधन उञ्छवृत्तौ ॥ १३ ॥
यः स्याज्जितेन्द्रिय उदारगुणैर्विशिष्टः
श्रीकृष्णभक्त इतरत्र विरक्तचेताः ।
नास्त्याश्रमादिनियमो भवतो विमुक्तौ
तस्येति भावमपि तत्र जगौ मुनीन्द्रः ॥ १४ ॥
श्रीमन्मुकुन्दपदपद्मरसाशिषान्त-
र्भावेन तत्त्वविदुषा हरिणेरितेन ।
तात्पर्यमात्मधिषणानुसृतं विचार्य्य
श्रीमोक्षधर्म उचितं रचितं सुभक्त्या ॥ २१५ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारततात्पर्यप्रकाशे शान्तिपर्वणि मोक्षधर्मतात्पर्यप्रकाशः समाप्तिमगमत् ।

———

## अथ दानधर्मपर्वतात्पर्यप्रकाशः--१३ ।

श्रीकृष्णं सच्चिदानन्दं ज्ञेयं ध्येयार्च्यविग्रहम् ।
वन्दे वेदान्ततात्पर्यं भक्तवत्सलमद्भुतम् ॥ १ ॥

सर्वसाधनसंपन्नोऽध्यात्मतत्त्वविचारवान् ।
इष्टदुःखनिवृत्यर्थं ध्यानं कुर्याद्धरेः सदा ॥ २ ॥
तद्ध्यानार्थं मुनिः प्राह धर्मान्नानाविधान् शुभान् ।
पूर्वं तावन्महानार्थकर्तृत्वाभिमतिं नृणाम् ॥
मुनिस्त्याजयितुं प्राह गौतमीवृत्तमद्भुतम् ॥ ३ ॥
देहेन्द्रियादिसंघातः प्रयोज्यस्तत्प्रयोजकम् ।
कर्म तद्धेतुरज्ञानमहङ्कारादिरूपधृक् ॥ ४ ॥

कर्तृत्वं नैव कुत्रापि बुधो मन्येत कर्मसु-
यतो दुःखकरः कर्माभिमानः सर्वदेहिनाम् ॥ ५ ॥

फलभोगदशायां तु प्रारब्धस्य बुधः क्वचित् ।
दोषं नैवार्पयेदित्थं गौतम्याख्यानकाशयः ॥ ६ ॥

गृहस्थोऽतिथिभक्त्यैव मृत्युं जयति नित्यशः ।
अतिथिः पूजनीयोऽतः सुदर्शनवदेव च ॥ ७ ॥
न ब्राह्मण्यं क्षत्रियैर्वै तपः कोट्यापि लभ्यते ।
विश्वामित्रस्य तत्प्राप्तिर्मात्रा ब्रह्मौदनाशनात् ॥ ८ ॥
दुष्प्राप्यमपि विप्रत्वमानृशंस्यं विना वृथा ।
आनृशंस्यं परो धर्मः शुकवच्च समाचरेत् ॥ ९ ॥
दैवमूलमपीदं हि समस्तं पौरुषादृते ।
न सिध्यति ततोऽवश्यं पौरुषं यत्नवान्भवेत् ॥ १० ॥
अद्विषन् गौतमीं वाणीं ज्ञात्वा दुःखं स्वदोषजम् ।
दत्वापि दारानतिथीन्सुदर्शन इवार्चयन् ॥ ११ ॥
ब्राह्मण्यं दुर्लभं जानन्विश्वामित्रनिदर्शनात् ।
आनृशंस्यं परो धर्म इति यः शुकवत्स्थितः ॥ १२ ॥
दैवेन रक्ष्यते देह इति धर्मेऽतियत्नवान् ।
धर्माधिकारी षट्सूक्तो धर्मोऽथ मुनिनोच्यते ॥ १३ ॥

धर्मादेव सुखी लोके सर्वभोगान्समश्नुते ।
तस्माद्धर्मांश्चरेद्विद्वानित्याह भगवान्मुनिः ॥ १४ ॥
तपो वेदनिधानत्वाद् ध्येयं श्रेयं हरिप्रियाः
ब्राह्मणाः सर्वदा सर्वैः पूज्याः स्युर्मुनिरब्रवीत् ॥ १५ ॥
ब्राह्मणो दानपात्रं हि तस्मै देयं प्रतिश्रुतम् ।
अददद्वानरो वास्याच्छृगालो वेति चाब्रवीत् ॥ १६ ॥
लोभाद्वा कृपया वापि नीचायोपदिशेन्नहि ।
वैदिकं धर्मगुह्यं तत्कुर्वतस्तपसः क्षयः ॥ १७ ॥
स्वाचाराद् धार्मिका लक्ष्मीं लभन्ते धर्मचारिणीम् ।
निष्कामाः श्रीपतिं चापि तद्भक्त्येत्यवदन्मुनिः ॥ १८ ॥
कामिन्या अधिकं कामसुखं स्यात्पुमपेक्षया ।
पुमान्स्त्रीभावमापद्य न पुंस्त्वं लभते पुनः ॥ १९ ॥
तच्च कामसुखं विद्वानुपेक्ष्य हरिमाश्रयेत् ।
मनोवाक्कायजं दोषं निरस्येत्यब्रवीत्पुनः ॥ २० ॥
अशुभानि परित्यज्य शुभान्याचरता विदा ।
आराध्यो हरिरीशो वा द्वयोरेकः स्वरूपतः ॥ २१ ॥
विष्णुतत्त्वं शिवो वेत्ति शिवतत्त्वं हरिस्तथा ।
नान्यो वेत्ति द्वयोर्यस्मादीश्वरत्वं समं श्रुतम् ॥ २२ ॥
लोकानां शिक्षणार्थाय श्रीकृष्णशिवयोर्द्वयोः ।
उपास्योपासकत्वं हि दर्शितं मुनिना स्फुटम् ॥ २३ ॥
न विनानन्यभावेन स्यादुपास्तिर्दृढा यतः ।
कर्त्तव्योऽनन्यभावोऽत उपमन्योरिवेश्वरे ॥ २४ ॥
को गुणान्वक्तुमीशः स्याच्छंभोरद्वैतभावतः ।
तथाप्यात्मविशुद्ध्यर्थं जपेन्नामसहस्रकम् ॥ २५ ॥
शिवस्य यानि नामानि तान्येव श्रीहरेरपि ।
श्रीहरेर्यानि नामानि तानि शम्भोरिहाब्रवीत् ॥ २६ ॥
सर्वाराध्यो महादेवः सुपुमर्थफलप्रदः ।
इत्याह भगवान्व्यासो मेघवाहनपर्वणि ॥ २७ ॥
ईश्वराराधने योषित्कामः स्यात्प्रतिबन्धकः ।
अष्टावक्रकथाव्याजान्निन्दिताः खलु योषितः ॥ २८ ॥

श्रद्धापूतोऽपि सत्पात्रं हव्ये कव्ये च संश्रयेत् ।
विद्यया तपसा पात्रं भवेदित्यपि वर्णितम् ॥ २९ ॥
यथोक्तधर्मकरणात्स्वर्गः सुकृतिनामपि ।
अधर्मकरणात्पुंसां नरकः स्यादिति ध्रुवम् ॥ ३० ॥
दरिद्राणां मखाशक्तेस्तीर्थसेवा महाफला ।
तत्रापि जाह्नवीसेवाऽत्यन्तश्रेष्ठेति चाब्रवीत् ॥ ३१ ॥
ब्राह्मण्यं दुर्लभं लोके तत्प्राप्य न विनाशयेत् ।
क्षुद्रकामनयेत्येवमतङ्गकथयाब्रवीत् ॥ ३२ ॥
तपसा देवभावोऽपि लब्धुं शक्यो न विप्रता ।
सा लब्धा यत्नतो रक्ष्येत्येवं तत्रैव दर्शितम् ॥ ३३ ॥
सामर्थ्यं ब्राह्मणस्यैतद्यद्दुष्प्राप्यमशेषतः ।
लभ्यते क्षत्रियाद्यैर्वा वीतहव्यकथाशयः ॥ ३४ ॥
वेदज्ञाः साधवः शान्ताः स्वाचाराः समदर्शिनः ।
दातारो निस्पृहा दक्षाः पूज्या एतादृशा द्विजाः ॥ ३५ ॥
शरणागतरक्षार्थं हेयो देहोऽपि देहिना ।
किमुतार्थादिरित्याह वृषदर्भप्रशंसने ॥ ३६ ॥
सर्वानुष्ठानतो विप्रभक्तिरेव गरीयसी ।
पुमर्थसाधकत्वात्स्यादेवं भूयो मुनिर्जगौ ॥ ३७ ॥
मुमुक्षुभिर्न विश्वास्याः कामिन्यो नेति केवलम् ।
किंतु कामिभिरप्यत्र निन्दिता दोषशंसने ॥ ३८ ॥
न स्त्रियो रक्षितुं शक्याः केनचिद् दोषसंयुताः ।
विना योगेन चेत्याह विपुलाख्यानतो मुनिः ॥ ३९ ॥
असङ्गस्यापि योगेन मातुः स्पर्शादनागसः ।
मुनेरपि भवेद्दोषो महानित्यत्र चाब्रवीत् ॥ ४० ॥
न मां कश्चिद्विजानीत इति कृत्वा न विश्वसेत् ।
नरो रहसि पापं चेत्यपि तत्रावदन्मुनिः ॥ ४१ ॥
दिक्कालाद्यभिमानिन्यो देवताः साक्षिणो यतः ।
सर्वस्यापि च सर्वत्र पुण्यपापादिकर्मसु ॥ ४२ ॥
प्रवृत्तधर्मो दुर्ज्ञेयो बह्वायासोऽल्पकः फले ।
निवृत्तः प्राश्रयेत्तस्मादिति वैवाहिके ब्रवीत् ॥ ४३ ॥

आनृशंस्यं परो धर्मो गवां माहात्म्यमद्भुतम् ।
सतां सर्वशरण्यत्वं दृष्टं तच्च्यवने मुनौ ॥ ४४ ॥
विप्रभक्तिमतो वंशे दिव्यब्राह्मणसंभवः ।
नासाध्यं तपसः किंचिदित्येवं कौशिके जगौ ॥ ४५ ॥
ब्राह्मणास्यापि रामस्य क्रौर्यं यत्क्षत्रियस्य च ।
विश्वामित्रस्य विप्रत्वं नहुषेः सत्यकामतः ॥ ४६ ॥
भोगस्वर्गापवर्गाणां हेतुर्द्धर्मो यथापथम् ।
स च निष्कामतः कार्य इत्युक्तं दाननिर्णये ॥ ४७ ॥
यो भूकनकवार्यन्नशय्यागृहसुखान्यपि ।
पात्रे देयानि वस्तून्यवश्यमित्याह तत्स्तवे ॥ ४८ ॥
श्राद्धं सच्छ्रद्धया युक्तं पितॄणां मोक्षसिद्धये ।
कार्यं तत्सर्वथासद्भिरित्याह श्राद्धनिर्णये ॥ ४९ ॥
स्वधर्मस्थो निषिद्धात्तु निवृत्तः कुप्रतिग्रहात् ।
पराङ्मुख उदारोऽयं बिसस्तैन्य इतीरितम् ॥ ५० ॥
निषिद्धं वर्जयन् धर्मं कुर्वन्विहितमादरात् ।
पुमर्थभाक्त्वं नान्यथा पुष्करस्तैन्य आशयः ॥ ५१ ॥
अहो ब्रह्मर्षितपसो महात्म्यं यत्प्रभाकरः ।
वंशे तिष्ठति विप्रस्येत्याह छत्रादिसंभवे ॥ ५२ ॥
गृहस्थेन सदा कार्याः पञ्चयज्ञा यथाविधि ।
अन्यथा निन्दितो दुःखीहामुत्रेति मुनिर्जगौ ॥ ५३ ॥
देवपूजा सदा कार्या पुष्पधूपादिभिर्विदा ।
भगवद्भक्तिहेतुत्वाच्छ्रद्धयेति मुनेर्मतम् ॥ ५४ ॥
अहंकारो न कर्तव्यः पूजानिष्ठेन कर्हिचित् ।
अहंकारेण सर्पोऽभून्नहुषो हीन्द्रतां गतः ॥ ५५ ॥
ब्राह्मणा नापमन्तव्याः प्राप्यापीन्द्रपदं जनैः ।
नहुषः पातितः स्वर्गादवज्ञातैर्द्विजैर्यतः ॥ ५६ ॥
ब्रह्मस्वं नैव हर्तव्यं ब्रह्मस्वं दुर्जरं विषम् ।
तद्धरन्नेति नीचत्वं लेशेनापीति चाब्रवीत् ॥ ५७ ॥
ब्रह्मस्वं ब्रह्मलोकेऽपि गतस्याहो न जीर्यति ।
हस्तिकूटे मुनिः प्राह लोकानन्त्यं शुभे कृते ॥ ५८ ॥

सर्वभोगपरित्यागाद्धोगैर्ब्राह्मणतर्पणात् ।
गतो भगीरथो ब्रह्मलोकमित्याह तत्स्तवे ॥ ५९ ॥
आचारो धर्ममूलं स्यादाचारः शिष्टसेवितः ।
आयुषो मूलमाचारः सदा सेव्यः स हीत्यपि ॥ ६० ॥
मर्यादापालनीयास्यात्सद्भिः सर्वत्र शास्त्रतः ।
ज्येष्ठेन वा कनिष्ठेन गुरुशिष्यवदित्यपि ॥ ६१ ॥
स्वस्ववर्णानुसारेण तपः कार्यं मनीषिभिः ।
नान्योऽप्यन्यस्य विहितमुपवासविधाविति ॥ ६२ ॥
यज्ञैर्यत्साध्यते पुण्यं धनाढ्यैस्तद्दरिद्रिभिः ।
उपवासव्रतैः साध्यमित्याह व्रतनिर्णये ॥ ६३ ॥
भावशुद्धिः परं शौचं ब्रह्मज्ञानं परं ततः ।
न ततः परमन्यत्स्यादिति शौचविधौ जगौ ॥ ६४ ॥
भगवद्भक्तिनिष्ठत्वाद् द्वादशीव्रतमुत्तमम् ।
नोपवासः परस्तस्माद्भक्तानामिति निश्चयः ॥ ६५ ॥
सर्वोपवाससारत्वाद् द्वादशीव्रतमादरात् ।
कार्यं भक्तैः सकामैस्तु नानाविधतपः पृथक् ॥ ६६ ॥
विरज्य सर्वभोगेभ्यो ज्ञात्वा तत्त्वमथात्मनः ।
गतागतमनर्थत्त्वात्पुण्यपापफलं तथा ॥ ६७ ॥
हेयत्वेन परिज्ञाय त्यक्त्वा सर्वं विवेकतः ।
परं पदं हि गन्तव्यमित्याहात्र बृहस्पतिः ॥ ६८ ॥
हित्वा निषिद्धमाचारमनुष्ठेयं स्वधर्मतः ।
वैदिकं कर्म सारं हीत्युक्तं संसारचक्रके ॥ ६९ ॥
अहिंसा परमो धर्म इति बुध्वा न भक्षयेत् ।
मांसं धर्मपरः प्राज्ञः प्राह मांसविवर्जने ॥ ७० ॥
सर्वत्र सर्वदा जीवो मृत्योरुद्विजते यतः ।
सत्सङ्गतोऽपवर्गाप्तिरिति कीटकथानके ॥ ७१ ॥
तपो विद्या तथा दानं त्रयं मोक्षफलप्रदम् ।
पात्रे श्रद्धानयोपेतं दानं मोक्षकरं भवेत् ॥ ७२ ॥
तपो निःश्रेयसं जन्तोरकामहतमुत्तमम् ।
विद्यात्मानुभवाच्छ्रेष्ठा मुक्तिदा भववारिधेः ॥ ७३ ॥

देशकालविशेषेण अयमेतदनुत्तमम् ।
इति मैत्रेयभिक्षायां स्वयं व्यासो जगाद ह ॥ ७४॥
पतिशुश्रूषया नारी मुक्तिमेति महार्णवात् ।
सुमनाः शाण्डिलीवादे स्त्रीणां धर्मं मुनिर्जगौ ॥ ७५ ॥
अनात्मचिन्ता दुःखाय सामोपायो महान्मतः ।
जीनवने हेतुरित्याह हरिणीकृशके मुनिः ॥ ७६ ॥
देवर्षिपितृभूतेशमुख्यैर्धर्मोऽप्यनन्यथा ।
मतोऽनुष्ठेय इत्याह मुनिर्धर्मरहस्यके ॥ ७७ ॥
आहारशुद्धेर्धीशुद्धिरत आहारशोधनम् ।
कृतं तथैवानुष्ठेयं भोज्याभोज्य इतीरितम् ॥ ७८ ॥
कृते प्रतिग्रहे पश्चात्प्रायश्चित्तं चरेद्बुधः ।
धीशुद्ध्यर्थमिति प्राह प्रायश्चित्तविधौ मुनिः ॥ ७९ ॥
देशकालानुरोधेन धर्मं कृत्वा पुराविदः ।
बहवो मोक्षमापन्ना इत्युदाहरणैर्जगौ ॥ ८० ॥
धर्मादर्थाद्भयात्कामात्कारुण्यादिति पञ्चधा ।
दानमित्याह तच्चिह्नैः सर्वेषां हितकाम्यया ॥ ८१ ॥
एक एव प्रभुर्लोके भगवान्हरिरव्ययः ।
स एव वैष्णवैर्विष्णुः शैवैः शिव इतीष्यते ॥ ८२ ॥
गिरिं हिमालयं कृष्णो दग्ध्वा भूयोऽप्यजीवयत् ।
तथा रुद्र इदं दृष्टमुभयोरेकरूपतः ॥ ८३ ॥
ब्रह्माण्डस्य शिवस्याप्यभेदस्तत्रैव निश्चितः ।
शिवस्यालौकिकी लीला कर्तृत्वमपि दर्शितम् ॥ ८४ ॥
निष्कामधर्मानुष्ठानाद्भक्तिर्वै साम्यसंयुता ।
जायते तत्त्वविज्ञानं जनयन्ती स्वभावतः ॥ ८५ ॥
कृष्ण एव परं तत्त्वं न ततः परमण्वपि ।
ध्येयो ज्ञेयः समर्च्यश्च स इत्याह शिवः स्वयम् ॥ ८६ ॥
सर्वशास्त्ररहस्यत्वात्सर्वदेवमहेश्वरः ।
श्रीकृष्णः परमं तत्त्वं ध्येयमित्याह भीष्मगीः ॥ ८७ ॥
सर्वधर्माप्तिहेतुत्वात्सर्वसारमयत्वतः ।
सुपुमर्थनिदानत्वात्तस्य नामसहस्रकम् ॥ ८८ ॥

जपेदर्थमभिज्ञाय तेन तुष्टो हरिः स्वयम् ।
रतिं नैसर्गिकीं स्वस्मिन्ददाति सुपुमर्थकाम् ॥ ८९ ॥
यद्यद्विभूतिमल्लोके तत्तद्विष्णुमयत्वतः ।
जपेद्भारतसावित्रीं सर्वसारप्रबोधिनीम् ॥ ९० ॥
प्रादुर्भावो हरेर्यत्र देवर्षिप्रमुखं जगत् ।
तज्जपेत्सर्वसिद्ध्यर्थं सावित्रीकीर्तनाशयात् ॥ ९१ ॥
तत्रापि ब्राह्मणा ब्रह्मतत्त्वनिष्ठाः सुधार्मिकाः ।
मान्याः पूज्या इति प्राह ब्राह्मणानां प्रशंसने ॥ ९२ ॥
योगिनां तत्त्वनिष्ठानां ब्राह्मणानां तपस्विनाम् ।
नासाध्यं जगतीत्याह वाय्वर्जुनसमागमे ॥ ९३ ॥
वेदस्य ब्राह्मणानां च तात्पर्यं च दिवौकसाम् ।
भगवान्कृष्ण इत्याह वासुदेवप्रशंसने ॥ ९४ ॥
धर्मगोप्ता सतां भर्ता शिवात्मा परमं पदम् ।
सर्वज्ञः कृष्ण इत्याह महेश्वरप्रशंसने ॥ ९५ ॥
यः शिवः स च वै कृष्णो यः कृष्णः शिव एव सः ।
इत्यप्यनुपदं भावं भासयत्येष सन्मुनिः ॥ ९६ ॥
श्रुतिमानं सदाचारं स्वानुभूतिं विवेकतः ।
विनिश्चित्य परं वेत्ति मतं कृष्णप्रसादतः ॥ ९७ ॥
विना कृष्णकृपालेशं न जानीते परं पदम् ।
रहस्यं सर्ववेदानां जन इत्यब्रवीन्मुनिः ॥ ९८ ॥
प्रमाणनिर्णयेनैव शान्तिं ब्रह्मधियं तथा ।
प्राप्नोति पुरुषो वृद्धसेवनात्कृष्णभक्तितः ॥ ९९ ॥
शास्त्रेण धर्मनियमः कृतस्तत्सेवनाज्जनः ।
मुच्यते नान्यथेत्याह भीष्मो धर्मसुतं प्रति ॥ १०० ॥
ये भजन्ति हरिं तेषां भजनं लोककर्तृकम् ।
भवेत्सर्वहितं पुंसामित्युक्तं वंशकीर्तने ॥ १०१ ॥
भगवत्तत्त्वनिष्ठस्य भगवद्रूपचिन्तनात् ।
भगवानेव साक्षात्स्यान्नेत्रगः सन्निधौ मृते ॥ २ ॥
अहो श्रीभगवद्भक्तेर्माहात्म्यं सर्वसम्मतम् ।
अन्तकालेऽपि यद्भीष्मो लब्धवान्कृष्णसन्निधिम् ॥ ३ ॥

वेदसिद्धान्तवक्तृत्वमाचार्यत्वमनुत्तमम् ।
प्राप्य कृष्णप्रसादेन कृष्णैकत्वमवाप ह ॥ ४ ॥
ज्ञानवैराग्यपाथोऽब्धिं भक्तिभाजं हरेः प्रियम् ।
वन्दे भीष्ममहं साक्षाद्वेदविग्रहमादरात् ॥ १०५ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारततात्पर्यप्रकाशे दानधर्मतात्पर्यप्रकाश त्रयोदशः समाप्तिमगमत् ।

---

ऋषय ऊचुः ।

**पिनाकिन्भगनेत्रघ्न सर्वलोकनमस्कृत ।**
**महात्म्यं वासुदेवस्य श्रोतुमिच्छामि शङ्कर ॥ १ ॥**

महेश्वर उवाच ।

**पितामहादपि वरः शाश्वतः पुरुषो हरिः ।**
**कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य इवोदितः ॥ २ ॥**

हृषीकेशं नमस्कृत्य दानधर्मरहस्यकम् ।
व्यासोक्तं लिख्यते सारोद्धारग्रन्थविवेचने ॥ १ ॥

आदिपर्वारभ्य प्रतिपाद्यत्वेन सर्वस्मिन्भारते श्रीकृष्ण एव परमप्रमेयतया वर्णितस्तत्र तत्राच्र्यध्येयज्ञेयत्वेन तस्यैव तत्त्वं सर्ववेदान्तरहस्यभूतं जिज्ञासवो मुनयो महादेवं पप्रच्छुरिति वदन्नाह व्यास ऋषय ऊचुरिति ।

भगवतस्तत्त्वं भगवानेव जानातीति पिनाकिन्नित्यादिविशेषणभूतसंबोधनचतुष्टयेन दर्शितं वासुदेवस्य माहात्म्यं स्वयं प्रकाशस्य सर्वव्यापिनो देवस्यापरिच्छिन्नं प्रभावं तदुपास्तिज्ञानादिसिद्धये सम्यगवधारयितुमिच्छाम इत्यर्थः ॥ १ ॥

इत्येवं पृष्टो भगवद्भक्तिसिद्धये भगवत्तत्त्वं वर्णयति भगवान् रुद्र इत्याह महेश्वर उवाचेति ।

सर्वजगत्स्रष्टुः पितामहादपि तज्जनकत्वेश्वरत्वगुरुत्वात्मत्वादिना वरः उपास्यतयाऽत्यन्तश्रेष्ठः तत्र हेतुः शाश्वत इति ब्रह्मणो द्विपरार्द्धमात्रकाला-

वस्थायितया तदधिष्ठानभूतो हरिर्नित्यस्थायीत्यर्थः। तत्रापि हेतुः पुरुष इति पूर्णत्वादेव कालादिपरिच्छेदशून्य इत्यर्थः हरिर्ब्रह्मादिसङ्कटहरणैकशीलः एवंविशेषणविशिष्टः कृष्णः सदानन्दरूपो हरिरुपास्य इत्यर्थः ॥ २ ॥

**दशबाहुर्महातेजा देवतारिनिषूदनः ।**
**श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ॥ ३ ॥**
**ब्रह्मा तस्योदरभवस्तस्याहं च शिरोभवः ।**
**शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः ॥ ४ ॥**
**ऋषयो देहसंभूतास्तस्य लोकाश्च शाश्वताः ।**
**पितामहगृहं साक्षात्सर्वदेवगृहं च सः ॥ ५ ॥**
**सोऽस्याः पृथिव्याः कृत्स्नायाः स्रष्टा त्रिभुवनेश्वरः ।**
**संहर्ता चैव भूतानां स्थावरस्य चरस्य च ॥ ६ ॥**
**स हि देववरः साक्षाद्देवनाथः परन्तपः ।**
**सर्वज्ञः सर्वसंश्लिष्टः सर्वगः सर्वतोमुखः ॥ ७ ॥**

दशबाहुरिति वचनाद्दशभुजत्वमपि भगवतोऽस्तीति गम्यते । यद्वा दशः पक्षी विहङ्गम इति निघण्टुः गरुडो हि दैत्यसंहारसमये भगवद्बाहुवद्व्यवहरतीति यद्वा गरुडगर्वविध्वंसनार्थं तस्मिन्कृतो बाहुर्येन स चेत्यर्थः ॥ ३ ॥

ब्रह्मादिजनकत्वेन भगवत्तत्त्वं वर्णयति ब्रह्मेति ॥ ४—५ ॥

अस्मदादिकर्मापि तस्यैव कर्मेति नास्मदादीनां स्रष्टृत्वसंहर्तृत्वादौ स्वातन्त्र्यमित्याह स इति ॥ ६ ॥

इदानीं कण्ठरवेण तस्यैवाच्यध्येयज्ञेयरूपत्वं विशदयति सहीति। देववरत्वेन सर्वत्र पूज्यत्वं तस्यैवेत्यर्थः साक्षाद्देवनाथत्वेन तस्यैव ध्येयत्वं सर्वज्ञादिपदैः सर्ववित्त्वसर्वाधिष्ठानत्वसर्वव्यापकत्वसर्वात्मत्वरूपेण तस्यैव वेदान्तवेद्यत्वमित्यर्थः ॥ ७ ॥

**परमात्मा हृषीकेशः सर्वव्यापी महेश्वरः ।**
**न तस्मात्परमं भूतं त्रिषु लोकेषु किंचन ॥ ८ ॥**

सनातनो वै मधुहा गोविन्द इति विश्रुतः ।
स सर्वान् पार्थिवान्संख्ये घातयिष्यति मानदः ॥ ९ ॥
सुरकार्यार्थमुत्पन्नो मानुषं वपुरास्थितः ।
नहि देवगणाः शक्तास्त्रिविक्रमविना कृताः ॥ १० ॥
भवने देवकार्याणि कर्तुं नायकवर्जितः ।
नायकः सर्वभूतानां सर्वभूतनमस्कृतः ॥ ११ ॥

तत्त्वमसीत्यादिमहावाक्येषु स एव तत्पदार्थो वाच्यलक्ष्यरूपेण प्रतिपाद्य इति मनसि निधाय तद्विभज्य दर्शयति ।

परमात्मेति लक्ष्यनिर्देशः ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर इति ॥

"मायां तु प्रकृतिं विद्धि मायिनं तु महेश्वरमि"ति श्रुतेः ।

हृषीकेश इत्यन्तर्यामिनिर्देशः "यो विज्ञाने तिष्ठन्नि"त्यादिश्रुतेः सर्वव्यापीति सर्वात्मत्वनिर्देशः "सर्वं खल्विदं ब्रह्मे"ति श्रुतेः तथा च कृष्ण एव सर्ववेदान्ततात्पर्यमिति भावः एतदेवोपपादयति नेति ॥ ८ ॥

य एव वेदान्तेषु सनातन इति प्रसिद्धः स एव ब्रह्मणो रक्षार्थं मधुनामानं दानवं निहत्य मधुहेति विश्रुतः स एव गवामाधिपत्येऽभिषिक्तो गोविन्द इति विश्रुत इति योजना ॥ ९ ॥

सर्वदेवाधिदेवत्वमपि तस्यैवेत्याह सुरकार्यार्थमिति ।

सर्वशक्तित्वमपि तस्यैवेत्याह नहीति । तथा च सर्वदेवेश्वरत्वसर्वशक्तित्वादिगुणैः स एव सर्वेषामुपास्य इति भावः । उपास्यगुणान्विवृणोति नायक इत्यारभ्याध्यायसमाप्तेः लीलाविग्रहस्यैव प्रायो गुणा वर्णिता तथा कर्माणि तेन श्रीकृष्ण एवैवंगुणकर्मविशिष्टः सर्वेषां सर्वत्र सर्वदोपास्य इत्युक्तम् अक्षरार्थस्तु निगदव्याख्यात इति नेह यत्यते ॥ १०—११ ॥

एतस्य देवनाथस्य देवकार्यपरस्य च ।
ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च ॥ १२ ॥

ब्रह्मा वसति गर्भस्थः शरीरे सुखसंस्थितः ।
शर्वः सुखं संश्रितश्च शरीरे सुखसंस्थितः ॥ १३ ॥
सर्वाः सुखं संश्रिताश्च शरीरे तत्र देवताः ।
स देवः पुण्डरीकाक्षः श्रीगर्भः श्रीसहोषितः ॥ १४ ॥
शार्ङ्गचक्रायुधः खड्गी सर्वनागरिपुध्वजः ।
उत्तमेन स शीलेन शौचेन च दमेन च ॥ १५ ॥
पराक्रमेण वीर्येण वपुषा दर्शनेन च ।
आरोहणप्रमाणेन धैर्यणार्जवसंपदा ॥ १६ ॥
आनृशंस्येन रूपेण बलेन च समन्वितः ॥ १७ ॥
अस्त्रैः समुदितः सर्वैर्दिव्यैरद्भुतदर्शनैः ।
योगमायः सहस्राक्षो निरपायो महामनाः ॥ १८ ॥
वीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः ।
क्षमावांश्चानहंवादी ब्रह्मण्यो नायकोऽपि च ॥ १९ ॥
भयहर्ता भयार्तानां मित्राणां नन्दिवर्धनः ।
शरण्यः सर्वभूतानां साधूनां पालने रतः ॥ २० ॥
श्रुतवानर्थसंपन्नः सर्वभूतनमस्कृतः ।
समाश्रितानां वरदः शत्रूणामपि धर्मवित् ॥ २१ ॥
नीतिज्ञो नीतिसंपन्नो ब्रह्मवादी जितेन्द्रियः ।
भावार्थमिह देवानां बुद्ध्या परमया युतः ॥ २२ ॥
प्राजापत्ये शुभे मार्गे मानवे धर्मसंस्कृते ।
समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्मनः ॥ २३ ॥

दाता ब्राह्मणसत्कर्ता ब्रह्मभूतो द्विजप्रियः ।
राज्ञो मागधसंरुद्धान्मोक्षयिष्यति यादवः ॥ २४ ॥
जरासन्धं तु राजानं निर्जित्य गिरिगह्वरे ।
सर्वपार्थिवरत्नाढ्यो भवष्यति स सर्ववान् ॥ २५ ॥
पृथीव्यामप्रतिहतो वीर्येण च भविष्यति ।
विक्रमेण च संपन्नः सर्वपार्थिवपार्थिवः ॥ २६ ॥
शूरसेनेषु संभूत्वा द्वारकायां वसन्प्रभुः ।
पालयिष्यति गां देवीं विजित्य नयवित्सदा ॥२७॥
तं भवन्तः समासाद्य वाङ्माल्यैरर्हणैर्वरैः ।
अर्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतम् ॥ २८ ॥
यो हि मां द्रष्टुमिच्छेत्तु ब्रह्माणं च पितामहम् ।
द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान् ॥ २९ ॥
दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा ।
पितामहो वा देवेश इति वित्त तपोधनाः ॥ ३० ॥
स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ।
तस्य देवगणः प्रीतो ब्रह्मपूर्वो भविष्यति ॥ ३१ ॥
यश्च तं मानवो देवं संश्रयिष्यति केशवम् ।
तस्य कीर्त्तिर्जयश्चैव भविष्यति न संशयः ॥ ३२ ॥
धर्माणां देशकः साक्षात्स भविष्यति धर्मभाक् ।
धर्मविद्भिः स देवेशो नमस्कार्यः सदोद्यतैः ॥३३॥
धर्म एव परो हि स्यात्तस्मिन्नभ्यर्चिते विभौ ।
स हि देवो महातेजाः प्रजाहितचिकीर्षया ॥ ३४ ॥

धर्मार्थं पुरुषव्याघ्र ऋषिकोटीः ससर्ज ह ।
ताः सृष्टास्तेन विभुना पर्वते गन्धमादने ॥
सनत्कुमारप्रमुखास्तिष्ठन्ति तपसान्विताः । ३५ ॥
तस्मात् स वाग्मी धर्मज्ञो नमस्यो द्विजपुङ्गवाः ।
वन्दितो हि स वन्देत मानितो मानयीत च ॥ ३६ ॥
अर्हितश्चार्हयेन्नित्यं पूजितः प्रतिपूजयेत् ।
दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् ॥ ३७ ॥
अर्चितश्चार्चयेन्नित्यं स देवो द्विजसत्तमाः ।
एतदस्यानवद्यस्य विष्णोर्वै परमं व्रतम् ॥ ३८ ॥
आदिदेवस्य महतः सज्जनाचरितं सदा ।
भुवनेऽभ्यर्चितो नित्यं देवैरपि सनातनः ॥ ३९ ॥
अभयेनानुरूपेण पूज्यन्ते तमनुव्रताः ।
कर्मणा मनसा वाचा स नमस्यो द्विजैः सदा ॥४०॥
यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ।
एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः ॥४१॥
तं दृष्ट्वा सर्वशो देवं दृष्टाः स्युः सुरसत्तमाः ।
महावराहं तं देवं सर्वलोकपितामहम् ॥ ४२ ॥
अहं चैव नमस्यामि नित्यमेव जगत्पतिम् ॥ ४३ ॥
तत्र च त्रितयं दृष्टं भविष्यति न संशयः ।
समस्ता हि वयं देवास्तस्य देहे वसामहे ॥ ४४ ॥
एष वोऽनुग्रहः प्रोक्तो मया पुण्यस्तपोधनाः ।
यद्भवन्तो यदुश्रेष्ठं पूजयेयुः प्रयत्नतः ॥ ४५ ॥

ऋषयः संप्रहृष्टा जग्मुरेवं यथागमम् ।
तदद्भुतमचिन्त्यं च श्रुत्वा तत्रैव तत्पराः ॥ ४६ ॥

भीष्म उवाच ।

सोऽयं पुरुषशार्दूलो मेघवर्णश्चतुर्भुजः ।
संश्रितः पाण्डवान् प्रेम्णा भवन्तश्चैनमाश्रिताः ॥ ४७ ॥

यो हि मामित्यादिग्रन्थस्यायमभिप्रायः सर्वाधिष्ठानत्वं भगवतो वासुदेवस्य सर्वस्मिन्भारते प्रसिद्धमेव अतो भगवति दृष्टे सति सर्वस्यापि चेतनवर्गस्य जडवर्गस्य च दर्शनं सिद्धमिति कृष्ण एव सर्वोपायेन सेव्यो ध्येयो ज्ञेयश्चेति सिद्धान्तो विजयतेतराम् ॥ ११—४४ ॥

एवं भगवत्तत्त्वं शिवमुखेन प्रतिपाद्य स्वयं तदेव तत्त्वं प्रतिपादयति भीष्माचार्यः

स इति । यः पुरा शिवेन मुनीन्प्रति प्रतिपादितो भगवान्सोऽयमित्यङ्गुल्या निर्दिशति समीपस्थं हरिं प्रेमास्पदत्वेन भवन्तः पाण्डवा एनं भगवन्तं श्रीकृष्णमाश्रिताः शरण्यत्वेन स्वीकृतवन्तः भवतः पाण्डवान् निजभक्तत्वेन तथैवहरिः स्वीकृतवानिति योजना ॥ ४५—४७

कीर्त्तिर्लक्ष्मीर्धृतिश्चैव स्वर्गमार्गस्तथैव च ।
यत्रैव संस्थितस्तत्र देवो विष्णुस्त्रिविक्रमः ॥ ४८ ॥
सेन्द्रा देवास्त्रयस्त्रिंशदेष नात्र विचारणा ।
आदिदेवो महादेवः सर्वभूतप्रतिश्रयः ॥ ४९ ॥
अनादिनिधनोऽव्यक्तो महात्मा मधुसूदनः ।
अयं जातो महातेजाः सुराणामर्थसिद्धये ॥ ५० ॥
सुदुस्तरार्थतत्त्वस्य वक्ता कर्ता च माधवः ।
तव पार्थ जयः कृत्स्नस्तव कीर्त्तिस्तथातुला ॥ ५१ ॥
तवेयं पृथिवी देवी कृत्स्ना नारायणाश्रयात् ।
अयं नाथस्तवाचिन्त्यो यस्य नारायणो गतिः ॥५२॥

स भवांस्त्वमुपाध्वर्यू रणाग्नौ हूतवान्नृपान् ।
कृष्णस्रुवेण महता युगान्ताग्निसमेन वै ॥ ५३ ॥
जयो योगी युगान्ताभः सव्यसाची रणाग्रगः ।
तेजसा हतवान्सर्वं सुयोधनबलं हरिः ॥ ५४ ॥
कर्मणामस्य कौन्तेय नान्तं संख्यातुमुत्सहे ।
शाश्वतस्य पुराणस्य पुरुषस्य युधिष्ठिर ॥ ५५ ॥
ध्रुवं श्रेयः परं तात भविष्यति तवोत्तमम् ।
यस्य ते पुरुषव्याघ्रः सखा चायं जनार्दनः ॥ ५६ ॥

कृष्णः पृथिवीमसृजत्स्वं दिवं च
कृष्णस्य देहान्मेदिनी संबभूव ॥
वराहोऽयं भीमबलः पुराणः
सपर्वतानसृजद्वै दिशश्च ॥ ५७ ॥

सृष्टौ सर्वकारणत्वेनादिदेवः स्थितौ सर्वपालकत्वेन महादेवः संहारे सर्वभूतनिधनत्वेन सर्वभूतप्रतिश्रयः ॥ ४८—५७ ॥

अस्य चाधोऽथान्तरिक्षं दिवं च
दिशश्चतस्रो विदिशश्चतस्रः ।
सृष्टिस्तथैवेयमनुप्रसूता-
स निर्ममे विश्वमिदं पुराणम् ॥ ५८ ॥

अस्य नाभ्यां पुष्करं संप्रसूतं
यत्रोत्पन्नः स्वयमेवामितौजाः ।
येनाच्छिन्नंततमः पार्थ घोरं
पतति पृथिव्यर्णवं तर्जयानम् ॥ ५९ ॥

कृते युगे धर्म आसीत्समग्र-
स्त्रेताकाले ज्ञानमेव प्रयत्नः ।
बलं त्वासीद् द्वापरे पार्थ कृष्णः
कलावधर्मः क्षितिमाजगाम ॥ ६० ॥

स एव पूर्वं निजघान दैत्या-
न्स पूर्वदेवश्च बभूव सम्राट् ।
स भूतानां भावनो भूतभव्यः
स विश्वस्यास्य जगतश्चाभिगोप्ता ॥ ६१ ॥

यदा धर्मो ग्लाति वंशे सुराणां
तदा कृष्णो जायते मानुषेषु ।
धर्मे स्थित्वा स तु वै भावितात्मा
परांश्च लोकानपरांश्च पाति ॥ ६२ ॥

त्याज्यांस्त्यक्त्वथासुराणां बधाय
कार्याकार्ये कारणं चैव पार्थः ।
कृतं करिष्यन् क्रियते चैव देवो
राहुं सोमं विद्धि च शक्रमेनम् ॥ ६३ ॥

अस्य चाधः इति आकाशादेरप्युपर्युपर्ययमेवास्तीत्युक्तम् ॥ ५८ ॥

अर्णवं तर्जयानमित्यगाधत्वमपारत्वं चोक्तम् ॥ ५९ ॥

युगेषु धर्मतारतम्यमपि कृष्णकटाक्षप्रयुक्तमेवेत्याह कृत इति ज्ञानम् अकर्तव्यकोटेरप्युपस्थाना त्रेतायां विवेक आसीत् द्वापरे तु द्वितीयकोटेः साम्याद् बलं प्रधानमासीत् न धर्मः कलावधर्म एव बलवानिति भावः ॥ ६० ॥

स एव पूर्वदेव आदिदेवो दैत्यान्निजघान स एव सम्राट् बलिरूपः पूर्वदेवो दैत्यो बभूव ॥ ६१ ॥

ग्लाति ग्लायति ॥ ६२ ॥

एनमेव सर्वात्मतया राहुं सोमं शक्रं च विद्धि ॥ ६३ ॥

स विश्वकर्मा स हि विश्वरूपः
स विश्वभुग् विश्वसृग्विश्वजिच्च ।
स शूलभृच्छोणितभृत्कराल
स्तं कर्मभिर्विदितं वै स्तुवन्ति ॥ ६४ ॥
तं गन्धर्वाणामप्सरसां च नित्य
मुपतिष्ठन्ते विबुधानां शतानि ।
तं राक्षसाश्च परिसंचरन्ति
रायस्पोषः स विजिगीषुरेकः ॥ ६५ ॥
तमध्वरे शंसितारः स्तुवन्ति
रथन्तरे सामगाश्च स्तुवन्ति ।
तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति
तस्मै हविरध्वर्यवः कल्पयन्ति ॥ ६६ ॥
ते घोषार्थं गीर्भिरिन्द्रा स्तुवन्ति
स चापीशो भारतैकः पशूनाम् ।
स पौराणीं ब्रह्मगुहां भविष्टो
महीसत्रं भारताग्रे ददर्श ॥ ६७ ॥
स चैव गामुज्जहाराग्र्यकर्मा
विक्षोभ्य दैत्यानुरगान्दानवांश्च ।
तस्य भक्षान्विविधान्वेदयन्ति
तमेवाजौ वाहनं वेदयन्ति ॥ ६८ ॥
तस्यान्तरिक्षं पृथिवी दिवं च
सर्वं वशे तिष्ठति शाश्वतस्य ।

स कुम्भरेतः ससृजे सुराणां
यत्रोत्पन्नमृषिमाहुर्वसिष्ठम् ॥ ६९ ॥
स मातरिश्वा विभुरश्ववाजी
स रश्मिवान्सविता चादिदेवः ।
तेनासुरा विजिताः सर्व एव
तद्विक्रान्तैर्विजितानीह त्रीणि ॥ ७० ॥

शोणितभृत् शरीरी ॥ ६४ ॥
रायो धनस्य पोषकः ॥ ६५ ॥

महीसत्रं पृथिव्याश्छादनं मज्जनमिति यावत् । सत्रं यज्ञे महादानाच्छादनारण्यकैतवे इति मेदिनी । घोषार्थं गोवर्द्धनोद्धरणकाले घोषोऽम्बुनादो वा वृष्ट्यर्थमित्यर्थः पशूनां जीवानां वा ॥ ६६—६७ ॥

वाहनं जयप्रापकम् ॥ ६८ ॥
सुराणां मित्रावरुणयोरेतः कुम्भे ससृजे ॥ ६९ ॥
विक्रान्तैः पादविक्षेपैः त्रीणि भुवनानि ॥ ७० ॥

स देवानां मानुषाणां पितॄणां
तमेवाहुर्यज्ञविदां वितानम् ।
स एव कालं विभजन्नुदेति
तस्योत्तरं दक्षिणं चायने द्वे ॥ ७१ ॥
तस्यैवोर्ध्वं तिर्यगधश्चरन्ति
गभस्तयो मेदिनीं भासयन्तः ।
तं ब्राह्मणा वेदविदो जुषन्ति
तस्यादित्यो भासया युज्य भाति ॥ ७२ ॥
समाप्तिमस्याध्वरकृद्विधत्ते
तमध्वरे वेदविदः पठन्ति ।

स एवोक्तश्चक्रमिदं त्रिणाभिः
 सप्नाश्च युक्तं वहते वै त्रिधाम ॥ ७३ ॥
महातेजाः सर्वगः सर्वसिंहः
 कृष्णो लोकान् धारयते यथैकः ।
हंसं तमोघ्नं च तमेव वीरं
 कृष्णं सदा पार्थ कर्तारमेहि ॥ ७४ ॥
य एकदा कक्षमतो महात्मा
 तुष्टो विभुः खाण्डवे धूमकेतुः ।
सराक्षसांस्तुरङ्गांश्चावजित्य
 सर्वत्रगः सर्वमग्नौ जुहोति ॥ ७५ ॥
स एव पार्थाय श्वेतमश्वं प्रयच्छ
 त्स एवाश्वानथ सर्वांश्चकार ।
सर्वधुरस्तस्य रथस्त्रिचक्र
 स्त्रिवृच्छिराश्चतुरश्वस्त्रिणाभिः ॥ ७६ ॥

देवानामस्येति शेषः ॥ ७१ ॥

जुषन्ति सेवन्ते ॥ ७२ ॥

विधत्ते अध्वरमित्यर्थात् त्रिनाभिः शीतोष्णवृष्टिकालगर्भं चक्रं संवत्सरं त्रिधामेति वर्षावातोष्णप्रकारम् ॥ ७३ ॥

हंसं सूर्यम् ॥ ७४ ॥

बन्धुरः संसाररथस्य योक्ता त्रिचक्रः सत्त्वरजस्तमोमयः त्रिवृच्छिरा ऊर्ध्वमध्याधोगतिफलः चतुरश्वः कालादृष्टेश्वरेच्छासङ्कल्पाश्चत्वारोऽश्वा यस्य त्रिनाभिः शुक्लं कृष्णं शुक्लकृष्णं च त्रिविधगर्भः ॥ ७५—७६ ॥

स विहाय व्यदधात् पञ्चनाभिः
 स निर्ममे गां दिवमन्तरिक्षम् ।

सोऽरण्यानि व्यसृजत्पर्वतांश्च
हृषीकेशोऽमितदीप्ताग्नितेजाः ॥ ७७ ॥
अलं च यद्वै सरितो जिघांसन्
शक्रं प्रहरन्तं निरासं स महेन्द्रः ।
स्तूयते वै महाध्वरे विप्रैरेको
स वै ऋक्सहस्रैः पुराणैः ॥ ७८ ॥
तमेवाहुर्ऋषिमेकं पुराणं
स विश्वकृद्विदधात्यात्मभावान् ।
वेदांश्च यो वेदयते स देवो
विधींश्च यश्चाश्रयते पुराणान् ॥ ७९ ॥
कामे वेदे लौकिके यत्फलं च
विष्वक्सेनः सर्वमेतत्प्रतीहि ।
ज्योतींषि शुक्लानि हि सर्वलोके
त्रयो लोकाः लोकपालास्त्रयश्च ॥ ८० ॥
त्रयोऽग्नयो व्याहृतयश्च तिस्रः
सर्वे देवा देवकीपुत्र एव ।
संवत्सरः स ऋतुः सोऽर्द्धमासः
सोऽहोरात्रः सकला वै स काष्ठाः ॥ ८१ ॥
मात्रा मुहूर्ताश्च लवाः क्षणश्च
विश्वक्सेनः सर्वमेतत्प्रतीहि ।
चन्द्रादित्यौ ग्रहनक्षत्रताराः
सर्वाणि दर्शान्यथ पौर्णमासम् ॥ ८२ ॥

नक्षत्रयोगा ऋतवश्च पार्थ

विष्वक्सेनात्सर्वमेतत्प्रसूतम् ॥ ८३ ॥

रुद्रादित्या वसवोऽथाश्विनौ च

साध्याश्च विश्वे मरुतो गणाश्च ।

प्रजापतिर्देवमातादितिश्च

पर्वे कृष्णा दृढयश्चैव सप्त ॥ ८४ ॥

वायुर्भूत्वा विक्षिपते च विश्व

मग्निर्भूत्वा दहते विश्वरूपः ।

आपो भूत्वा मज्जयते च सर्वं

ब्रह्मा भूत्वा सृजते विश्वसंघान् ॥ ८५ ॥

पञ्चनाभिः पञ्चभूतानां नाभिराश्रय इत्यर्थः ॥ ७७ ॥

निरासं पराभूतवान् ॥ ७८ ॥

निधीन् अग्निहोत्रादिशास्त्रम् ॥ ७९—८५ ॥

वेद्यं च यद्वेदयते च वेद्यं

विधिश्च यस्य श्रयते विधेयम् ।

धर्मे च वेदे च बले च सर्वं

चराचरं केशवं त्वं प्रतीहि ॥ ८६ ॥

ज्योतिर्भूतः परमोऽसौ पुरस्ता

त्प्रकाशते यत्प्रभया विश्वरूपः ।

अपः सृष्ट्वा सर्वभूतात्मयोनिः

पुराकरोत्सर्वमेवाथ विश्वम् ॥ ८७ ॥

ऋतूत्पातान्विविधान्यद्भुतानि

मेघान् विद्युत्सर्वमैरावतं च ।

स वै कृत्स्नं स्थावरं जङ्गमं च
विश्वात्मानं विष्णुमेनं प्रतीहि ॥ ८८ ॥
विश्वावासं निर्गुणं वासुदेवं
सङ्कर्षणं जीवभूतं वदन्ति ।
ततः प्रद्युम्नमनिरुद्धं चतुर्थ
माज्ञापयत्यात्मयोनिर्महात्मा ॥ ८९ ॥
स पञ्चधा पञ्चजनोपपन्नं
स चोदयन्विश्वमिदं सिसृक्षुः ।
ततश्चकारावनिमारुतौ च
खं ज्योतिरम्भश्च तथैव पार्थ ॥ ९० ॥
स स्थावरं जङ्गमं चैवमेव
चतुर्विधं लोकमिमं च कृत्वा ।
ततो भूमिं व्यदधात्पञ्चबीजां
द्यौः पृथिव्यां धास्यति भूरि वारि ॥ ९१ ॥
अनेन विश्वं कृतमेतद्धि राजन्
स जीवयत्यात्मयोनिः प्रजा वै ।
ततो देवानसुरान् मानवांश्च
लोकानृषींश्चापि पितॄन्प्रजाश्च ॥ ९२ ॥
समासेन विधिवत्प्राणिलोका
न्सर्वान्सदा भूतपतिः सिसृक्षुः ।
शुभाशुभं स्थावरजङ्गमं च
विश्वक्सेनात्सर्वमेतत्प्रतीहि ॥ ९३ ॥

वेद्यं वेदप्रतिपाद्यं ज्ञेयम् ॥ ८६ ॥

अनिरुद्धमहङ्कारम् ॥ ८७—८९ ॥

पञ्चधा पञ्चप्रकारं देवासुरमानुषश्वापदतिर्यग्रूपेण पञ्चजनाः पञ्चभूतानि तैरुपपन्नं विश्वं सिसृक्षुराज्ञापयतीति पूर्वेणान्वयः ॥ ९० ॥

चतुर्विधं जरायुजा हि पञ्चबीजां चतुर्विधभूतग्रामः कर्म च तेषां बीजभूताम् ॥ ९१—९३ ॥

यद्वर्तते यच्च भविष्यतीह
सर्वं ह्येतत्केशवं त्वं प्रतीहि ।
मृत्युश्चैव प्राणिनामन्तकाले
साक्षात्कृष्णः शाश्वतो धर्मवाहः ॥ ८४ ॥

भूतं च यच्चेह न विद्म किञ्चि-
द्विष्वक्सेनः सर्वमेतत्प्रतीहि ॥
यत्प्रशस्तं च लोकेषु पुण्यं
यच्च शुभाशुभं तत्सर्वकेशवो ।
ऽचिन्त्योविपरीतमतः परम् ॥ ८५ ॥

एतादृशः केशवोऽतश्चभूयो
नारायणः परमश्चाव्ययश्च ।
मध्यान्तोऽस्य जगतस्तस्थुषश्च
सम्बुभूषता प्रभवश्चाव्ययश्च ॥ ८६ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषि सदानन्दविद्वत्कृते भारतसारोद्धारे दानधर्मसारोद्धारस्त्रयोदशः समाप्तिमगमत् ।

अतः केशवाद्यत्परं कल्प्यते तद्विपरीतमसन्मार्ग इत्यर्थः ॥

अतो यथोक्तगुणमाहात्म्यादपि भूय अनन्तगुणगणनिलयत्वादपरिमितमहिमायं केशव इत्यर्थः ॥ ९४—९६ ॥

## अथाश्वमेधीयतात्पर्यप्रकाशः-१४ ।

वन्दे कृष्णपदाम्भोजमकरन्दरतिस्पृहान् ।
सतोऽहं यत्प्रसादेन कुर्वे सारं यथामति ॥ १ ॥
अश्वमेध उपाख्यानत्रयं तत्रादिमे मुनिः ।
काश्यां मृतस्य मोक्षाप्तिं सूचयित्वैव लिङ्गतः ॥ २ ॥
धर्मेणैव धनं लब्ध्वा यष्टव्यं सत्त्वशुद्धये ।
स संवर्तमरुत्तीये प्रोक्तवानाशयं त्विति ॥ ३ ॥
श्रीकृष्णधर्मसंवादे द्वितीये तु समासतः ।
शास्त्रार्थसूत्रणं जिह्मनिषेधादार्जवस्तवात् ॥ ४ ॥
तृतीये तद्विरणं संवादे कृष्णपार्थयोः ।
तदूर्ध्वमुञ्छवृत्याद्योपाख्यानैर्ज्ञानसाधनम् ॥ ५ ॥
तत्रादौ तु शुचाक्रान्तो मूढो वैराग्यमिच्छति ।
मौढ्यप्रयुक्तवैराग्याद्वरं कर्म स्वशास्त्रतः ॥ ६ ॥
मरुत्तो यज्ञस्तुत्यर्थं तद्वंश्यक्षितिपस्तुतिः ।
संवर्तेन गुरोः स्पर्द्धा प्रोक्ताथार्थित्वगर्हणे ॥ ७ ॥
संयोगं कथयन्नाह स संवर्तमरुत्तयोः ।
नारदाननतः काशीमाहात्म्यं परमाद्भुतम् ॥ ८ ॥
शवदर्शनतः शम्भुदर्शनाप्तिः प्रदर्शितम् ।
शवो लिङ्गत्वमाप्नोति जीवश्च शिवतामिति ॥ ९ ॥
शिवाधीनं धनं प्रोक्तं महात्म्यं तत्त्ववेदिनः ।
तदनुग्रहतो देवा यान्ति दासत्वमित्यपि ॥ १० ॥
न कार्या केनचित्स्पर्द्धा कुर्वंस्तां दुःखमश्नुते ।
महानपीति निर्णीतं दृष्टान्तोऽत्र बृहस्पतिः ॥ ११ ॥
ब्रह्मज्ञानैकनाश्योऽसौ शोको नश्यति नाध्वरैः ।
ज्ञानं त्वार्जवतः साध्यमिति नृग्यकथाशयः ॥ १२ ॥
सम्यक्तत्त्वविवेकेन जिह्मं पापमयं त्यजन् ।
प्राप्नोत्यात्ममतिं प्राज्ञः शुद्धबुद्धिर्विरागवान् ॥ १३ ॥
मुख्यः स्यादान्तरत्यागः बाह्यो गौण इति ब्रुवन् ।
तत्त्वज्ञानमृते मोक्षो नास्तीत्याह हरिः स्वयम् ॥ १४ ॥

नानोपायैर्न कामस्य जयः सम्भाव्यते नृणाम्।
तत्त्वावबोधनमृते कामगीताशयस्त्विति ॥ १५ ॥
अहो हरेः कृपोत्कर्षो वरीवर्त्यखिलोपरि।
यदावेशाद्विशोकोऽभूद्धर्मराजो युधिष्ठिरः ॥ १६ ॥
स्वतन्त्रोऽपि हरिर्भक्ततन्त्र इत्यर्जुनं प्रति।
द्वारकागमने प्रार्थ्यस्त्वया राजेति योऽब्रवीत् ॥ १७ ॥
ब्रह्मात्मज्ञानमुत्पन्नं निःसन्दिग्धमपि ध्रुवम्।
प्रवृत्तिमार्गविक्षेपाद् भ्रष्टतुल्यं न शोभते ॥ १८ ॥
यद्यपि ज्ञानमुत्पन्नं न नश्यति तथापि तु।
प्रवृत्तिव्यग्रमनसो नश्यतीव विभाति तत् ॥ १९ ॥
इत्यदर्श्यर्जुनज्ञाननाशेन मुनिना स्फुटम्।
तथा तत्रावति प्रीतिर्हरेरित्यब्रवीत्पुनः ॥ २० ॥
तथाप्युपेक्षते नायं हरिर्भक्तं कृतागसम्।
भूयोऽपि तत्त्वविज्ञानमर्जुनायाप्युपादिशत् ॥ २१ ॥
साधनं पुष्कलं ज्ञानं वैराग्यं सर्वभोगतः।
विवेकाज्जातमित्याह सिद्धाख्यानं हरिः स्वयम् ॥ २२ ॥
नित्यानित्यविवेकादिगुणाः शिष्यस्य सम्मताः।
ज्ञानविज्ञानमुख्याः स्युः स्वाचार्यस्य गुणास्तथा ॥ २३ ॥
जन्ममृत्युजरादुःखदोषालोचनमाचरेत्।
क्षराक्षरविचारेण तत्त्वं वेत्ति सुधीः पुमान् ॥ २४ ॥
यथोक्तगुणसम्पन्नो ब्रह्मात्मैक्यविचारतः।
स्वानुभूत्या पदं पश्येद्द्वयातीतं चिदद्वयम् ॥ २५ ॥
तत्साक्षात्कारतो मुक्तिः स्वतः सिद्धा प्रकाशते।
इत्याशयो नु गीतासु दर्शितो मुनिना स्फुटम् ॥ २६ ॥
प्रमात्रादिविलाप्यादौ दृश्यं पश्येत्परं पदम्।
साक्षिणं सर्वभावानां ब्रह्मानन्दं व्रजेत्ततः ॥ २७ ॥
प्रतीतिमात्रमाज्ञाय ज्ञानज्ञेयात्मकं जगत्।
तत्त्वं पश्येच्चिदानन्दमद्वयं वेदमौलितः ॥ २८ ॥
बाह्यमान्तरतो दृश्यं मृषा सत्यं चिदद्वयम्।
तदेवाहं तदेवेदमिति मत्वा न शोचति ॥ २९ ॥

श्रुत्योक्तं प्राणसंघातं विलाप्योदानवीक्षणात् ।
प्रपञ्चविलयो योगी कृतकृत्यः स्वरूपधीः ॥ ३० ॥
अध्यारोपापवादाभ्यां ब्रह्मतत्त्वविचारतः ।
ज्ञात्वा प्रत्यञ्चमद्वैतं पुनः कृत्यं न विद्यते ॥ ३१ ॥
अद्वैतं भगवत्तत्त्वं भेदबुद्धेर्भिदाभ्रमः ।
वेदार्थस्यापरिज्ञानादर्थैक्येऽप्यज्ञतागमः ॥ ३२ ॥
एकः शास्ता गुरुर्द्रष्टा भेदबुद्ध्या विभिद्यते ।
यथोमित्युपदेशैक्ये देवादीनां भिदामतिः ॥ ३३ ॥
दानं दम्भं दमं शममोमित्येकोपदेशनात् ।
देवा दैत्याश्च मुनय उरगाश्च प्रपेदिरे ॥ ३४ ॥
असंगं साक्षिणं बुद्ध्वा त्यक्त्वा विश्वं मरुस्थलम् ।
प्रवेष्टव्यं वनं ब्रह्मानन्दमात्मानमीक्षणात् ॥ ३५ ॥
तत्त्वज्ञानेन दृश्यत्वद्रष्टृत्वमपबाध्य च ।
कुर्वन्नसंगः कर्माणि न करोति न लिप्यते ॥ ३६ ॥
देहेन्द्रियमनोबुद्धिजयेनैव परात्मनः ।
विज्ञानं जायते वेदमौलिजं नान्यथा यतेः ॥ ३७ ॥
गुणान् गुणविकारांश्च मिथ्यात्वेन विचार्य्य च ।
विजित्य सर्वतो बुद्धिं मुच्यते ह्यर्कवत्सुधीः ॥ ३८ ॥
सर्वानर्थकरीं तृष्णां विनिहत्यावबोधतः ।
मुच्यते नात्र संदेहोऽप्यम्बरीषनृपो यथा ॥ ३९ ॥
ममेति द्व्यक्षरो मृत्युर्विषयाभाववीक्षणात् ।
नश्यतीतो विमुक्तः स्यात् पुमान् जनकराजवत् ॥ ४० ॥
सम्यग्ज्ञानवता दिष्टं ज्ञात्वा तत्त्वं विमुच्यते ।
इति ब्राह्मणनीतासु गीतं भगवता स्वयम् ॥ ४१ ॥
जीवब्रह्मजगत्तत्त्वं विविच्य श्रुतिसंमतम् ।
तत्त्वमेकमनुस्यूतं ज्ञात्वा धीरो विमुच्यते ॥ ४२ ॥
त्रैगुण्यमखिलं जीवजगत्तत्त्वमुपेक्ष्य च ।
सारभूतं परंब्रह्म तत्त्वमस्तीति निश्चितम् ॥ ४३ ॥
गुणातीतमविज्ञाय गुणकार्येषु सज्जते ।
तज्ज्ञानात्सर्वविज्ञानं श्रुतिमौलिविनिश्चितम् ॥ ४४ ॥

हरिरेव जगज्जीवतत्त्वं तज्ज्ञो विमुच्यते ।
तदज्ञानादहंकारविमूढो मृत्युमृच्छति ॥ ४५ ॥
अध्यात्मादित्रयं मायामात्रं निश्चित्य युक्तिभिः ।
प्रत्यञ्चं ब्रह्म विज्ञाय जीवन्नेव विमुच्यते ॥ ४६ ॥
ब्रह्मादीनां समुत्कर्षो यत्तत्त्वेक्षणतो भवेत् ।
तत्तत्त्वं भगवान्विष्णुरिति ज्ञात्वा विमुच्यते ॥ ४७ ॥
विष्णुरेवैष विस्तारः सूर्येन्द्वग्निमुखं जगत् ॥
विष्णुरेव ततः सत्यं मृषान्यत्सकलं जगत् ॥ ४८ ॥
कालचक्रभ्रमायत्तं सर्वमज्ञजनावृतम् ।
भगवत्तत्त्वविज्ञानमृते नास्ति सुखं क्वचित् ॥ ४९ ॥
भगवद्भक्तिवैराग्यतत्त्वज्ञानत्रयं यदा ।
समुत्पद्येत ईशस्य कृपया तर्हि मुच्यते ॥ ५० ॥

सर्वैषणापरित्यागाद् ब्रह्मतत्त्वधिया यदि
स्वस्वरूपे स्थितस्तर्हि कृतकृत्यो भवेत्सुधीः ।
सर्वसाधनसम्पत्या तत्त्वज्ञानमुदं यदा
दृश्योज्झितं तदा ब्रह्म विमुक्तं पश्यति स्वयम् ॥ ५३ ॥

नानामतं महर्षीणां तन्निष्ठैकात्मवस्तुनि ।
तज्ज्ञानात्कृत्यमार्तण्डज्वालातो मुच्यते सुधीः ॥ ५४ ॥
यावत्तत्त्वचिदद्वैतज्ञानं वेदान्तसम्मतम् ।
नोदेति तावदज्ञत्वं नोपशाम्यति कर्हिचित् ॥ ५५ ॥
प्रातीतिकमिदं बुद्ध्वा जगत्तस्यावधिं हरिम् ।
स्वस्वरूपतया बुद्ध्वा मुच्यते सर्वतो भयात् ॥ ५६ ॥
इत्येवं गुरुशिष्यादिभावमारोप्य माधवः ।
बोधयामास स्वं तत्त्वं पार्थाय हितकाम्यया ॥ ५७ ॥
ब्रह्मादीनां नियन्तापि मायाधीशोऽखिलेश्वरः ।
भक्त्यधीनतया धर्मसुनोराज्ञामपेक्षते ॥ ५८ ॥
भक्तापराधमाबाध्यानुगृह्णात्येव तान्हरिः ।
स्वशापोद्यतमुत्तङ्कं विश्वरूपमदर्शयत् ॥ ५९ ॥
छलाक्रान्ता महान्तोऽपि कृतान्तविजये रताः ।
त्यजन्त्यानन्दमभ्रान्तमुत्तङ्कोऽप्यमृतं यथा ॥ ६० ॥

ब्रह्मविद्याप्रधानाङ्गजपो भक्तिर्गुरोरपि ।
कार्या त्रयं दृढेत्येवमुक्तङ्काख्यानकाशयः ॥ ६१ ॥
येन दुःखमसह्यं स्यात्प्राणिनां न तदाचरेत् ।
युद्धाख्यानं वदन्कृष्णो नाभिमन्युमकीर्तयत् ॥ ६२ ॥
धनं देवप्रसादेन यज्ञार्थं लभते महान् ।
सिद्धं पूर्वं मरुत्तस्य यथा प्राप युधिष्ठिरः ॥ ६३ ॥
नास्त्यशक्यं हरेः किञ्चिन्मायाधीशतया विभोः ।
ब्रह्मास्त्रदग्धमथैष परीक्षितमजीवयत ॥ ६४ ॥
भगवद्भक्तिनिष्ठानां किमसाध्यं जगत्त्रये ।
अश्वमेधकथाभावं दर्शयामास सन्मुनिः ॥ ६५ ॥
सर्वधर्मशिरोरत्नभूतहिंसा मता श्रुतेः
अश्वमेधाद्यवप्रस्थजन्यं पुण्यं ततो महत् ।
कीर्त्तितं मुनिना यज्ञसिद्धानन्तरमद्भुतम् ॥ ६६ ॥
शुद्धेन मनसा दत्तं स्वल्पमप्यचलायते ।
श्रद्धापूतं ततो देयं सद्भिरित्यत्र कीर्तितम् ॥ ६७ ॥
क्लेशार्जितं धनं न्यायाच्छ्रद्धया विधिनार्पितम् ।
सत्पात्रे स्वल्पमप्यश्वमेधादप्यधिकं भवेत् ॥ ६८ ॥
हिंसामिश्रस्य धर्मस्य निन्दार्थं तत्र तत्र च ।
प्रोक्तमप्याशयं भूयो मुनिरुञ्छे न्यवर्णयत् ॥ ६९ ॥
सर्वसाधनहीना हि महान्तो यज्ञमद्भुतम् ।
निर्वर्तयन्ति साङ्गं तादित्यगस्त्याध्वरे स्मृतम् ॥ ७० ॥
सर्वधर्मनिधानत्वात्सर्वधर्मैकरक्षणात् ।
क्षमैव ज्यायसीत्याह जमदग्निनिदर्शनात् ॥ ७१ ॥
अहिंसाक्षान्तिसद्धर्मैराराध्यः सर्वसम्मतः ।
यो हरिस्तं मुदा वन्दे नन्दनन्दनमीश्वरम् ॥ ७२ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविद्वत्कृते भारततात्पर्यप्रकाशेऽश्वमेधीयतात्पर्यप्रकाशश्चतुर्दशः समाप्तिमगमत् ।

———

न विप्रा वञ्चनीयाः स्युर्हास्येनापि विपश्चिता ।
अन्यथा सर्वनाशः स्याद्यदुबालनिदर्शनात् ॥ ३ ॥
सर्वतः प्रबलं दैवं भगवद्धृदयानुगम् ।
मुनयोऽपि शिशूञ्छेपुर्हास्येऽपि हरिजानपि ॥ ४ ॥
अवश्यं भाविनो भावानीश्वरोऽप्यनुमोदते ।
अन्यथा कर्तुमीशोऽपि कृष्णः शापममन्यत ॥ ५ ॥
न कदाचित्सुरा पेया प्रबलैः क्षत्रियैरपि ।
अन्यथा सर्वनाशः स्याद्यादवोऽत्र निदर्शनम् ॥ ६ ॥
तृणं वज्रायते दैवे कुपिते विप्रशापतः ।
वज्रोऽपि तृणतां याति नृणां पूर्वविपर्यात् ॥ ७ ॥
सर्वे क्षयान्ता निचया यादवानां परिक्षयात् ।
तथार्जुनपराभूतेः पतनान्ताः समुच्छ्रयाः ॥ ८ ॥
दैवस्याव्यभिचारित्वात् मिथ्यात्वाज्जगतोऽपि च ।
आत्मनोऽप्यद्वयत्वाच्च विशोकित्वं विदां भवेत् ॥ ९ ॥
इति मौशलतात्पर्य्यं यथामति मयेरितम् ।

इति मौशलतात्पर्यम् ॥ १६ ॥

---

## अथ महाप्रस्थानतात्पर्यप्रकाशः-१७ ।

महाप्रस्थानतात्पर्यं संक्षेपेण निदर्श्यते ॥ १० ॥
अनित्यं मृत्युना ग्रस्तं सर्वं ज्ञात्वा त्यजेद् बुधः ।
न सज्जेत स्वतोऽन्यत्र कृतार्थः पाण्डवा यथा ॥ ११ ॥
समानेषु न वैषम्यात्पूजा कार्या विपश्चिता ।
कुर्वन्नश्यति वैषम्यं द्रौपदीव पुमर्थतः ॥ १२ ॥
स्नेहः स्वर्गान्तरायत्वान्न कार्यः कुत्रचिद् बुधैः ।
बान्धवेष्वपि भार्यायां युधिष्ठिरवदेव हि ॥ १३ ॥
प्राज्ञत्वस्याभिमानोऽपि पतनायैव देहिनः ।
न कार्यः स्यात्कृते तस्मिन् पतेद्धि सहदेववत् ॥ १४ ॥
रूपयौवनगर्वोऽपि पतने हेतुरुच्यते ।
नैवं कुर्यात्कृते तस्मिन् पतेत्स नकुलो यथा ॥ १५ ॥

न प्रतिज्ञां मृषां कुर्यान्न गर्वं बलविद्ययोः ।
नात्याशावान् यथा मूढः पतेद्भीमार्जुनौ यथा ॥ १६ ॥
लक्ष्मीर्बान्धवभोज्यैव श्रेयसी न स्वमात्रगा ।
न स्वर्गं गन्तुमैच्छत्स भ्रातृभार्यादिभिर्विना ॥ १७ ॥
नीचमप्यन्तिगं प्राज्ञः स्वसुखादिविभागतः ।
सम्भाव्य पश्चाद् भुञ्जीत शुनीव च युधिष्ठिरः ॥ १८ ॥
आनृशंस्यं परो धर्मस्तं प्रयत्नेन पालयेत् ।
यथा श्वानं विना राजा नैच्छत्स्वर्गं युधिष्ठिरः ॥ १९ ॥
इति महाप्रस्थानपर्वतात्पर्यं समाप्तिमगमत् ॥ १७ ॥

— -+:0:+- —

## अथ स्वर्गारोहणपर्वतात्पर्यप्रकाशः-१८ ।

अमर्षो दुस्त्यजः पुंसां संस्कारप्रबलत्वतः ।
स्वर्गेऽपि धार्मिकस्यापि धर्मसुनोर्यथाभवत् ॥ १ ॥
छलेनापि न वक्तव्यं वचो धर्मेण पृच्छतः ।
तत्फलं नरकप्राप्तिरित्यदर्शि स्वरीक्षणे ॥ २ ॥
स्वयं सोढ्वा महद्दुखं सुखं देयं हि देहिनाम् ।
स्वर्गं त्यक्त्वान्यसौख्यायाजातारिर्निरये स्थितः ॥ ३ ॥
विपरीतं फलं दृष्ट्वा सत्स्वसत्सु च सन्मतेः ।
अमर्षो जायते स्वर्गे यथा धर्मसुतस्य सः ॥ ४ ॥
धर्मधैर्यवतां वश्याः सर्वे देवाः सहेश्वराः ।
स्वयमेव स्युरित्याह धर्मसुनोश्चरित्रतः ॥ ५ ॥
स्वर्गभोगोऽपि मुक्तानां भवेत्प्रारब्धकर्मणा ।
आसमाप्तेरिति प्राहाधिकारिकमयोक्तिभिः ॥ ६ ॥
कर्मणां फलमस्तीति दर्शनार्थं हरेरपि ।
स्वर्गभोगस्तदन्ते च स्वस्वरूपप्रवेशनम् ॥ ७ ॥
यस्त्वात्मरतिरित्यादिश्लोकयुग्मे हरिः स्वयम् ।
नैव तस्य कृतेनार्थस्तस्य कार्यं न विद्यते ॥ ८ ॥
प्राह तत्त्वविदां कर्म तत्फलाभावमागमात् ।
पुनः स्वस्यापि संप्राह कर्मतत्फलयोः क्षतिम् ॥ ९ ॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।

नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ॥ १० ॥
इत्येवं स कथं स्वर्गभोगी स्यादज्ञजीववत् ।
कथं वा कर्मणामन्ते स्वस्वरूपप्रवेशनम् ॥ ११ ॥
जीवन्मुक्तवदस्य स्यान्नित्यमुक्तस्य सर्वथा ।
यस्याविद्यादिसंबन्धो भूतपूर्वः स एव हि ॥ १२ ॥
जीवो भोगावसानेन प्रविशत्यात्मनि ध्रुवम् ।
न त्वीश्वरः स्वतन्त्रोऽसौ निरावृतस्वरूपतः ॥ १३ ॥
ज्ञानादिषड्गुणैश्वर्यः कामप्यूहति कल्पनाम् ।
इत्यलं बहुधा सूक्ष्मं सद्भिरित्युपरम्यते ॥ १४ ॥
भगवद्भक्तियुक्तानां पार्थादीनां हरीक्षणात् ।
मुक्तानामपि भोक्तिः स्यात् कर्मश्रद्धोपपत्तये ॥ १५ ॥
वैराग्यमन्तरा भक्तिज्ञानदौर्लभ्यमस्त्यतः ।
तदन्ते वर्णितं तस्य हेतुर्धर्मस्तथेरितः ॥ १६ ॥
सर्वेषामेव भावानामनित्यत्वस्य वीक्षणात् ।
वैराग्यं संभवेत् पुंसां सत्त्वशुद्ध्या स्वधर्मतः ॥ १७ ॥
वैरस्यं विप्रलम्भत्वं क्षयित्वं वीक्ष्य सर्वतः ।
वस्तूनां भ्रान्तिहेतूनां सर्वत्र ममतां त्यजेत् ॥ १८ ॥
माता पिता सुता दारा बन्धवोऽन्ये धनानि च ।
विप्रयोगो ध्रुवं तैः स्याद्ये गृहीता ममत्वतः ॥ १९ ॥
गता यान्ति च यास्यन्ति सर्वे सर्वस्य देहिनः ।
विमृश्यैवं त्यजेदेषु ममत्वं सर्वथा बुधः ॥ २० ॥
तथाहंतास्पदं देहद्वयं भूतोत्थमीक्ष्यताम् ।
अविद्याकार्यमद्वैततत्त्वज्ञानेन बाधितम् ॥ २१ ॥
अनात्मत्वेन तुच्छत्वान्नाहं तत्र तनुद्वये ।
स्थेयं नित्यात्मनि प्रत्यक्तत्त्वे कूटस्थसाक्षिणि ॥ २२ ॥
यावद्देहाद्यहंकारस्तावन्मूढो ह्यनर्थभाक् ।
हर्षशोकभयाधीनामाकरत्वादनात्मदृक् ॥ २३ ॥
आत्मदर्शनमेवातः पाण्डित्यं भ्रान्तिनाशनम् ।
हर्षशोकाद्यनर्थैकध्वान्तित्वात्संश्रयेद् बुधः ॥ २४ ॥

तदात्मदर्शनं कृष्णभक्त्यधीनं विरागिणः ।
सा भक्तिर्भगवद्धर्मानुष्ठानेनैव लभ्यते ॥ २५ ॥
धर्मानुष्ठानमेवातो गरीयः सर्वसाधनात् ।
अनुक्रोशान्मुनिर्लोकहितायान्ते तदुक्तवान् ॥ २६ ॥
कामाल्लोभाद्भयाद्धेतोर्जीवितस्यापि न त्यजेत् ।
सुपुमर्थनिदानत्वाद्धर्ममित्याह कण्ठतः ॥ २७ ॥
त्यक्त्वा धर्मं हि कामेन नहुषः सर्पतां गतः ।
लोभाद् दुर्योधनो हित्वा सकुटुम्बो हतोऽधमः ॥ २८ ॥
भयादिन्द्रः परित्यज्य स्वर्गाद् भ्रष्टो हतप्रभः ।
जीवितार्थे गतस्त्यक्त्वा द्रौणिश्च पदमापदाम् ॥ २९ ॥
अत्यक्त्वा कामतो धर्मं भीष्मपार्थौ महत्तराम् ।
गतौ हि पदवीं वीरौ कृष्णप्रेमास्पदत्वतः ॥ ३० ॥
लोभात्तमपरित्यज्य स शरीरो दिवं गतः ।
युधिष्ठिरो महान्मान्यः सर्वत्र सुपरीक्षितः ॥ ३१ ॥
सुहृत्त्यागभयात्कर्णो न भिन्नः कृष्णमन्त्रतः ।
अद्यापि कीर्तिराह्लादकारिणी यस्य भूतले ॥ ३२ ॥
जीवितस्यापि हेतोर्हि न त्यक्तं शिबिना पुरा ।
यद्यशश्चन्द्रमा लोके भ्राजतेऽद्यापि सर्वतः ॥ ३३ ॥
तस्माद्धर्मः सदा सेव्यः सुपुमर्थेप्सुभिर्नृभिः ।
भगवद्भक्तिनिष्ठोऽयमित्युक्तमुपसंहृतौ ॥ ३४ ॥
नित्यत्वं फलतो धर्मे भगवद्भक्तिसाधने ।
भगवत्प्राप्तिरूपत्वात्तत्फलस्य ततस्तथा ॥ ३५ ॥
वैद्युत्कत्वं सुखादेस्तु कामकर्मफलत्वतः ।
इहामुत्राप्यनित्यत्वाद्विषयाणामनित्यता ॥ ३६ ॥
जीवो ब्रह्मस्वरूपत्वान्नित्यो वेदान्तसम्मतः ।
जीवोपाधेरनित्यत्वं तत्त्वज्ञानैकबाधनात् ॥ ३७ ॥
नित्योऽनित्येन संबन्धं कुर्याद्धर्मेण सज्जनः ।
अनित्यं सम्परीत्यज्य सर्वमायामयत्वतः ॥ ३८ ॥
इति भारतसावित्रीतात्पर्यं हरिभक्तये ।
यथामति मयादर्शि व्यासभावानुसारिणी ॥ ३९ ॥
स धर्मः श्रवणादस्य भारतस्य नृणां भवेत् ।

अनुष्टुयतया वेदे स्मृत्यादौ यो हितो नृणाम् ॥
स भारतस्य श्रवणात्पठनादेव लभ्यते ॥ ४० ॥
इत्यतः श्रवणस्यास्य फलं व्यासेन वर्णितम् ।
इति श्रीस्वर्गारोहणपर्वतात्पर्यमीरितम् ॥ ४१ ॥
उपक्रमोसंहाराभ्यासादीनां विचारणात् ।
यद्विधानां हि लिङ्गानां भारते वेदविग्रहे ॥ ४२ ॥
ज्ञायते भगवत्कृष्णे तात्पर्यं सच्चिदद्वये ।
यथाज्ञानं तथादर्शि मया तत्तत्प्रसादतः ॥ ४३ ॥
अस्मदादिवराकोऽपि यत्कृपापाङ्गवीक्षणात् ।
महाभारततात्पर्यं वेत्ति तं नौमि माधवम् ॥ ४४ ॥
श्रीकृष्णचरणाम्भोजमकरन्दरसाशिषा ।
श्रीसदानन्दविदुषा कृतोऽयं हरितुष्टये ॥ ४५ ॥
महाभारततात्पर्यप्रकाशोऽतिसमासतः ।
भूयात्सतां मुदे भूयो भूयो वीक्षणतः सदा ॥ ४६ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविदुषा कृतो भारततात्पर्यप्रकाशसंक्षेपोऽष्टादशः समाप्तिमगमत् ॥ १८ ॥

---

श्रीगणेशाय नमः ।

अथ

## हरिवंशतात्पर्यप्रकाशः ।

यो भूमामायि सूत्राखिलमयवपुषा भाति विष्णुस्वरूपी ।
वाराहं नारसिंहं वपुरमलतनुर्धत्त ओंकारमूर्तिः ॥
मात्स्यं कौर्म्यंत्रिरामीं तनुमतुलगुणां व्यासरूपां तनुं च ।
स्वां स कृष्णोऽन्तरात्मा परमसुखनिधिर्मे मतौ सर्वदास्तु ॥ १ ॥

हरिवंशे हरेर्लीलाः स्फुटास्तात्पर्यभाविताः ।
न तत्र क्रियते यत्नः पृथक्तात्पर्यवर्णने ॥ २ ॥
नन्दनन्दनलीला या आनन्दरसगर्भिताः ।
भाविताः संसृतिध्वान्तहारिण्यश्चित्तशोधनात् ॥ ३ ॥
ज्ञानवैराग्यसद्भक्तिप्रदा याः श्रवणादिभिः ।
सेविताः सर्वदा सेव्या लीला भगवतो हरेः ॥ ४ ॥

वंशानुचरितं सर्वं प्रायोपाख्यातमञ्जसा ।
सर्वभारततात्पर्यविचारेणानुपूर्वशः ॥ ५ ॥
सर्गश्चैव विसर्गश्च वंशो मन्वन्तराणि च ।
ईशानुचरितं चैतत्स्पष्टं व्याख्यातमेव हि ॥ ६ ॥
जगज्जन्मादिहेतुत्वं हरेरद्भुतकर्मणः ।
विशदं हरिवंशेऽस्मिंस्तात्पर्येणानुकीर्तनात् ॥ ७ ॥
चरितं गोकुले विष्णोर्मथुरायामथाद्भुतम् ।
द्वारकायां हरेरेवानुरूपं मुनिनेरितम् ॥ ८ ॥
हरेर्मायानियन्तृत्वाद्वशित्वात्सर्ववित्त्वतः ।
आश्चर्यमप्यनाश्चर्यं सर्वं चरितमीशितुः ॥ ९ ॥
वेदान्तानां प्रमेयत्वादात्मत्वात्सर्वदेहिनाम् ।
ब्रह्मादीनां नियन्तृत्वाद्धरेः किं किं न शोभते ॥ १० ॥
वाराही नारासिंही या लीलाभगवतो हरेः ।
श्रीवामनकृता या या सा सा केनोपमीयते ॥ ११ ॥
यथा हरिहराद्वैतं भेदभ्रान्तिनिवृत्तये ।
स्फुटं कैलासयात्रादिग्रन्थेषु मुनिनेरितम् ॥ १२ ॥
एवं संक्षेपतः श्रीमद्धरिवंशानुकीर्तनम् ।
भगवद्भक्तिहेतुत्वाद्यथामति माया कृतम् ॥ १३ ॥
तात्पर्यं पौष्करप्रादुर्भावे त्र्यक्षाद्वधे तथा ।
व्याख्यातुमवशिष्टं श्रीहरिवंशे तदुच्यते॥ १४ ॥

ओँ स्वस्ति श्रीगणेशाय नमः नमः शिवाय सपरिवाराय नमो विष्णवे नमो गुरुभ्य आचार्येभ्यः ।

यस्मिन्निदं मरुमयूखसरित्प्लवाभं
विश्वं विचित्रमविकारिणि चित्स्वभावे ।
अध्यस्तमद्भुतगुणाम्बुनिधौ तमीशं
वन्दे मुकुन्दमनिशं मनसा गिराहम् ॥ १ ॥
हरिवंशे हरेरूपं पौष्करेऽत्यन्तमद्भुतम् ।
आधिदैविकमाध्यात्म्यं कूटैः कूटस्थमीरितम् ॥ २ ॥
तात्पर्यं पौष्करप्रादुर्भावस्यास्य समासतः ।
प्रदर्श्यते सदानन्दविदा कृष्णानुरक्तये ॥ ३ ॥

पुष्करव्योमचिद्रूपं तस्य ज्ञानेन देहिनः ।
प्रादुर्भावः स्वरूपेणावस्थानं तन्निरुक्तितः ॥ ४ ॥
मायोपहितचैतन्यमण्डाधिष्ठानभावतः ।
पद्मनाभ इति प्रोक्तस्तत्प्रभावोऽत्र पृच्छ्यते ॥ ५ ॥
महाभाग्यं महांल्लाभो ब्रह्मात्मैक्याप्तिरिष्यते ।
तज्ज्ञानात्सर्वविज्ञानसिद्धिरित्युत्तरं मुनेः ॥ ६ ॥
कश्चनापि न तस्येशे तस्य नाम महद्यशः ।
यशो विनिहितं तस्मिन्विश्वरूपिमिति श्रुतेः ॥ ७ ॥
नारायणात्मयशसो वक्तव्यत्वादुपक्रमे ।
अधीत्य सर्वमध्यात्ममित्येवमुपसंहृतौ ॥ ८ ॥
तस्मादेतस्य शास्त्रस्य ब्रह्मैक्यपरतेष्यते ।
जगज्जन्मादिकं यत्तु प्रोक्तं तच्चापि तत्परम् ॥ ९ ॥
देवासुरादिशब्दा ये शमकामादिवाचकाः ।
ब्रह्मबोधोपकारित्वात्तेऽपि ब्रह्मैक्यतत्पराः ॥ १० ॥
द्वा सुपर्णा अजामेकामित्यादिनिगमान्तके ।
पक्षिमेषादिवृत्तान्तद्वारा ब्रह्म निरूपितम ॥ ११ ॥
तथैव निर्विशेषं चिन्मात्रं सलिलशब्दितम् ।
शमकामादिधीवृत्तिर्देवासुरपदोक्तितः ॥ १२ ॥
अद्वैतो भवति द्रष्टा तथा सलिल एकलः ।
प्रजापत्यादयो हेति यथा वेदे निरूपितम् ॥ १३ ॥
तथैवात्रापि सर्वत्र तत्तद्रूपककल्पनैः ।
निरूपितं परं तत्त्वं वेदव्यासेन वेधसा ॥ १४ ॥
विद्याधिकारावगतावाश्वमेधादिकेष्विह ।
इन्द्रवृत्रादयः शब्दा आत्ममोहपराः कृताः ॥ १५ ॥
अत्रापि ब्रह्मणस्तद्वत्पारोक्ष्येण निरूपणम् ।
चक्रे दुर्जनचोरेभ्यस्तत्त्वरत्नं सुरक्षितुम् ॥ १६ ॥
तत्र पूर्वं भविष्योक्तौ गतिं संसारिणां नृपः ।
अत्युल्वणं समाकर्ण्य समुद्विग्नमताश्च सत् ॥ १७ ॥
शोकं तरति तत्त्वज्ञो नान्यः पन्था विमुक्तये ।
इत्यादि वेदतो ज्ञानादन्यन्मुक्तेर्न साधनम् ॥ १८ ॥

श्रुत्वापि बहुशः पूर्वं रसज्ञो ब्रह्मवेदने ।
पुनस्तदेव जिज्ञासुः पृच्छति स्म मुनिं प्रति ॥ १९ ॥
श्रौतसिद्धान्तमालम्ब्य ब्रह्मात्मैक्यमखण्डितम् ।
मुनिराहादिमेऽध्याये शास्त्रोपोद्‌घातमद्भुतम् ॥ २० ॥
एकार्णवं विशुद्धा चिद्विष्णुरव्याकृतं नभः ।
पुष्करं द्विविधं कार्यं समष्टिव्यष्टिसंज्ञकम् ॥ २१ ॥
हरिमायोत्थितं विश्वं समस्तं कार्यकारणम् ।
हरितत्त्वपरिज्ञानाद्विलयं याति नान्यथा ॥ २२ ॥
भ्रान्तदृष्ट्या जगत्सर्गलयौ नित्यौ न वस्तुतः ।
न निरोधो न चोत्पत्तिरित्यादिश्रुतिदर्शनात् ॥ २३ ॥
यः कर्ता वियदादीनां मायया सर्वरूपधृक् ।
कालकालोऽखिलाध्यक्षो द्रष्टा स्वाधीन एव सः ॥ २४ ॥
तत्पदार्थो हरिर्विष्णुर्वेदान्तविषयत्वतः ।
प्रतिपाद्यत आनन्दरूपः सर्वान्तरोऽच्युतः ॥ २५ ॥
तदर्चनं च तद्ध्यानं तज्ज्ञानं चेष्यते श्रुतौ ।
अतः स एव भगवान्प्रश्नोत्तरविचारभूः ॥ २६ ॥
अचिन्त्यो ह्यप्रतर्क्यत्वादगम्यो वचनातिगः ।
तत्कृपामन्तरा कश्चिन्न तं वेत्तीत्युपक्रमे ॥ २७ ॥
ज्ञानसाधनवैराग्यसिद्धये वस्तुजागनम् ।
अनित्यं तारतम्यैकस्वभावं दुःखमुच्यते ॥ २८ ॥
द्वितीये तत्र मन्वादियुगादीनां निरूपणम् ।
भूतभौतिकसृष्टीनां विपर्यासदृगाप्तये ॥ २९ ॥
सत्त्वे स्थितः पुमान्सम्यग्ज्ञानवैराग्यलाभतः ।
कृतार्थत्वात्कृतं नाम प्रोच्यते युगरूपधृक् ॥ ३० ॥
कामोद्भूतः पुमान्कर्मी रजसा स्पृष्ट एव सन् ।
त्रेता स्वर्गादिभोगाय कर्म कुर्वंस्तदोच्यते ॥ ३१ ॥
रजसात्यन्तसंस्पृष्टः स्वार्थकामैकतत्परः ।
वैदिकं कर्म कुर्वाणः पुमान् द्वापर उच्यते ॥ ३२ ॥
रजस्तमोऽतिबाहुल्यात्पुमान्कामोत्कटत्वतः ।
वृथायुः क्षपणो मूढः क्रुद्धः कलिरितीर्यते ॥ ३३ ॥

अनात्मज्ञो भ्रमन्मूढो नैव विश्रान्तिमेत्यसौ ।
युगानुरूपी स कलिः कथं मुक्तिमवाप्नुयात् ॥ ३४ ॥
सर्वथा सृष्टिविलयाद्यनेकानर्थसंकुलः ।
संसारो हेय आत्मैक्यज्ञानेनैवेति संग्रहः ॥ ३५ ॥
सर्वं दृश्यं विनाशीति ज्ञात्वा नाशविवर्जितम् ।
पदं नेतुं विनेयाह्नि तृतीये योग उच्यते ॥ ३६ ॥
विरक्तः शान्तिदान्त्यादियुक्तो ब्रह्मविचारणात् ।
वेदान्तवचसां ज्ञात्वा प्रत्यक्त्वेन परं पदम् ॥ ३७ ॥
शुद्धचिन्मात्र एवासौ ब्रह्मैक्यज्ञानवह्निना।
सविलासं महामोहं दग्ध्वा स्वस्थो विमुच्यते ॥ ३८ ॥
स्थूलसूक्ष्मविलापेन प्रत्यक्त्वैक्यवस्तुनः ।
प्रादुर्भावो यथावत्स्यात्तत्त्वज्ञानेन तद्विदः ॥ ३९ ॥
योगेनैकाग्र्यमापाद्य वेदान्तपरिशीलनात् ।
स्वकार्याज्ञानविध्वंसिज्ञानोद्भूते मुनिर्हरेः ॥ ४० ॥
सर्वदृश्यविलापेन ब्रह्मभूतो हरिः स्वयम् ।
अद्वयानन्दलाभेन कृतकृत्यो भवेन्मुनिः ॥ ४१ ॥
ऐहिकान्विषयांस्तद्वत्सर्वानामुष्मिकानपि ।
दहत्यात्मधिया वह्निज्वालया दृढवातया ॥ ४२ ॥
चित्तभूमिर्निजानन्दज्ञानवृष्ट्या रसाप्लुताः ।
त्यक्त्वाऽज्ञानजसंतापं निर्वाणाङ्कुरनिर्वृताः ॥ ४३ ॥
सम्यग् ज्ञानोदयात्सर्वा वृत्तयः सुखसंप्लुताः ।
जायन्ते योगिनो ब्रह्मानन्दपूरे निमज्जतः ॥ ४४ ॥
न तत्र माता सौषुप्तौ न द्रष्टा जागरादिगः ।
नान्यो ज्ञाता समाधिस्थो यत्र ब्रह्मविदो गतिः ॥ ४५ ॥
अहो ब्रह्मात्मबोधस्य दृढस्योद्भूतिरुत्तमा ।
यत्र दृश्यातिगं प्रत्यगभिन्नं ब्रह्म राजते ॥ ४६ ॥
यज्ञरूपकतो योगमुक्त्वा तुर्ये निगद्यते ।
मार्कण्डेयसमाधिश्च तद्विघ्नेषु निदर्शनम् ॥ ४७ ॥
विना यज्ञादिसद्धर्मं पुंसश्चित्तं न शुद्ध्यति ।
चित्तशुद्धिं विना तत्त्वज्ञानेनैवाधिकारभाक् ॥ ४८ ॥

अतो यज्ञादिसद्धर्मं कुर्वन्कृष्णैकतत्परः ।
चित्तशुद्ध्यात्मविज्ञानेऽधिकारित्वं समश्नुते ॥ ४९ ॥
सोऽधिकारी हरेर्भक्त्या वेदान्तगुरुवाक्यतः ।
ब्रह्मतत्त्वं श्रुतं मत्वा निदिध्यासनतत्परः ॥ ५० ॥
समाधौ लयविक्षेपशून्यस्तिष्ठेद्यथातथा ।
सत्त्ववृद्ध्या त्यजेद् दूरे यत्नं कृत्वा रजस्तमः ॥ ५१ ॥
मार्कण्डेयोऽभिधो योगी सत्समाधौ महार्णवे ।
रजसा तमसाविष्टो विक्षिप्तोऽभूदितीर्य्यते ॥ ५२ ॥
सोऽपास्य ब्रह्मसंबन्धाद् दृश्यतेऽत्यन्तमद्भुतम् ।
हार्दाकाशे प्रविष्टोऽसौ सर्वं याथार्थ्यमीक्षते ॥ ५३ ॥
बहिर्दृष्ट्वा भ्रमत्यब्धौ संसाराख्ये हृदुद्भवे ।
अन्तर्दृष्ट्यैति विश्रान्तिं प्रत्यग्ब्रह्मैक्यदर्शनात् ॥ ५४ ॥
यावद्भेदं निरीक्षेत तावद्दुःखं न शाम्यति ।
अभेदेनैति विश्रान्तिमुपास्यात्मैक्यदर्शनात् ॥ ५५ ॥
उपास्यो हरिरेवैको गुरुः स्वात्मा पिता सुहृत् ।
स वेद्यो वेदिता वेदो विद्वान्मोक्ष इति स्थितिः ॥ ५६ ॥
त्यक्त्वा रजस्तमश्शान्तध्यात्वा नित्यं हरेः पदम् ।
विमुच्यते भवाम्भोधेर्योगीत्युक्तं चतुर्थके ॥ ५७ ॥
स्वस्वरूपापरिज्ञानाज्जगन्मिथ्येत्यबोधनात् ।
संसारे नितरां जीवो भ्रमत्यत्यन्तमोहितः ॥ ५८ ॥
स्वस्वरूपपरिज्ञानाज्जगन्मिथ्यात्वबोधनात् ।
मुच्यते संसृतेर्योगीत्युच्यते पञ्चमेऽधुना ॥ ५९ ॥
सङ्कल्पादेव जगतः सृष्टिः स्यान्नतु वास्तवी ।
सा सङ्कल्पनिरोधेन लयं यात्यद्वयात्मनि ॥ ६० ॥
सङ्कल्पात्मैव प्राक् तत्रोपासकः कश्चिदेव हि ।
ब्रह्मा भूत्वा ससर्जेदं जगदाण्डं वरं महत् ॥ ६१ ॥
सत्यसङ्कल्पसंबन्धात्सत्यकामत्वमश्नुते ।
सत्यस्योपासनाद् ब्रह्मा स्वयम्भूर्भूतभावनः ॥ ६२ ॥
सर्वाकारो हरिः सर्वं सृजत्यात्मेच्छया हरिः ।
स्वेच्छाब्रह्मादिरूपेण स्वयमेव विवर्तते ॥ ६३ ॥

हरिरेवात्मतत्त्वं हि तद्ज्ञानाज्जगद्भ्रमम् ।
जीवः पश्यति तज्ज्ञानान्मुच्यते भवबन्धनात् ॥ ६४ ॥
हरेः पूजा हरेर्ध्यानं हरेर्ज्ञानं निरन्तरम् ।
संसारबन्धमुच्छेत्तुं शक्नोतीति विनिश्चितम् ॥ ६५ ॥
तस्माद्धरिं प्रपद्येत सदा सर्वात्मना जनः ।
तेनैव सर्वसंसिद्धिरित्युक्तं पञ्चमे हृदा ॥ ६६ ॥
लेशतोऽपि न भेदोऽस्ति बाह्याभ्यन्तरविश्वयोः ।
इति वक्तुं मुनिः प्राह षष्ठे नाभ्यब्जसम्पदम् ॥ ६७ ॥
चिन्मात्रं ब्रह्म सर्वत्र बहिरन्तश्च निश्चितम् ।
कल्पितस्यास्त्यधिष्ठानं न तत्रान्यत्वमीक्षते ॥ ६८ ॥
समष्टिव्यष्टिरूपेणोपाधी तत्रैव कल्पितौ ।
उपाध्यावेशतो ब्रह्म भाति तत्तद्विशेषणैः ॥ ६९ ॥
निर्विशेषं परं ब्रह्म सर्ववेदान्तसम्मतम् ।
तद्बोधन उपायास्तु बहवः श्रुतिबोधिताः ॥ ७० ॥
जगज्जन्मादिहेतुत्वाद्यारोपणश्रुतीरितम् ।
ब्रह्म तद्बोधनायैव सर्गप्रलयकल्पनाः ॥ ७१ ॥
यथावद्वस्तुतो ब्रह्मतत्त्वं नैति भिदां कदा ।
भ्रान्त्या तत्र जगद्भानं नभोनीलवदीक्षते ॥ ७२ ॥
ब्रह्मबोधेन भ्रान्त्युत्थं समूलम्बाध्यते जगत् ।
विमुक्तो मुच्यते जीवः स्वतः षष्ठ इतीरितम् ॥ ७३ ॥
सप्तमे लयविक्षेपौ विघ्नौ तामसराजसौ ।
सत्त्वेन विष्णुना क्षेप्यौ मधुकैटभरूपकौ ॥ ७४ ॥
सात्त्विको योगधर्मः स्यादधर्मक्षयकृद्यतः ।
स च कृष्णानुसन्धानाद् वृद्धिं याति शनैः स्वयम् ॥ ७५ ॥
केशवानुग्रहादेव समाध्यादिगुणोदयः ।
स समाधिरप्रत्यूहसत्त्वोत्कर्षेण सिद्ध्यति ॥ ७६ ॥
सत्त्वोत्कर्षो हरेर्भक्त्या वैराग्याभ्यासरूपधृक् ।
यदोपैति तदा धीरः समाधिमनुतिष्ठति ॥ ७७ ॥
अविद्यारात्रिविलयारम्भे चित्तं परे पदे ।
समाधानोद्यतं दैनं दिनाभ्यासादनातुरम् ॥ ७८ ॥

लयात्मा कस्य तमसः प्राबल्ये सति कर्हिचित् ।
चित्तं विलीयते सद्यः स लयो मधुरुच्यते ॥ ७९ ॥
सत्त्वोत्कर्षाद्यदा चित्तं क्षणिकात्तत्त्ववस्तुनि ।
प्रविष्टं रजसो वेगाद्विक्षिप्तं स्याद् बहिः कदा ॥ ८० ॥
प्राबल्ये रजसश्चित्तविक्षेपं याति संसृतौ ।
स कैटभ इति प्रोक्तो विक्षेपो दुःखदो मुनेः ॥ ८१ ॥
योऽयमध्यासतः सत्त्वाद्विविक्तश्चिन्मयः पुमान् ।
जीवः सोऽत्रस्मृतो ब्रह्मा हृत्पद्मे विश्रमं गतः ॥ ८२ ॥
तस्यास्ति हिंसनं ताभ्यां घोरायां संसृतौ बलात् ।
पातनं तस्य रक्षा तु सत्त्वोत्कर्षप्रबोधनात् ॥ ८३ ॥
वैराग्याभ्यासदार्ढ्येन सत्त्वोत्कर्षोऽपि लक्ष्यते ।
विष्णुभक्त्या स चोत्कर्षः सिद्ध्यत्यस्य प्रसादतः ॥ ८४ ॥
तयोर्नाशोऽपि सत्त्वेन विष्णुना प्रौढदैत्ययोः ।
वैराग्याभ्यासयोगेन दृढेनातिप्रमाथिनोः ॥ ८५ ॥
व्युत्थानमग्रिमः कल्पः पुंसो यत्स समाधितः ।
द्वैतादर्शनमेवास्ति समाधिरपि सर्वदा ॥ ८६ ॥
विष्णोः पुत्रत्वमत्रोक्तं मधुकैटभयोर्द्वयोः ।
उपसर्जनभावेन सत्त्वं प्रतिस्थितिस्तयोः ॥ ८७ ॥
सत्त्वनुकूल्यचरणं तयोर्नित्यं विवक्षितम् ।
न रजस्तमसी हित्वा प्रवृत्तिः सत्त्वमात्रतः ॥ ८८ ॥
तत्त्वज्ञानसमुत्पत्तिर्न विना साधनैर्भवेत् ।
गुरुशास्त्रोपदेशादि न तल्लेशं विनेष्यते ॥ ८९ ॥
सत्त्वौत्कण्ठ्यं तयोरीषद्भावेनावस्थितिर्यदा ।
तदा ब्रह्मात्मबोधस्य प्रादुर्भाव इति स्थितिः ॥ ९० ॥
सहायो विष्णुरेवास्ति मुमुक्षोः सत्त्वमूर्तिधृक् ।
तादाराधनमेवातः कुर्यादित्याह सप्तमे ॥ ९१ ॥
विष्णुभक्त्यैकप्रावण्यं सर्वथा मुनिसंमतम् ।
अत्र प्रपञ्चितं तस्माद् ब्रह्मादेः संप्रदायतः ॥ ९२ ॥
भ्वादिसंज्ञं विराडादित्रयं युक्त्यनुभूतितः ।
विमुच्य सुस्थितौ भूम्नो व्युत्थाने सृष्टिरष्टमे ॥ ९३ ॥

शुद्धे ब्रह्मणि चिद्धातौ मायावित्वादिकल्पना ।
मायया न तु सद्भूम्नि स्वत इत्याह युक्तितः ॥ ९४ ॥
जपाकुसुमसान्निध्यात्स्फटिके रक्तताभ्रमः ।
यथा तत्रापि विभ्रान्त्या स्फटिकांशप्रमोषतः ॥ ९५ ॥
अध्यासः पद्मरागस्य पुनस्तत्रापि वस्तुनि ।
चन्द्रिकायां निशि भ्रान्त्या हीन्द्रनीलत्वविभ्रमः ॥ ९६ ॥
एवं विशुद्धचैतन्ये मायोपाध्येकयोगतः ।
ईश्वरत्वसमारोपः पुनस्तत्रापि मायिनि ॥ ९७ ॥
तारतम्येन मायाया बलस्यैश्वर्यशालिनः ।
सूत्रात्मत्वविराडात्मत्वाध्यासौ भवतो विभौ ॥ ९८ ॥
एत एव तु शास्त्रेऽस्मिन् ज्ञातव्याः सम्मताः सताम् ।
प्रातिलोम्येन मात्राणां प्रणवस्य यथार्थतः ॥ ९९ ॥
अविद्योपाधिना ह्यर्थो जीवेनासङ्गरूपिणा ।
क्रमेण पूर्वपूर्वस्योत्तरत्र प्रविलापनात् ॥ १०० ॥
स्वस्वरूपप्रतिष्ठः स्याद् द्वैतादर्शनतः पुमान् ।
प्रणवस्यार्द्धमात्रायां न पुनर्जन्मभाग्भवेत् ॥ १०१ ॥
सोऽयमात्मास्त्यविद्यायाः शक्तिमत्याः श्रमाश्रयः ।
विषयोऽप्ययमेवास्ति द्वितीयस्यानिरूपणात् ॥ २ ॥
शुद्धरूपतिरोधानं तत्रावरणशक्तितः ।
येन प्रेमास्पदत्वेन भानेऽप्यावरणावृतः ॥ ३ ॥
नैव भाति सुखात्मासौ संसृतिं परमां गतः ।
ततोऽन्यशक्तिरज्ञाने विक्षेपाकृतिरद्भुताः ॥ ४ ॥
यथा विक्षेपशक्त्यात्मा विक्षिप्तोऽध्यासतो विभुः ।
ईशादिस्थूलदेहान्तप्रतिभासं प्रयात्यसौ ॥ ५ ॥
पूर्वं पूर्वं समावृत्या विद्या मायाविसंश्रया ।
उत्तरोत्तरकार्याणां प्रादुर्भावे पटीयसी ॥ ६ ॥
ईश्वरादिघटान्तं यज्जगत्सर्वं त्रिकालगम् ॥
अविद्यारोपितं भूम्नि तन्मिथ्येति विनिश्चितम् ॥ ७ ॥
अविद्यावृतवेलायां प्रत्यगात्मविभासनम् ।
नास्ति पूर्णस्वरूपेण तद्विचारमतश्चरेत् ॥ ८ ॥

तत्राप्यावरणांशस्य विरोधी सांख्यशब्दितः
विचारः स च वेदान्तगिरां साध्यो विमर्शनात् ॥ ९ ॥
वेदान्ताचार्यनिर्णीतरीत्या स्वानुभवोदये ।
आवरणांशस्य हानिः स्यात्स्वस्वरूपावलोकनात् ॥ १० ॥
विक्षेपांशस्य योगेन निवृत्तिर्धीनिरोधिना ।
निदिध्यासनदार्ढ्ये हि धीनिरोधः स्वयं भवेत् ॥ ११ ॥
श्रवणे मनने दार्ढ्यं स्वानुभूतिकरं मतम् ।
सम्यग्बोधे समुत्पन्ने किञ्चित्कृत्यं न शिष्यते ॥ १२ ॥
सोपाधिकभ्रमस्यास्य परोक्षज्ञानमात्रतः ।
न निवृत्तिर्विनोपाधिनिवृत्तिमिति निश्चितम् ॥ १३ ॥
एवं च योगिनः स्थूलदेहासङ्गेन पूर्वजः ।
विराड्भावोऽस्ति भूतानां चिदचिद्ग्रन्थिरूपधृक् ॥ १४ ॥
स्फटिकेहीन्द्रनीलत्वाध्यासस्थानीय उत्थितः
योगिनो ब्रह्म संज्ञस्य मनसा कल्पितः सुतः ॥ १५ ॥
बोधितः सांख्ययोगाभ्यां स भूनामा निवर्तते ।
चन्द्रिकायाः क्षये यद्वदिन्द्रनीलत्वविभ्रमः ॥ १६ ॥
तस्यैव ब्रह्मणः पुत्रो भुवो नामापरं स्मृतः ।
स सूत्रात्मा समष्ट्यैकाभिमानी योगसम्भवः ॥ १७ ॥
बोधितः सांख्ययोगाभ्यां पद्मरागोपमः स च ।
स्फटिके भ्रान्तिनाशेन स्वयमेव निवर्तते ॥ १८ ॥
लौहित्याध्याससदृशः स्फटिके ब्रह्मणः सुतः ।
मानसो भूर्भुवाख्योऽसावाद्य ईश्वरशब्दितः ॥ १९ ॥
बोधितः पूर्ववत्सोऽपि स्वयमेव निवर्तते ।
ततोऽवशिष्यते शुद्धं ब्रह्मभूमेति शब्दितम् ॥ २० ॥
न तत्र कल्पना काचिन्न तद्बीजभ्रमावहम् ।
स्वे महिम्नि परानन्दपदे यत्र स्थितिर्मता ॥ २१ ॥
सोऽयमर्थोऽष्टमाध्याये ब्रह्मनारायणादिना ।
आधिदैविकवृत्तान्तरूपकेण निरूपितः ॥ २२ ॥
बुद्धो योगी चिदात्मैव चिदात्मकमिदं जगत् ।
प्रतीतिसमकालं तत्पश्यतीत्यष्टमे ततः ॥ २३ ॥

यत्सूचितं प्राक् श्लोकाभ्यां रहस्यं सांख्ययोगयोः ।
तद्विस्तरार्थं नवमे नृपतेः प्रश्नतः स्मृतम् ॥ २४ ॥
श्रुत्वा तत्त्वविदां हार्दमलौकिकमिहाद्भुतम् ।
तत्सिद्धान्तपरिज्ञाने जिज्ञासोरुत्सुका भवेत् ॥ २५ ॥
सांख्ययोगात्मको ब्रह्मयज्ञोऽयं दशमे मुनिः ।
साख्यं ब्रह्मविचाराख्यं प्रस्तौति क्षिप्रसिद्धिदम् ॥ २६ ॥
शुद्धं ब्रह्मणि द्रूप्ये प्रत्ययोऽसौ प्रकल्पितः ।
नाहं वेद्मीति सर्वस्य सिद्धो यः स्वानुभूतितः ॥ २७ ॥
अज्ञानं सर्वबीजत्वादध्यस्तं जगदङ्कुरम् ।
येनानर्थैकमूलोऽसावहङ्कारः प्रकल्पितः ॥ २८ ॥
अहमः प्रथमोऽध्यासो ब्रह्मण्यज्ञानसम्भवः ।
कामकर्मादिबीजानां तत एव समुद्भवः ॥ २९ ॥
अनिर्वाच्यो जगद्धेतुश्चिद्विवर्तोऽहमित्ययम् ।
देहेन्द्रियासुमनसामध्यासोऽतः प्रवर्तते ॥ ३० ॥
अविद्यास्तीत्यहङ्कारे स्थित्वैवात्मनि कल्प्यते ।
नान्यथा चिद्घने शुद्धे तत्संबन्धः स्वयम्प्रभे ॥ ३१ ॥
अस्याविद्येत्यविद्यायामेवास्तित्वं प्रकल्प्यते ।
ब्रह्मद्वारा त्वविद्येयं न कथञ्चन युज्यते ॥ ३२ ॥
चिद्धातुर्निर्विकल्पत्वात्सप्रकाशाद्वयत्त्वतः ।
असङ्गत्वादवेद्यत्वाद्युज्येताविद्यया कथम् ॥ ३३ ॥
न प्रमाणमविद्यायां लौकिकं वैदिकं च वा ।
प्रामाणिकत्वे तस्याः स्याद् वस्तुत्वं तन्न युज्यते ॥ ३४ ॥
अकर्त्रभोक्त्रुदासीनस्वरूपे संसृतेर्विभौ ।
अन्यथानुपपत्त्यासौ कल्प्यते न तु वस्तुत ॥ ३५ ॥
अनिर्वाच्यं जडं विश्वं समारोपितमात्मनि ।
यया सैवास्त्यविद्येयं तत्त्वज्ञानान्निवर्तते ॥ ३६ ॥
तत्त्वं ब्रह्मैव सद्वस्तु प्रत्यग्रूपमखण्डितम् ।
तद्बोधनाय शास्त्रस्य प्रवृत्तिः सर्वथा मता ॥ ३७ ॥
अवाच्यत्वादलक्ष्यत्वात्साक्षात्तस्य न बोधनम् ।
अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥ ३८ ॥

तत्त्वज्ञाने समुत्पन्ने समूलाध्यासबाधनात् ।
विमुच्यते विमुक्तोऽसौ निवृत्तं च निवर्त्तते ॥ ३९ ॥
इत्येवं शोधितो भावः समारोपनिवर्तनात् ।
दशमे मुनिना सूक्ष्मज्ञानदृगम्य एव हि ॥ ४० ॥
एकादशे कर्मफलपरिच्छेदाय भोगभूः ।
वर्णिताथाक्षरप्राप्ते योगश्चोक्तो यथाविधि ॥ ४१ ॥
सफलं योगमुक्त्वैवमध्यारोपं पुनर्मुनिः ।
मुमुक्षूणां प्रबोधाय शास्त्रसम्मतमब्रवीत् ॥ ४२ ॥
अध्यस्तः शुद्धचिद्रूपेऽहमित्यज्ञानमात्रतः ।
तद्विशिष्टे तु देहादेरध्यास इति दर्शितम् ॥ ४३ ॥
तत्राप्ययं जडः स्थूलो देहः षड्वक्त्रसंयुतः ।
नानारूपकविन्यासैः शास्त्रविद्भिः प्रकल्पितः ॥ ४४ ॥
कर्मभूमिरसौ देहो लिङ्गदेहैकसंयुतः ।
पञ्चभूतसमारब्धः कामकर्मादिसङ्कुलः ॥ ४५ ॥
तत्र मायामयं चित्तं ब्रह्मबोधाय निर्मितम् ।
स्वभावभूतं जीवस्याविद्योपाधेरनन्तकम् ॥ ४६ ॥
चित्तस्य वृत्तयोऽनन्ता नानासंस्कारवासिताः ।
आधिदैविकरूपेण यत्र विष्णुरववस्थितः ॥ ४७ ॥
चिदि विवृत्तयस्तस्य बहिरन्तरनन्तराः ।
जाग्रदादौ विचित्रेषु विषयेषु सवासनाः ॥ ४८ ॥
अधिष्ठानं परब्रह्म तेजस्तस्यान्तरे स्थितम् ।
चालितं वर्त्तते नित्यमधिदैवेन विष्णुना ॥ ४९ ॥
तद्ब्रह्म प्रापके योगयज्ञे ये स्युः समाहितः ।
लोकास्तु योऽनुभूयन्ते विराट् सूत्रेश्वरास्तु तैः ॥ ५० ॥
यद् ब्रह्म योगिभिर्योगे नैवानुभूयते सदा ।
तच्छुद्धं निहितं चित्ते प्राणोपाधौ प्रतिष्ठितम् ॥ ५१ ॥
वेदप्रचोदितं कर्म निष्कामं शुद्धचेतसा ।
क्रियमाणं परब्रह्मज्ञानसाधनमुत्तमम् ॥ ५२ ॥
सकामं नैव कर्तव्यं कर्म क्षुद्रफलत्वतः ।
सत्ये स्थेयं भ्रमो हेयो ज्ञेयं ब्रह्म श्रुतीरितम् ॥ ५३ ॥

उमाविद्यान्वितः सोमो ब्रह्मानन्दैकविग्रहः ।
सलिलं सुखमद्वैतं ज्ञानिनो निजविग्रहः ॥ ५४ ॥
आविर्भावः सुखस्यास्य धारा सैषा निरन्तरा ।
ययाभिषिक्तस्तत्त्वज्ञः स्वसाम्राज्ये महेश्वरः ॥ ५५ ॥
तेन सोमेन विज्ञानोपदिष्टोऽन्यः पुमान्सुधीः ।
ब्रह्मात्मविद्यालाभेन सोमात्सोमोऽभिजायते ॥ ५६ ॥

ब्रह्मानन्दमयी गङ्गा प्रादुर्भूता मुनेरियम् ।
बुद्ध्यादीन्द्रियवर्गे सा बहुधा प्रथितिं गता ॥ ५७ ॥
वर्णैस्तथाश्रमैः सर्वैरियं साध्या मतिर्मता ।
गुरुवेदान्तवाक्याना यत्र साफल्यमिष्यते ॥ ५८ ॥
श्रवणादिमयो धर्मो योगधर्मश्च कृत्स्नशः ।
ब्रह्मविद्योदये सम्यक्साफल्यं याति तद्विदः ॥ ५९ ॥

स्वस्वरूपेण विदुषां सुलभोऽमात्यदूरगः ।
अज्ञानां दुर्लभं तत्त्वज्ञानं भ्रान्त्यैकचेतसाम् ॥ ६० ॥
व्यवहारोऽपि विदुषां बाधितानुगतेर्भवेत् ।
इति शास्त्रार्थसंक्षेपो मुनिनैकादशे स्मृतः ॥ ६१ ॥

निष्कामधर्मसंसिद्धो योगो वैराग्यबृंहितः ।
निष्प्रत्यूहो विदां सिध्येदिति द्वादश उच्यते ॥ ६२ ॥
येषां स्याद्भगवद्भक्तिर्वैराग्यरसरञ्जिता ।
तेषां ब्रह्मात्मविज्ञानमनायासेन सिद्ध्यति ॥ ६३ ॥
अन्तः पूर्णो बहिः पूर्णो भाति येषां हरिर्हृदि ।
न तेषां योगसंसिद्धौ प्रत्यूहोद्भूतिरिष्यते ॥ ६४ ॥

चित्सत्तैव जगत्सत्ता चिद्भानं च जगत्प्रथा ।
निर्विशेषं परं ब्रह्म मायया विश्वतां गतम् ॥ ६५ ॥
सर्वव्यापारशून्यापि सर्वव्यापारभूश्चितिः ।
सर्वसत्तातिगा सर्वसत्ता सर्वमयी चितिः ॥ ६६ ॥
एवं ज्ञात्वा मुनिः प्रत्यगभिन्नं ब्रह्म चिद्घनम् ।
बाधित्वाज्ञानतत्कार्यं मुच्यते संसृतेरिति ॥ ६६ ॥
त्रयोदशे मुनिः सत्त्वं शुद्धं प्राप्य द्वयं त्यजेत् ।
रजस्तमश्च युञ्जानो योगं प्राहेति सिद्धये ॥ ६८ ॥

योगयुक्तो मुनिर्यर्हि प्राप्नोत्यैश्वर्यमुत्तमम् ।
तथापि नैव सज्जेत तत्र मायामये भ्रमे ॥ ६९ ॥
केवलं सात्त्विकं योगं ब्रह्मविद्याप्रदं मुनिः ।
कुर्वन्याति परब्रह्मसुखं शान्तरजाः परम् ॥ ७० ॥
आवृत्तेस्तामसं स्थानं विभ्रमस्य च राजसम् ।
हित्वा सत्त्वैकता तत्त्वे स्थेयं ब्रह्मात्मयोगिना ॥ ७१ ॥
विश्वतैजसप्राज्ञानामहङ्कारमलं मलम् ।
ब्रह्मबोधेन तुर्यस्थस्त्यजेद्भ्रान्त्या समुत्थितम् ॥ ७२ ॥
विकारा राजसाः सर्वे तामसा योगधर्मजाः ।
त्याज्यास्ते सर्वसिद्धीनां पदे भूम्नि प्रकल्पिताः ॥ ७३ ॥
ब्रह्मानन्दलवेनैव ब्रह्मादीनां पदान्यपि ।
भान्ति सौन्दर्य्यसाराणि तत्स्थ्यस्य स्यात्कुविस्मयः ॥ ७४ ॥
एवमात्मपदं बुध्वा त्यक्त्वा भ्रान्तिमयं जगत् ।
पदे भूम्नि सदा स्थेयमित्यदर्शि त्रयोदशे ॥ ७५ ॥
चतुर्दशे पृथग्भूते धारणा भीतिदायतः ।
अतः सूत्रे मनोधार्यमभयायेति कथ्यते ॥ ७६ ॥
एकीभूतं मनो यस्य धारणाभिश्चिकित्सितम् ।
सूत्रात्मना स सर्वत्र सर्वं प्राप्नोति जागतम् ॥ ७७ ॥
संकल्पेनास्य विषया देवा अप्सरसस्तथा ।
स्वयमेवोपतिष्ठन्ते सर्वभोगैकलक्षणाः ॥ ७८ ॥
वाणीं वेदमयीं सर्वां तदर्थांश्चाप्यनेकधा ।
वेत्ति विन्दति सार्वात्म्यगतो यो ब्रह्मणो हरेः ॥ ७९ ॥
ब्रह्मतत्त्वज्ञता सर्वोपास्तीनां फलमिष्यते ।
तल्लाभात्सर्वसम्पत्तिलाभ इत्येव निर्णयः ॥ ८० ॥
जीवन्मुक्त्यै ब्रह्मतत्त्वं चतुर्दशाभिरीरितम् ।
अथ द्वादशभिर्धर्मं ब्रवीति क्रममुक्तये ॥ ८१ ॥
तत्र पञ्चदशे ब्रह्मज्ञानादीनामहत्तमैः ।
कर्मभिर्ब्रह्मलोकादप्यावर्तन्त इतीर्य्यते ॥ ८२ ॥
भेदोपास्त्यपि दक्षादेर्भावं प्राप्य प्रजाः सृजेत् ।
न तु मोक्षमवाप्नोति कृतैः कर्मभिरेव च ॥ ८३ ॥

देवः स्यात्साक्त्विकाद्धर्मान्मध्यस्थो राजसात्कृतात् ।
अधस्थस्तामसाद्धर्मादिति त्रैविध्यमुच्यते ॥ ८४ ॥
वेदाधिकारिदेहोऽपि विष्णुभक्त्यैव लभ्यते ।
किं पुनरस्तत्त्वनिष्ठाप्तिरिति तद्भक्तिमाचरेत् ॥ ८५ ॥
भगवद्भक्तिहीना ये कर्मठा अपि निन्दिताः ।
किं पुनर्ये दुराचारा इति विष्णुरतिं श्रयेत् ॥ ८६ ॥
मायास्वरूपं ज्ञात्वा यो यत्किञ्चित्कुरुते जनः ।
नतद्दुष्यति तस्मात्तां वैष्णवीं संश्रयेन्मतिम् ॥ ८७ ॥
न प्रमाणेन शक्त्या सा ज्ञातुं माया तमस्विनी ।
ज्ञायमाना प्रमाणेन नश्यत्यर्केण रात्रिवत् ॥ ८८ ॥
कर्मिणामपि सद्भक्त्या ज्ञानलाभो हरेर्भवेत् ।
इति भक्तिं समाश्रित्य स्थेयं कर्माणि चोदिते ॥ ८९ ॥
सन्निवृत्तेः प्रवृत्त्याख्यधर्मस्य फलमीरितम् ।
प्रवृत्तिमात्रनिष्ठानां षोडशे स्थितिरुच्यते ॥ ९० ॥
प्रवृत्तिमान् पुमान् दक्षो बुद्धेस्तादात्म्यमृच्छति ।
तद्वृत्तीः कन्यकाः काममयीर्नित्यं सृजेन्मृषा ॥ ९१ ॥
तपः कुर्वञ्जयं कुर्वन्विषयेषु प्रसज्जते ।
कश्चिदेव प्रवृत्तिस्थो निष्कामो मोक्षमिच्छति ॥ ९२ ॥
योगं प्राप्यापि कामात्मा पतत्येव हि संसृतौ ।
कामं कश्चिन्निवर्त्याद्धा भगवन्तं भजेज्जनः ॥ ९३ ॥
क्षुद्रकामक्रियास्त्यक्त्वा भजेद्विष्णुं विमुक्तिदम् ।
नान्यथा संसृतेर्दुःखादुद्धारः कल्पकोटिभिः ॥ ९४ ॥
द्युचर्याव्रतचर्यौस्थैर्न्यूचे सप्तदशे व्रतम् ।
प्राणयज्ञहविर्यज्ञसंज्ञं चित्तजयावहम् ॥ ९५ ॥
चक्रमध्ये स्थिता नाड्यस्तिस्रस्तिस्रोऽत्र देवताः ।
इडा च वैष्णवी नाडी पिङ्गला ब्रह्मदेवता ॥ ९६ ॥
ऐश्वरी सा सुषुम्णा स्यान्मेरुमध्ये व्यवस्थिता ।
नाडीमध्यगता ग्रन्थित्रययुक्ता त्रिवेणिका ॥ ९७ ॥
वहत्युत्तरगा गङ्गा यमुना दक्षिणे स्मृता ।
सरस्वती पश्चिमायामासां सङ्गः सदान्तरे ॥ ९८ ॥

मेरुपृष्ठाख्यभ्रूघ्राणद्वयमध्योपलक्षिते ।
नित्यसिद्धे परब्रह्मण्याश्रये सर्वकारणे ॥ ९९ ॥
जीवात्मोपाधिनानेकवर्णवीजवता युते ।
सर्वदुःखातिगे धाम्नि नाडी त्रितयचारिणी ॥ २०० ॥
क्रोधादिजयिनः शान्ता निर्ममा निरहंक्रियाः ।
निर्विशेषं परब्रह्म प्रतिपत्तुं मुमुक्षवः ॥ २०१ ॥
निरुद्ध्याभ्यासतश्चित्तवृत्तिं प्राणजयेन हि ।
एकाग्रामेव कुर्वन्ति सदा ध्यानपरायणाः ॥ २ ॥
आत्मतीर्थे पुमान् दक्षः शास्त्राचार्योपदेशतः ।
धीवृत्त्या लब्धयात्माकं सङ्गतो यजते हरिम् ॥ ३ ॥
य इन्द्र आत्मदर्शी स्यद् गीयते सामभिः स च ।
तेन प्रोक्तानि सामानि सर्वात्मत्वार्थकान्यजे ॥ ४ ॥
योगयज्ञो वरो द्रव्ययज्ञाज्ज्ञानान्तरं गतः ।
ज्ञानेऽन्तरं गता यस्य सेव्यं तत्साधनं नृभिः ॥ ५ ॥
विवेकादिगुणानां यो वृद्धिं संपादयत्यलम् ।
स यज्ञः सर्वतः श्रेयान्नतुक्षुद्रफलः क्रतुः ॥ ६ ॥
तत्रापि वैष्णवी भक्तिरन्तरङ्गतया मतम् ।
ज्ञाने तस्माद्धरिः सेव्यो यज्ञदानादिभिः सदा ॥ ७ ॥
समाहितेन मनसा हरे पूजापरो मखः ।
स संपाद्योऽप्यनायाससाध्यो हिंसोज्झितो महान् ॥ ८ ॥
अहं ममेत्यनध्यासाद्यत्कृतं मनसा गिरा ।
हरितत्त्वं समालम्ब्य तन्मुक्तावुपयुज्यते ॥ ९ ॥
अध्यासोऽहं ममेत्येवं सर्वानर्थकरो मतः ।
तत्त्यागेऽनुदिनं यत्न आस्थेयः सन्मुमुक्षुणा ॥ १० ॥
तत्त्वज्ञानं विनाध्यासो न निवर्तेत देहिनः ।
न तद्भक्तिं विना सा नो चितशुद्धिं विना भवेत् ॥ ११ ॥
चितशुद्धिकरं यज्ञदानादिकमकामतः ।
कृतं तस्माच्चरेद्धर्मं निष्काममिति निर्णयः ॥ १२ ॥
पार्श्वोपिलक्षितं सुष्ठु सामीप्यं यस्य सद्गुरोः ।
सुपार्श्वो गुरुरित्युक्तोऽप्यविद्योच्छेदको मतः ॥ १३ ॥

स साधनानि वैराग्यादीनि संपाद्य सेव्यताम् ।
वैराग्यादेरभावेन न तद्गीः सफला भवेत् ॥ १४ ॥
अष्टादशे वपुर्भेत्तुमशक्तैः कर्मभूतले ।
कर्तव्यं ब्रह्मसदने चित्तशुद्ध्या इतीर्यते ॥ १५ ॥
वाराणस्यां वसन् धीरः कर्म निष्काममाचरन् ।
सत्त्वशुद्धविवेकादिसाधनान्याप्नुयात्स्वयम् ॥ १६ ॥
ज्ञानमोक्षप्रदे क्षेत्रे श्रद्धया निवसन्सुधीः ।
प्रयाणे मोक्षमाप्नोति निष्पापो निष्परिग्रहः ॥ १७ ॥
गङ्गास्नानं हरेः शम्भोः पूजनं सत्कथा श्रुतिम् ।
काश्यां वसन्ननायासाल्लभते ज्ञानसाधनम् ॥ १८ ॥
स्वधर्माचरणं पुंसां सत्त्वशुद्ध्यैककारणम् ।
तस्माद्धर्मं चरेन्नित्यमविमुक्तो विशेषतः ॥ १९ ॥
स्वधर्माचरणं हित्वा योऽन्यत्कर्माचरेद् द्विजः ।
स दण्ड्य इति सद्धर्मं कुर्यात्स्वविहितं सुधीः ॥ २० ॥
एकोनविंशे श्रौतोऽपि यज्ञः कामादिविघ्नितः ।
तेनेशभक्तिरेवैका तमोहन्त्री निगद्यते ॥ २१ ॥
आध्यात्मिकाः स्पर्द्धमानाः शमकामादयो मिथः ।
देवासुरा वभूवुस्ते तेषु पूर्वं शमादिभिः ॥ २२ ॥
वयं सर्वे ह्यनायासात्तदिन्द्रियकर्मणा ।
स्तोत्रपाठादिना दैत्याञ्जेष्याम इति निश्चिते ॥ २३ ॥
वागादीनि मनोऽन्तानि समस्तानीन्द्रियाण्यपि ।
कृतानि पापविद्धानि बलात्तान्यसुरैरुतः ॥ २४ ॥
अतो वागादयः सर्वे शुभाशुभनिदर्शकाः ।
अविशेषेण दृश्यन्ते देवा विद्धास्ततस्तु तैः ॥ २५ ॥
अतः शास्त्रीयकर्माणि कुर्वाणोऽपि यथाविधि ।
ममाहमिति दोषेण स्वार्थाद् भ्रश्यति मानवः ॥ २६ ॥
शास्त्रीयावृत्तयो देवाः प्रबला अपि पीडिताः ।
अभिमानेन मोहेन स्वाभाविकप्रवृत्तिभिः ॥ २७ ॥
त्यक्त्वाभिमानं शास्त्रीया देवाः सर्वे शमादयः ।
सूत्रात्मानं समष्टिस्थं प्राणाख्यं समुपाश्रिताः ॥ २८ ॥

ततः कामादयो दैत्या निहता वीतरागिभिः ।
त्यक्तेन्द्रियरसालम्बैः प्राणयात्रोपजीविभिः ॥ २९ ॥
अतो ब्रह्मसुखप्रेप्सुर्हित्वेन्द्रियगतं रसम् ।
प्राणयात्रानुगो ब्रह्मप्रत्यगात्मपरो भवेत् ॥ ३० ॥
इत्येवारण्यके सिद्धमर्थमत्र मुनिः स्वयम् ।
उपबृंहयति स्पष्टं रूपकैरान्तरैरपि ॥ ३१ ॥
चित्तं निरोध्यमानं सत्तमसा मधुनालयम् ।
याति सत्त्वेन हन्तव्यो जयिना विष्णुना स च ॥ ३२ ॥
आराध्यो भक्तिवश्योऽसौ सत्त्वमूर्त्तिर्हरिः स्वयम् ।
तद्भक्तिः सर्वतमसो हन्त्री कार्येति निश्चितम् ॥ ३३ ॥
तमसा देहनिगडे क्षिप्तमात्मानमुत्तमम् ।
उद्धरेत्सत्त्वसामर्थ्यादिति वंशे निरूप्यते ॥ ३४ ॥
मोहोऽसावासुरो भावो मधुः पाशैर्दुरुत्तरैः ।
बबन्धुः प्रत्यगात्मानं महेन्द्रं वासनामयैः ॥ ३५ ॥
भ्रान्तिजो हर्षप्रह्लादस्तद्गिरादेहपर्वते ।
निक्षिप्य बलवान्मूढकामाद्यैरसुरैः सह ॥ ३६ ॥
रजःप्रधानतमसो मधोर्मोहस्य बन्धनैः ।
बद्धो महेन्द्र आत्मासौ गतो दैन्यं भवावटे ॥ ३७ ॥
शब्दादिवृत्तयो नाना गन्धर्वा मधुसेवकाः ।
तदासक्तः स जीवोऽपि मधुतादात्म्यमृच्छति ॥ ३८ ॥
नानाजन्मार्जितैः पुण्यैः सत्त्ववृत्त्युपलक्षितः ॥
जीवः किञ्चित्समुन्मील्य सद्विवेकैकलोचनम् ॥ ३९ ॥
सत्त्वमूर्तिं हरिं सेव्यं पश्यत्यात्मगुरुं परम् ।
तत्प्रसादाय यतते तत्पूजास्मरणादिभिः ॥ ४० ॥
आराधितो हरिर्भक्त्या प्रीतः प्रेम्णा हृदि स्थितः ।
ततस्तस्य कृपालेशात्समुद्भूतो विवेकराट् ॥ ४१ ॥
विष्णुतेजः समाक्रान्तो बलवान्सत्त्वसंयुतः ।
मोहेन मधुना युद्धं कृतवानतिदुःसहम् ॥ ४२ ॥
तत्र यावज्जयो न स्याद्विवेकस्य महामृधे ।
मोहेन तावत्तस्यापि प्राबल्यं नैव वार्यते ॥ ४३ ॥

यज्ञयस्यात्मतत्त्वस्य साक्षात्काराहते नहि ।
तत्त्वसाक्षात्कृतौ तस्माद्यतेत सविवेकतः ॥ ४४ ॥
स्थूलसूक्ष्मादिदेहेभ्यः पृथगालोच्य सूक्ष्मदृक् ।
प्रत्यञ्चं त्वंपदार्थं तन्निष्ठः स्यात्सर्वदा मुनिः ॥ ४५ ॥
तत्पदार्थं परब्रह्मानुस्यूतं सर्ववस्तुनि ।
विविच्य मायिकाद् दृश्यात्सच्चिदानन्दमद्वयम् ॥ ४६ ॥
तेनैक्यं तत्त्वमस्यादिवेदमौलिगिरा सुधीः ।
सिद्धं निश्चित्य मनसा साधनैः श्रवणादिभिः ॥ ४७ ॥
निदिध्यासनदार्ढ्येन स्वस्वरूपमखण्डितम् ।
साक्षात्कुर्वन्महामोहं मधुना तमसा सह ॥ ४८ ॥
सविलासं निहत्यात्मखण्डाकारधियोद्धया ।
पुरुषोत्तमसंज्ञोऽसौ कृतकृत्यो विराजते ॥ ४९ ॥
इति सिद्धान्तमालोच्य विंशे धीरोऽत्र पौष्करे ।
याति ब्रह्मपरं धाम स्वात्मसाक्षात्कृतेरपि ॥ ५० ॥
सत्त्वेन निहते दोषे गुरुशास्त्रादिकं जगत् ।
हार्दे ब्रह्मणि पश्यन्तीत्येकविंशे निगद्यते ॥ ५१ ॥
महामोहे समुच्छिन्ने वृत्तयो मनसोऽखिलाः ।
ब्रह्मण्येव प्रयान्त्यन्तर्लयं नान्यत्र कुत्रचित् ॥ ५२ ॥
अधिकारोऽत्र देवर्षिमनुष्याणां श्रुतीरितः ।
विद्यायां ब्रह्मणः सर्वप्रत्यगात्मतया विभोः ॥ ५३ ॥
भक्तौ तद्वद्धरेरेषामधिकारः श्रुतीरितः ।
विष्णुरेव मधोर्हन्ता स उपास्यो मुमुक्षुभिः ॥ ५४ ॥
सत्त्वोत्कर्षवशादेव ज्ञानवैराग्ययोर्जनिः ।
स चाधीनो हरेरेव सत्त्वमूर्तेर्दयानिधेः ॥ ५५ ॥
हरिप्रसादादात्मज्ञगुरुलाभो गुरोर्मुखात् ।
श्रवणं वेदवाक्यानां ब्रह्मात्मैकत्ववादिनाम् ॥ ५६ ॥
महावाक्यैकनिर्णीतं तत्त्वं श्रुत्वा भ्रमोज्झितम् ।
मत्वा ध्यात्वाथ निश्चित्य सुपुमर्थैकभाग्भवेत् ॥ ५७ ॥
महावाक्योत्थिता बुद्धिवृत्तिरद्वैतगोचरा ।
ब्रह्मानन्दामृतास्वादतृप्ता तत्रैव तिष्ठति ॥ ५८ ॥

वृत्तावपि प्रलीनायां चिन्मात्रमवशिष्यते ।
तदुपोरमते योगी निर्विकल्परसामृते ॥ ५९ ॥
स्वात्मज्ञानकृतो बन्धः स्वात्मबोधाल्लयं व्रजेत् ।
अतस्तद्बोधसिद्ध्यर्थं भगवन्तं हरिं भजेत् ॥ ६० ॥
तत्रापि स्वेच्छयोपात्तं सच्चिदानन्दविग्रहम् ।
कृष्णं प्रेम्णा भजेद्विद्वांस्तेन मोक्षोऽस्य हस्तगः ॥ ६१ ॥
भूममाया विसूत्रात्मविराडात्मानमुच्यते ।
सर्वाकारं निराकारं सुराकारं नराकृतिम् ॥ ६२ ॥
कर्मोपास्त्यात्मविज्ञानबोधिशास्त्रैकगोचरम् ।
एकमेव हरिं ज्ञात्वा भजेत्प्रेम्णा निरन्तरम् ॥ ६३ ॥
इत्येकविंशसिद्धान्तरहस्यं मुनिसम्मतम् ।
बुध्वा मत्वा निदिध्यास्य निश्चित्यात्मपदं व्रजेत् ॥ ६४ ॥
द्वाविंशे परमैश्वर्यं योगलभ्यमिति ध्रुवम् ।
श्रद्धाविवृद्धये पुंसां प्राह योगं महत्कृतम् ॥ ६५ ॥
विष्णुर्महेश्वरो वायुर्वह्निर्भानुश्च यक्षराट् ।
चक्रुस्ते परमं योगं लोकश्रद्धाविवृद्धये ॥ ६६ ॥
तत्रापि भगवान्विष्णुर्महामायी महत्तमः ।
स्वयं लोकैकशिक्षार्थं तपोयोगमचीकरत् ॥ ६७ ॥
वासुकिः शेषनागश्च गरुडो हिमवान् गिरिः ।
ब्रह्मा सरस्वती चैव तपोयोगमचीकरन् ॥ ६८ ॥
तेनैव ते गताः सर्वोत्कृष्टमैश्वर्यमद्भुतम् ।
तस्माद्योगः सदा सद्भिः कर्तव्यो धर्मतत्परः ॥ ६९ ॥
योगेन रमते योगी ब्रह्मानन्दामृतार्णवे ।
सर्वोपायेन ब्रह्मात्मयोगः सेव्यो मुमुक्षिभिः ॥ ७० ॥
योगविघ्नविघाताय कर्माण्येवाचरेदिति ।
त्रयोविंशे पुराकल्पमुखेनैतत्प्रसाध्यते ॥ ७१ ॥
कृष्णार्पणधिया कर्म कर्तव्यं विहितं सदा ।
कृष्णैकप्रवणं चित्तं येन स्यात्तत्समाचरेत् ॥ ७२ ॥
कृष्णचित्तो धियः शुद्धिं वैराग्यं ज्ञानमुत्तमम् ।
अनायासेन लभते तस्मात्कृष्णमना भवेत् ॥ ७३ ॥

प्रापुर्योगफलं मोक्षं सात्त्विका न तु तामसाः ।
तुल्यश्रमा अपीत्येतच्चतुर्विंशेऽभिधीयते ॥ ७४ ॥
विवेकमन्दरेणाब्धितुल्ये देहत्रये बुधः ।
ज्ञानामृतं विनिर्मथ्य संघातं विनिक्षिप्य च ॥ ७५ ॥
तदास्वाद्याचलं स्थानं समारोहेत्सुखास्पदम् ।
सहायो भगवान्विष्णुराराध्यो भक्तवत्सलः ॥ ७६ ॥
कर्माणि कर्मठं जन्तुं साधनानीतराण्यपि ।
अक्षमानि पदं नेतुं भगवद्भक्तिमन्तरा ॥ ७७ ॥
शमकामादयः सर्वे देवासुरगणा अपि ।
ज्ञानामृतं समुद्धर्तुं न क्षमा हरिमन्तरा ॥ ७८ ॥
शुद्धं सत्त्वमयं धर्मं सहायं न्यस्य वासुकिम् ।
मथितं सन्मनोवारि ततो ज्ञानामृतं भवेत् ॥ ७९ ॥
विष्णुभक्तिप्रसादात्तल्लब्धं देवैः शमादिभिः ।
न ततो विमुखैर्लब्धं कामाद्यैरसुरैर्हि तत् ॥ ८० ॥
देहाभिमानतो राहोः शिरश्छन्नं पृथक्कृतम् ।
विष्णुना ज्ञानचक्रेणाहन्त्वञ्चिन्मात्रवेदिना ॥ ८१ ॥
अहं ब्रह्मेति धीवृत्त्या राहुणा परमामृतम् ।
पीतं तद् दृश्यतो भागात्पृथक्कृत्यैव चिन्मयम् ॥ ८२ ॥
ज्ञानाभिमानं सन्त्यागः शिरश्छेदो विवक्षितः ।
तत्त्याजनेन सामर्थ्यमृते विष्णुं स्वयं प्रभुम् ॥ ८३ ॥
मनश्चक्रनियन्तृत्वाच्छुद्धसत्त्वमयत्वतः ।
अन्त्यधीवृत्तिरूढत्वात्क्षमस्तत्त्याजने हरिः ॥ ८४ ॥
लक्ष्मीवान्माद्यतीत्यस्य वित्तं हरति केशवः ।
कृपयैवेति वक्तुं तद्विभ्रंशोऽपि च वर्ण्यते ॥ ८५ ॥
पञ्चविंशे हरेर्भक्तो जयतीत्येव दर्शयन् ।
बलेराह प्रसिद्धस्य हिरण्यकशिपोः क्रतुम् ॥ ८६ ॥
निष्कामस्य बले राज्ञो यज्ञे वामनरूपधृक् ।
हरिर्याच्ञाछालेनास्मात् त्रैलोक्यं हृतवान्स्वयम् ॥ ८७ ॥
निष्कामभक्तवशगो हरिस्तत्रैव तिष्ठति ।
सकामाय तु यत्किञ्चिद्दत्वाप्यन्तर्द्धिमृच्छति ॥ ८८ ॥

जात्यासुरोऽपि भगवद्भक्तिं कुर्वन्महत्तमाम् ।
पदवीं याति यस्याग्रे लक्ष्मीशोऽपि हि याचकः ॥ ८९ ॥

षड्विंशे द्रोहिणं दक्षं शंभुर्दण्डेन सत्पथे ।
न्यवेशयत्कियांस्तत्र बलौ भक्तेऽप्यनुग्रहः ॥ ९० ॥

ईश्वरद्रोहिणा धर्मः कृतो मध्ये विनश्यति ।
तत्प्रसादात्फलत्येवं प्राह दक्षविनिग्रहे ॥ ९१ ॥

दक्षोऽप्यज्ञो न जानाति धर्ममूलं महेश्वरम् ।
कुतो न नश्येत् तत्कर्म मध्ये देवस्य हेलनात् ॥ ९२ ॥

साहंकारेण यत्कर्म कृतं तन्नैव शोभते ।
यथा दक्षकृतो यज्ञो मृषा रुद्रगणैः कृतः ॥ ९३ ॥

ब्रह्मविद्द्वेष्यतां याति कर्मठानां फलैषिणाम् ।
ततस्तदपराधेन कर्मठो न सुखं व्रजेत् ॥ ९४ ॥

यद्यप्यपेक्षते धर्मं ज्ञानं स्वोत्पत्तयेऽखिलम् ।
उत्पन्नं तत्समूलं तमुच्छिनत्ति स्वभावतः ॥ ९५ ॥

धर्माधिष्ठातृदेवस्य ज्ञानाधिष्ठातृदेवतः ।
भेदं कुर्वन्विनश्येत्तु यजमानोऽपि दक्षवत् ॥ ९६ ॥

वेदतत्त्वमनालोच्य महानपि महापदम् ।
प्राप्नोति दक्षवत्तस्माद्वेदतत्त्वं विचारयेत् ॥ ९७ ॥

न कुर्याद्देवतावज्ञां महानपि महत्तरे ।
कर्मण्यपि प्रवृत्तेऽसौ नो चेद्भ्रश्यति दक्षवत् ॥ ९८ ॥

सर्वदेवमयं शंभुं विष्णुं वावज्ञयेक्षते ।
यः स मूढोऽतिदक्षोऽपि विनश्यत्येव दक्षवत् ॥ ९९ ॥

कृत्वाऽप्यवज्ञां देवस्य तमेव शरणं व्रजेत् ।
तत्प्रसादात्फलावाप्तिरनन्तेति विनिश्चितम् ॥ ३०० ॥

यः शिवः स च वै विष्णुर्यो विष्णुः शिव एव सः ।
इत्यभेदपरं शास्त्रं तत्तथैव विचारयेत् ॥ ३०१ ॥

ब्रह्माद्वैतपरे शास्त्रे न भेदोऽस्ति मनागपि ।
तात्पर्यविषयस्तस्माद्भेदं सर्वात्मना त्यजेत् ॥ २ ॥

इत्येवं पौष्करे प्रादुर्भावे तात्पर्यनिर्णयः ।
यथामति मयाकारि श्रीकृष्णाङ्घ्रिप्रसादतः ॥ ३ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविदुषा कृते भारततात्पर्यप्रकाशे हरिवंशे पुष्करप्रदुर्भावतात्पर्यप्रकाशः समाप्तिमगमत् ॥

---

## अथ त्र्यक्षकृतत्रिपुरवधतात्पर्यप्रकाशः ।

ॐ तत्सत् ।

वन्दे कृष्णपदाम्भोजमकरन्दरजोवहान् ।
भक्ताननुग्रहाद्येषां भातिभारतभारती ॥ १ ॥
भारते हरिवंशान्ते प्रोक्तस्त्र्यक्षाद् वधोऽद्भुतः ।
अनादिसिद्धदैत्यानां तत्तात्पर्यमिहोच्यते ॥ २ ॥
त्र्यक्षो ब्रह्मात्मतत्त्वज्ञो यस्य ब्रह्मैक्यदर्शने ।
साधनान्यक्षवत् त्रीणि श्रवणादीनि सद्गिराम् ॥ ३ ॥
अर्चनध्यानज्ञानानि त्रीणि वा ब्रह्मणो हरेः ।
शास्त्रोक्तान्यघविक्षेपाज्ञानध्वान्तापहान्यपि ॥ ४ ॥
तस्मात् त्र्यक्षात् त्रयाणां हि देहानां पुरसंज्ञिनाम् ।
बधः समूलविध्वंसः श्रोतव्यः स्यान्मुमुक्षुणा ॥ ५ ॥
शङ्करेण त्रिभिः शूलैः परानन्दप्रपित्सुना ।
श्रवणमननध्यानसंज्ञकैः साधनैः कृतम् ॥ ६ ॥
कामादीनां सुरारीणां संशयादिभ्रमात्मनाम् ।
मुमुक्षवो बधं श्रुत्वा यतन्त मोक्षसिद्धये ॥ ७ ॥
विश्वतैजसप्राज्ञाख्यैरभिमानिभिरान्तरैः ।
जाग्रत्स्वप्नसुषुप्त्याख्यं पुरं भोग्यं महासुरैः ॥ ८ ॥
ब्रह्मण्यारोपितैर्मायाकार्यैर्देहैस्त्रिभिस्त्रयः ।
महाभिमानिनो दैत्या विश्वाद्या विचरन्त्यमी ॥ ९ ॥
तेषामनुचराः कामक्रोधाद्या दानवेश्वराः ।
शमादीनां सुराणां ते वैरिणोऽत्यन्तदुःसहा ॥ १० ॥
काञ्चनाभेन देहेन भोगमोक्षोपयोगिना ।
प्राकारेण पुरं सूक्ष्मं संवृतं भ्रान्तिशालिना ॥ ११ ॥

इन्द्रियाश्वाः पुरं देहं वहन्ति मतिवृत्तिभिः ।
तृष्णायाः पोषकैर्नित्यं विक्रमैर्वासनाभिधैः ॥ १२ ॥
सूर्यनाभासुरश्चक्षुः सूर्यभासावभासनात् ।
चन्द्रेणानुगृहीतत्वाच्चन्द्रनाभासुरो मनः ॥ १३ ॥
यद्यत्पश्यति चक्षुर्भ्यां शोभनं वस्तु लौकिकम् ।
इदं मे स्यादिदं मे स्यादित्येवं मनसेच्छति ॥ १४ ॥
अतश्चक्षुर्मनोदैत्यौ पुराध्यक्षत्वमागतौ ।
कामलोभादयः सर्वे तदासक्तिपरायणाः ॥ १५ ॥
अर्चिरादिसृती कर्मोपासने तेऽसुरा बलात् ।
भोगैकप्रवणत्वेन बभञ्जुर्मोहिताः शठाः ॥ १६ ॥
शमाद्याः पीडिता देवा ईश्वरं शरणं गताः ।
स शास्त्राचार्यरूपेण सान्त्वयित्वा वचोऽब्रवीत् ॥ १७ ॥
ऋते ज्ञानं शिवं दैत्या मनश्चक्षुःपुरःसराः ।
कामाद्या न विनश्यन्ति समूलाश्च सवासनाः ॥ १८ ॥
बोधशम्भुप्रसादार्थमुद्यतास्ते शमादयः ।
सुरास्तपोजपाद्यैस्तोत्रैर्धर्मैर्यथाश्रमम् ॥ १९ ॥
तपोयोगबलेनैव वैराग्यैश्वर्य्यतोऽसुराः ।
तृष्णाद्या दुर्बलाः सन्तो वासनात्मकतां गताः ॥ २० ॥
ततो हरालयं हार्दाकाशं ब्रह्मोपलब्धये ।
शमादयः सुरा जग्मुर्ब्रह्मोपासितुमक्षरम् ॥ २१ ॥
ब्रह्मास्तीति परोक्षैकनिश्चयेन हरं परम् ।
अदृष्ट्वा प्रार्थयन्ते ते भगवन्तं स्वलब्धये ॥ २२ ॥
साक्षात्कारं विना ज्ञानं प्राप्तमप्राप्तवद्भवेत् ।
यमेवैष विवृणुते तेन लभ्य इति श्रुतेः ॥ २३ ॥
सगुणं प्रार्थयन्तेऽतो देवं देवाः शमादयः ।
स प्रार्थितः पुरोच्छेदं कर्तुं सज्जो बभूव ह ॥ २४ ॥
शमाद्यैरमरैः सार्द्धं विद्वांस्त्र्यक्षो हरीक्षितः ।
विरक्तस्त्रिपुरं देहत्रयं भङ्क्तुं समुद्यतः ॥ २५ ॥
शरं कृत्वात्मनो रूपं प्रगृह्य प्रणवं धनुः ।
संयोज्य प्रणवे चेतो लक्ष्ये ब्रह्मणि संस्थितः ॥ २६ ॥

ब्रह्मध्यानबलेनैव स्थूलाध्यासनिवृत्तितः ।
कामाद्या भिन्नदेहास्ते दैत्या नष्टा इवापतन् ॥ २७ ॥
विश्वाभिमानिनः स्थूलं पुरं प्राकारवत्स्थितम् ।
चक्षुर्मनोभ्यामवितं विद्धं ध्यानशरेण तत् ॥ २८ ॥
तत्र कामादयो दैत्या ये प्रचण्डा रणे स्थिताः ।
तेऽपि विद्धं यथालाभसन्तोषाद्यैः सुरैरपि ॥ २९ ॥
कदाचिल्लयविक्षेपदैत्यबाध उपस्थिते ।
शमादयोऽपि विलयं यान्ति ज्ञानं विना सुराः ॥ ३० ॥
ततः कामादयो दैत्या भोगैः सूक्ष्मैः शरैः सुरान् ।
विद्ध्वाजयञ्छमादींस्ते दीना आसन्पुनर्भ्रमात् ॥ ३१ ॥
संत्यक्तस्थूलदेहाभिमानानामपि योगिनाम् ।
सूक्ष्माध्यासपरित्यागं विना नास्ति सुखं स्थिरम् ॥ ३२ ॥
योगी शम्भू रथं सूक्ष्मं देहमास्थाय शोधितम् ।
कामादीनसुरान्दृष्ट्वा दग्धवान् भ्रान्तिशालिनः ॥ ३३ ॥
वृषेण योगधर्मेण ध्वजाग्रेणेव सर्पता ।
सरथः स्तूयमानोऽन्यैर्देवैरारूढभूमिकैः ॥ ३४ ॥
सूक्ष्मदेहे स्थितं त्र्यक्षं शमाद्यैरमरैः सह ।
दृष्ट्वा कामादयो दैत्याः पुनर्योद्धुं समागतः ॥ ३५ ॥
सूक्ष्मैः कामादिभिर्देवाः शमाद्याः पीडिता बलात् ।
अज्ञानमृत्योर्विषये निबद्धास्त्र्यक्षसंयुताः ॥ ३६ ॥
शोधिते सूक्ष्मदेहेऽपि यावदज्ञानभाव्ययम् ।
पराभवो मोहसैन्यैर्योगिनोऽप्यवबोधनात् ॥ ३७ ॥
एवं सूक्ष्मे स्थितस्यापि योगिनो विभ्रमोदयः ।
उक्तोऽथाह लयं विघ्नं त्र्यक्षस्यापि भयावहम् ॥ ३८ ॥
विद्वान् हरोऽपि सूक्ष्मस्थो लयाभिभवमास्थितः ।
तद्रथः सूक्ष्मदेहोऽपि निमग्नो लयगोचरे ॥ ३९ ॥
पूर्वं भक्त्या प्रसादाभिमुखो विष्णुरथोत्तमम् ।
वृषेण धर्मरूपेण सत्त्वमूर्त्योज्जहार ह ॥ ४० ॥
सगुणस्य हरेर्भक्त्या त्र्यक्षो विद्वान्समुद्धृतः ।
शमाद्यैर्नाशिता दैत्याः कामाद्या हरिसंश्रितैः ॥ ४१ ॥

अहो विष्णोरयं भक्तेर्महिमा कश्चिदुत्तमः ।
यन्मुमुक्षोस्तथाज्ञस्य तदधीना समुद्धृतिः ॥ ४२ ॥
सूक्ष्माभिमानं त्यक्त्वाऽसौ त्वम्पदार्थविवेचनात् ।
शुद्धं विद्वान्प्रपित्सुः संलयविक्षेपशत्रुहा ॥ ४३ ॥
ततस्तत्त्वमसीत्येवं वेदवाक्यैक्यबोधनात् ।
अखण्डार्थपरो भूत्वा त्र्यक्षः सबलमास्थितः ॥ ४४ ॥
भ्रान्तिशून्येन मनसा तात्पर्यं श्रुतिगोचरम् ।
विचार्याखण्डब्रह्मात्मप्रत्यक्चं वेत्ति तत्त्वतः ॥ ४५ ॥
अकारादित्रिमात्रेण प्रणवेनं शरेण सः ।
अर्द्धमात्रा तुरीया तु संधाननिशितेनं च ॥ ४६ ॥
महावाक्योत्थधीवृत्तिवह्निज्वालोज्ज्वलात्मना ।
वृत्यारूढचिदानन्दमहाविष्णुमुखेन च ॥ ४७ ॥
विश्वतैजसप्राज्ञाभिमानासुरविलापनात् ।
जाग्रदादिसुदुर्भेदपुरत्रयं निमेषतः ॥ ४८ ॥
दग्ध्वैव भस्मसाच्चक्रे दैत्यैः कामादिभिः सह ।
त्र्यक्षश्चिन्मात्ररूपेण जयतीति विनिर्णयः ॥ ४९ ॥
आदौ स्वधर्ममाराध्य विष्णुं कुर्याच्छ्रुतीरितम् ।
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ ५० ॥
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
भक्त्यावेशान्मनःशुद्धिमचिरेणैति तत्परः ॥ ५१ ॥
ततो विवेकवैराग्यशमाद्यैश्च मुमुक्षुताम् ।
प्राप्य सद्गुरुमद्वैतनिष्ठं वेदान्तपारगम् ॥ ५२ ॥
आसाद्य शरणं तस्य मनसा कर्मणा गिरा ।
सेवनं प्रणिपाताद्यैरुपायैर्विहितं चरेत् ॥ ५३ ॥
तन्मुखाद्वेदसिद्धान्तरहस्यं विधिवन्मुनिः ।
श्रुत्वा मत्वा निदिध्यास्य वेत्ति ब्रह्मात्मकं पदम् ॥ ५४ ॥
स चाज्ञानमहामोहदैत्यनिर्माणनिर्मितम् ।
त्रिपुरं कामनगरं दहत्यज्ञानसंयुतम् ॥ ५५ ॥
पूर्वपूर्वाभिमानस्य त्यागाद्विद्वान्महागुणः ।
अज्ञानं ब्रह्मबोधाग्नितेजसा दहति ध्रुवम् ॥ ५६ ॥

वाक्यार्थैक्यानुसन्धानजन्या वृत्तिरनुत्तमा ।
ब्रह्मविद्या तदेवास्त्रं ब्रह्मदण्डमयं महत् ॥ ५७ ॥
मूलज्ञाने तृतीयेऽस्मिन्नगरे ऽसौ प्रमुञ्चति ।
त्र्यक्षो ज्ञानी महाविष्णुकटाक्षेण निरीक्षितः ॥ ५८ ॥
मूलाज्ञानं स दहति सविलासं सवासनम् ।
तेनैव परमास्त्रेण त्रिपुरासुररूपकम् ॥ ५९ ॥
ततोऽवशिष्यते तुर्यरूपं ब्रह्म चिदद्वयम् ।
स्वराज्ये स्वमहिम्न्याख्ये द्वैतशून्ये परे पदे ॥
विद्वांस्त्र्यक्षः स्वयं साक्षात्कृतकृत्यो विसज्जते ॥ ६० ॥
विष्णोरनुग्रहादेव धर्मवैराग्ययोरपि ।
लाभ आचार्यवर्यस्य श्रवणादेश्च सत्क्रियः ॥ ६१ ॥
अतः सर्वात्मना सेव्यो विष्णुरेव निरन्तरम् ।
अर्चनध्यानबोधाद्यैरुपायैरखिलैरपि ॥ ६२ ॥
वेदेतिहासनिर्णीततत्त्वं श्रीविष्णुमद्वयम् ।
सगुणं निर्गुणं वापि भजेत हरिमीश्वरम् ॥ ६३ ॥
सर्वः सर्वात्मना प्रेम्णा भजेत हरिमव्ययम् ।
मुमुक्षुर्ज्ञानलाभाय ज्ञानी मोक्षाय सर्वदा ॥ ६४ ॥
भारते सर्ववेदार्थः संगृहीतो महात्मना ।
रूपकैरपि तस्योपबृंहणं तत्र तत्र च ॥ ६५ ॥
मया व्यासप्रसादेन यथामति विवेचनात् ।
समासात्तस्य तात्पर्यं दर्शितं हरितुष्टये ॥ ६६ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषिश्रीसदानन्दविदुषा विरचिते भारततात्पर्यप्रकाशे हरिवंशान्ते त्र्यक्षकृत त्रिपुरवधतात्पर्यसंक्षेपदर्शनं समाप्तिमगमत् ।

---

ॐ तत्सत् विष्णवे नमः । श्रीकृष्णार्पणमस्तु ॥

जयन्तु श्रीमन्मुकुन्दपदारविन्दमकरन्दरजःस्रजः श्रीरस्तु ।

---

सर्वत्र दैत्याः समतामुपेत्य समत्वमाराधनमच्युतस्य॥
अस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते।
समाश्रिता ब्रह्मतरोरनन्तान्निःसंशयं प्राप्स्यथ वै महत् फलम्॥

पराशर उवाच।

तस्यैतद्दानवाश्चेष्टा दृष्ट्वा दैत्यपतेर्भवान्।
आचख्युश्च स चोवाच सूदानाहूय सत्वरम्॥

हिरण्यकशिपुरुवाच।

हे सूदा मम पुत्त्रोऽसावन्येषामपि दुर्मतिः।
कुमार्गदेशको दुष्टो ह्न्यतामविलम्बितम्॥
हालाहलं विषं तस्य सर्वभक्ष्येषु दीयताम्।
अविज्ञातमसौ पापो वध्यतां मा विचार्यताम्॥

पराशर उवाच।

ते तथैव ततश्चक्रुः प्रह्लादाय महात्मने।
विषदानं यथाज्ञप्तं पित्रा तस्य महात्मनः॥
हालाहलं विषं घोरमनन्तोच्चारणेन सः।
अभिमन्त्र्य सहान्नेन मैत्रेय बुभुजे तदा॥
अविकारं सकद्भुक्त्वा प्रह्लादः स्वस्थमानसः।
अनन्तख्याति निर्वीर्यं जरयामास दुर्विषम्॥
ततः सूदा भयत्रस्ता जीर्णं दृष्ट्वा महाविषम्।
दैत्येश्वरमुपागम्य प्रणिपत्येदमब्रुवन्॥

सूदा ऊचुः।

दैत्यराज विषं दत्तमस्माभिरतिभीषणम्।
जीर्णं तच्च सहान्नेन प्रह्लादेन सुतेन ते॥

हिरण्यकशिपुरुवाच।

त्वर्यतां त्वर्यतां सद्यो हे हे दैत्यपुरोहिताः।
कृत्यां तस्य विनाशाय उत्पादयत मा चिरम्॥

पराशर उवाच।

सकाशमागम्य ततः प्रह्लादस्य पुरोहिताः।
सामपूर्वमथ प्रोचुः प्रह्लादं विनयान्वितम्॥

पुरोहिता ऊचुः।

जातस्त्रैलोक्यविख्याते आयुष्मान् ब्रह्मणः कुले।
दैत्यराजस्य तनयो हिरण्यकशिपोर्भवान्॥
किं देवैः किमनन्तेन किमन्येन तवाश्रयः।
पिता ते सर्वलोकानां त्वं तथैव भविष्यसि॥
तस्मात् परित्यजैतां त्वं विपक्षस्तवसंहिताम्।
बाढं पिता समस्तानां गुरूणां परमो गुरुः॥

प्रह्लाद उवाच।

एवमेतत् महाभागाः श्लाघ्यते तन्महाकुलम्।
मरीचेः सकलेऽप्यस्मिन् त्रैलोक्ये कोऽन्यथाऽवदेत्॥
पिता च मम सर्वस्मिन् जगत्युत्कृष्टचेष्टितः।
एतदप्यवगच्छामि सत्यमेवात्र नानृतम्॥
गुरूणामपि सर्वेषां पिता च परमो गुरुः।
यदुक्तं भ्रान्तिरत्रापि स्वल्पापि हि न विद्यते॥
पिता गुरुर्न संदेहः पूजनीयः प्रयत्नतः।
तत्रापि नापराध्यामीत्येवं मनसि मे स्थितम्॥
यत्त्वेतत् किमनन्तेनेत्युक्तं युष्माभिरीदृशम्।
को ब्रवीति यथा युक्तं किन्तु नैतद्वचोऽर्थवत्॥

पराशर उवाच ।

इत्युक्त्वा सोऽभवन्मौनी तेषां गौरवयन्त्रितः ।
प्रहस्य च पुनः प्राह किमनन्तेन साध्विति ॥

प्रह्लाद उवाच ।

साधु भोः किमनन्तेन साधु भो गुरवो मम ।
श्रूयतां तदनन्तेन यदि खेदं न गच्छत ॥
धर्मार्थकाममोक्षाख्यः पुरुषार्थ उदाहृतः ।
चतुष्टयमिदं यस्मात् तस्मात् किं किमिदं वृथा ॥
मरीचिमिश्रैर्दक्षाद्यैस्तथैवान्यैरनन्ततः ।
धर्मः प्राप्तस्तथैवान्यैरर्थः कामस्तथा परैः ॥
तत् तत्त्ववेदिनो भूत्वा ज्ञानध्यानसमाधिभिः ।
अवापुर्मुक्तिमपरे पुरुषा ध्वस्तबन्धनाः ॥
संपदैश्वर्यमाहात्म्यं ज्ञानसन्ततिकर्मणाम् ।
विमुक्तेश्चैकतालभ्यममलाराधनं हरेः ॥
यतो धर्मार्थकामाख्यं मुक्तिश्चापि फलं द्विजाः ।
तेनापि किं किमित्येवमनन्तेन किमुच्यते ॥

पुरोहिता ऊचुः ।

दह्यमानस्त्वमस्माभिरग्निना बाल रक्षितः ।
भूयो न वक्ष्यसीत्येवं नैवं ज्ञातोऽसि बुद्धिमान् ॥
यद्यस्मद्वचनान्मोहग्राहं न त्यक्ष्यते भवान् ।
ततः कृत्यां विनाशाय तव स्रक्ष्याम दुर्मते ॥

प्रह्लाद उवाच ।

कः केन हन्यते जन्तुर्जन्तुः कः केन रक्ष्यते ।
हन्ति रक्षति चैवात्मा ह्यसत् साधु समाचरन् ॥

इत्युक्तस्तेन ते क्रुद्धा दैत्यराजपुरोहिताः ।
कृत्यामुत्पादयामासुर्ज्वालामालोज्ज्वलाकृतिम् ॥
अतिभीमा समागम्य पादन्यासक्षतक्षितिः ।
शूलेन सा च संक्रुद्धा तं जघान तु वक्षसि ॥
तत् तस्य हृदयं प्राप्य शूलं बालस्य दीप्तिमत् ।
जगाम खण्डितं भूमौ तत्रापि शतधा गतम् ॥
यत्रानपायी भगवान् हृद्यास्ते हरिरीश्वरः ।
भङ्गो भवति वज्रस्य तत्र शूलस्य का कथा ॥
अपापे तत्र पापैश्च पातिता दैत्ययाजकैः ।
तानेव सा जघानाशु कृत्या नाशं जगाम सा ॥
कृत्यया दह्यमानांस्तान् विलोक्य स महामतिः ।
रक्ष कृष्णेत्यनन्तेति वदन्नभ्युपपद्यत ॥
त्राहि विप्रानिमानस्माद्दुःसहान्मन्त्रपावकात् ।
यथा सर्वेषु भूतेषु सर्वव्यापी जगद्गुरुः ॥
विष्णुरेव तथा सर्वे जीवन्त्वेते पुरोहिताः ।
यथागतं विष्णुं मन्यमानो न पातकम् ॥
चिन्तयाम्यरिपक्षेऽपि जीवन्त्वेते पुरोहिताः ।
ये हन्तुमागता दत्तं यैर्विषं यैर्हुताशनः ॥
यैर्दिग्गजैरहं क्षुण्णो दष्टः सर्पैश्चयैरहम् ।
तेरहं मित्रपक्षे च समः पापोऽस्मि न क्वचित् ॥
यथा तेनाद्य सत्येन जीवन्त्वसुरयाजकाः ।

पराशर उवाच ।

इत्युक्तेन ते सर्वे संस्पृष्टाश्च निरामयाः ।
समुत्तस्थुर्द्विजा भूयस्तं चोचुः प्रश्रयानतम् ॥

ओं नमः परमात्मने ।

# अथ मोक्षधर्मसारोद्धारः

सटीकः

श्रीसदानन्दव्यासविरचितः ।

---

**धर्मे मतिर्भवतु वः सततोत्थितानां**
**स ह्येक एव परलोकगतस्य बन्धुः ।**
**अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना**
**नैवाप्तभावमुपयान्ति नच स्थिरत्वम् ॥ १ ॥**

**युधिष्ठिर उवाच ।**

**धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः ।**
**धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव ॥ १ ॥**

श्रीगणेशाय नमः ।

ॐ नत्वा गोविन्दपादाब्जयुगं तद्भक्तिलब्धये ।
मोक्षधर्मसुधाम्भोधिसारोद्धारं करोम्यहम् ॥ १ ॥
वासुदेवाश्रयो योगी सुधीर्भागवतप्रियः ।
तत्प्रेमप्रेरितो मोक्षसारोद्धारकृते यते ॥ २ ॥
निष्कामधर्मतो भक्तिर्वैराग्यं ज्ञानमेव च ।
सिध्येत्तस्माद्धरौ भक्तिहेतुर्धर्म इहोच्यते ॥ ३ ॥
येनैवाराध्यते विष्णुर्भगवान् देवकीसुतः ।
स धर्मोऽत्र प्रशस्यः स्यात्तमाह भगवान्मुनिः ॥ ४ ॥
आशिषं चोपदेशं च भगवान् बादरायणः ।
भारतादौ जगादैवं हितायैव नृजन्मनाम् ॥ ५ ॥
अर्थः कामश्च तुच्छत्वान्नैव सेव्यौ विपश्चिता ।
सेव्यो धर्मः पुमर्थत्वाद्भक्तिज्ञानादिकारणम् ॥ ६ ॥

पुमर्थाभास एवायमर्थः कामश्च सर्वथा ।
धर्मो मुख्यः पुमर्थः स्याद्वेदमानैकगोचरः ॥ ७ ॥
वेदप्रमाणको धर्मो गोविन्दाराधनात्मकः ।
निष्कामो वा सकामो वा धर्म एव नृणां गतिः ॥ ८ ॥
तत्र निष्काम एवास्ति धर्मो मुख्यः पुमर्थकः ।
न सकामो यतः कामो निन्द्योऽनित्यतयेरितः ॥ ९ ॥

तत्र नानाविधान् दुरनुष्ठेयान् क्षुद्रफलान् राजधर्मान् आपद्धर्मांश्च श्रुत्वा अत्यन्तमुद्विग्नः सर्वापन्निवारणं चात्यन्तिकश्रेयोहेतुं धर्मं जिज्ञासमानो युधिष्ठिर उवाच धर्मा इति। पितामहेनेति श्रैष्ठ्यं वात्सल्यं च सूचितं राजधर्माश्रिताः राजधर्माङ्गत्वेनोपस्थिताः धर्मा आपद्धर्मा उक्ताः श्रेष्ठः प्रशस्यतमो मोक्षधर्मस्तम्। आश्रमिणामित्युक्तेर्गृहस्थादीनां सर्वेषामप्यत्राधिकारो दर्शितः। तथोक्तं याज्ञवल्क्येन "स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव त्वि"ति॥१॥

## भीष्म उवाच ।

**सर्वत्र विहितो धर्मः सत्ये प्रेत्य तपःफलम् ।**
**बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ २ ॥**

कर्मज्ञानफले विभजते। ज्ञाने श्रैष्ठ्यं वक्तुं सर्वत्रेति। सर्वत्राश्रमेषु धर्मो विहितो वेदेन अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिना अदृष्टफलः स इत्यर्थः सत्ये प्रेत्य तपःफलं सति सद्वस्तुनि विषये तपः आलोचनं श्रवणमनननिदिध्यासनात्मकं तस्य फलं तत्त्वसाक्षात्कारः स प्रेत्य मरणात्प्रागेव भवति ज्ञानं दृष्टफलमित्यर्थः। ननु तर्हि तप एव क्रियतां किं धर्मेणेत्याशङ्क्याह बह्विति। अयमर्थः यज्ञेन विविदिषन्तीति श्रुतेः अश्वेन जिगमिषतीतिवत्करणस्य धात्वर्थेनान्वयात् विद्यार्थत्वं कर्मणां यद्वा सन्प्रत्ययस्य प्राधान्यात् ज्ञानेच्छैव कर्मसाध्या यथोक्तम्।

प्रत्यग्विविदिषां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इवेति ॥

तथा यो वेदेद्मननाङ्गं संस्क्रियत इति स्मृतेः चित्तशुद्ध्यर्थमेव कर्माणीति त्रेधा विभागः। तत्राद्यपक्षे विशिष्टगुर्वादिलाभो निष्प्रत्यूहं श्रवणादिसिद्धिश्च कर्मभिरेव जन्या। द्वितीये इच्छोत्पत्तिभिरेव कर्मफलम् इतरत्तु यत्नान्तरसाध्यम्। तृतीयेऽपि चित्तशुद्धिरेव कर्मफलं ज्ञानेच्छादिकं सर्वं यत्नान्तरसाध्यमिति विवेकः। एवं ज्ञानाद्यर्थमपि कृतात्कर्मणः फलान्तर

ज्ञातार्थानां च जिज्ञासा श्रेय एतदसंशयम् ॥ ९ ॥
शब्दरूपरसस्पर्शान् सह गन्धेन केवलान् ।
नात्यर्थमुपसेवेत श्रेयसोऽर्थी कथं चन ॥ १० ॥
नक्तं चर्या दिवा स्वप्नमालस्यं पैशुनं मदम् ।
अतियोगमयोगं च श्रेयसोऽर्थी परित्यजेत् ॥ ११ ॥
आत्मोत्कर्षं न मार्गेत परेषां परनिन्दया ।
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग् जनात् ॥ १२ ॥

तदेव गालवं प्रति नारदोपदेशेनाह निवृत्तिरित्यादिनैकविंशत्या श्लोकैः ॥ ४—६ ॥ अबाधितात्मतत्त्वस्य वचनं श्रवणादिकं सत्यं सत्यप्रापकम् ॥ ७ ॥ ८ ॥ जिज्ञासा अनुभवेच्छा ॥ ९ ॥ १० ॥ अतियोगमाहारादीनां यथोक्तं नात्यश्नतस्तु योगोऽस्तीत्यादि गीतासु ॥ ११ ॥ आत्मेति विप्रकर्षं नीचादुत्कर्षं नेच्छेत् अपितूच्चादेवेति भावः ॥ १२ ॥

निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविता नराः ।
दोषैरन्यान् गुणवतः क्षिपन्त्यात्मगुणक्षयात् ॥ १३ ॥
अब्रुवन् कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
विपश्चिद् गुणसंपन्नः प्राप्नोत्येव महद्यशः ॥ १४ ॥
न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ॥ १५ ॥

आत्मनो गुणाः क्षय ऐश्वर्यं तदुभयाद् गुणक्षयादिति समाहारः क्षिपन्ति निन्दन्ति ॥ १३ ॥ विपश्चिद्गुणाः अद्वेष्टा सर्वभूतानामित्यादयः महद्यशो ब्रह्म "न तस्येशे कश्च न तस्य नाम महद्यश" इति श्रुतिप्रसिद्धेः ॥ १४ ॥ श्वभ्रे गर्ते ॥ १५ ॥

असदुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति ।
दीप्यते चैव लोकेषु शनैरपि सुभाषितम् ॥ १६ ॥
नापृष्टः कस्यचिद् ब्रूयान्नाप्यन्यायेन पृच्छतः ।

ज्ञानवानपि मेधावी जडवत्समुपाविशेत् ॥ १७ ॥
ततो वासं परीक्षेत धर्मनित्येषु साधुषु ।
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च ॥ १८ ॥
चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत् ।
न तत्र वासं कुर्वीत श्रेयोऽर्थी वै कथं चन ॥ १९ ॥
निरारम्भोऽप्ययमिह यथालब्धोपजीवतः ।
पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात् ॥ २० ॥

वासं परीक्षेत वस्तुमिच्छेत् ॥ १६—१८ ॥ व्यतिकरः सङ्करः ॥ १९ ॥ आप्नुयात् सङ्गमात्रेणैवेत्यर्थः ॥ २० ॥

अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा ।
तथा पश्यामहे स्पर्शमुभयोः पुण्यपापयोः ॥ २१ ॥
यत्र धर्ममनाशङ्काश्चरेयुर्वीतमत्सराः ।
भवेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ २२ ॥
धर्ममर्थनिमित्तं च चरेयुर्यत्र मानवाः ।
नताननुवसेज्जातु ते हि पापकृतो जनाः ॥ २३ ॥
येन खट्वां समारूढःकर्मणानुशयी भवेत् ।
आदितस्तन्न कर्त्तव्यमिच्छताऽभवमात्मनः ॥ २४ ॥
यादृशैः संनिवसति यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ २५ ॥
नायं परस्य सुकृतं दुष्कृतं चापि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥ २६ ॥
परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः ।
यो ह्यसूयेत्तया युक्तः सोऽवहासं नियच्छति ॥ २७ ॥

न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान् ।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ २८ ॥

अत्र दृष्टान्तमाह अपामिति । अबादीनां संगमात्रं यथा शीतोष्णसुखदं तथा सदसत्संग एव पुण्यपापद इत्यर्थः ॥ २१ ॥ भवंस्तत्र सन्निहितः ॥ २२ ॥ काम्यानिषिद्धे निन्दति धर्ममिति द्वाभ्याम् ॥२३॥ अनुशयी पूर्वकर्मवासनावान् खट्वारूढः तीव्रदुःखग्रस्तः ॥ २४॥ २५ ॥ जनकपराशरसंवादेन श्रेयःसाधनं दर्शयति नायमिति द्वाभ्यां यो यथा करोति स तथा प्राप्नोतीत्यर्थः॥२६॥ परेषामिति । यत्कर्म परकृतमसूयेत इदमयं निन्द्यं कर्म करोतीति दोषवत्तयाचक्षीत तत्स्वयं न कुर्यात् अवहासं निन्द्यतां नियच्छति नियमेन स्वीकरोतीत्यर्थः ॥२७॥ साध्यहंससंवादेनाह न तथेत्यादि । नैर्गुण्यं दोषम् अनुयुञ्जकाः स्पर्द्धावन्तः ॥ २८ ॥

यस्य वाङ्मनसी गुप्ते सम्यक् प्रणिहिते सदा ।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ २९ ॥
आक्रोशनविमानाभ्यां नाबुधान् गर्हयेद् बुधः ।
तस्मान्न गर्हयेदन्यं न चात्मानं विहिंसयेत् ॥ ३० ॥
अमृतस्येव संतृप्येदवमानस्य पण्डितः ।
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥ ३१ ॥

यत्क्रोधनो यजति यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं
मोघः श्रमो भवति हि क्रोधनस्य ॥ ३२ ॥

आक्रुश्यमानो नाक्रोशेन्मन्युरेनं तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ३३ ॥
चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक् चतुर्थी स धर्मवित् ॥ ३४ ॥

सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
असंरोधेन लोकस्य वृत्तिं लिप्सेदगर्हिताम् ॥ ३५ ॥
श्रुतिविज्ञानतत्त्वज्ञः शिष्टाचारो विचक्षणः ।
स्वधर्मेण क्रियावांश्च कर्मणा सोऽप्यसंकरः ॥ ३६ ॥
दुराचारा दुर्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः ।
असन्तस्त्विति विख्याताः सन्तश्चाचारलक्षणाः॥३७
पुरीषं यदि वा मूत्रं ये न कुर्वन्ति मानवाः ।
राजमार्गे गवां मध्ये धान्यमध्ये च ते शुभाः ॥ ३८ ॥
शौचमावश्यकं कृत्वा देवतानां च तर्पणम् ।
धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं तरेत् ॥ ३९ ॥

इदं सर्वं तस्य सर्वस्य फलम् ॥ २९ ॥ अबुधान् आक्रोष्टून् ॥३०-३२॥ सहिष्णोरनायासेन पापनाशः परसुकृतलाभश्च भवतीत्याह आक्रुश्यमान इति ॥३३॥ सर्वधर्ममूलभूतमाचारं विस्तरेणाह भीष्मः सतामिति । शौचमावश्यकं कृत्वा उपस्पृश्याचम्य च नदीं तरेदवगाहेत च ततः तर्पणमिति-संबन्धः ॥ ३४—३९ ॥

सूर्यं सदोपतिष्ठेत नच सूर्योदये स्वपेत् ।
सायंप्रातर्जपेत् सन्ध्यां तिष्ठन् पूर्वां तथेतराम् ॥ ४० ॥
पञ्चार्द्रो भोजनं भुञ्ज्यात्प्राङ्मुखो मौनमास्थितः ।
न निन्द्यादन्नभक्षांश्च स्वाद्वस्वादु च भक्षयेत् ॥४१॥
आर्द्रपाणिः समुत्तिष्ठेन्नार्द्रपादः स्वपेन्निशि ।
देवर्षिर्नारदः प्राह एतदाचारलक्षणम् ॥ ४२ ॥
शुचिं देशमनड्वाहं देवं गोष्ठं चतुष्पथम् ।
ब्राह्मणं धार्मिकं चैत्यं नित्यं कुर्यात्प्रदक्षिणम् ॥४३॥
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।

सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते ॥ ४४ ॥
सायम्प्रातर्मनुष्याणामशनं वेदनिर्मितम् ।
नान्तरा भोजनं दृष्टमुपवासी तथा भवेत् ॥ ४५ ॥
होमकाले तथा जुह्वन्नृतुकाले तथा व्रजेत् ।
अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ॥४६॥

जपेत् सावित्रीं सन्ध्यामुपलक्ष्य तिष्ठन् उपतिष्ठेत च स्वगृह्योक्तैर्मन्त्रैः इतरां पश्चिमाम् ॥ ४० ॥ पञ्च पादौ पाणी मुखं चेति पञ्चार्द्राणि यस्य भोजमन्नमन्नभक्षान् ओदनमपूपादींश्च ॥४१॥ आर्द्रपाणिः कृतोत्तरापोशान इत्यर्थः ॥ ४२ ॥ शुचिं देशं यज्ञादिशालां चैत्यं देवतायतनम् ॥ ४३ ॥ सामान्यं साधारणं पाकभेदो न कुर्यादित्यर्थः ॥ ४४ ॥ तथा कुर्वन् यथाकालभोजी उपवासफलं लभेतेत्यर्थः ॥ ४५ ॥ ४६ ॥

अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतम् ।
तज्जनाः पर्युपासन्ते सत्यं सन्तः समासते ॥ ४७ ॥
लोष्टमर्दी तृणच्छेदी नखखादीति यो नरः ।
नित्योच्छिष्टः शंकुशुको नेहायुर्विन्दते महत् ॥ ४८ ॥
यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात् ।
न भक्षयेद् वृथा मांसं पृष्ठमांसं च वर्जयेत् ॥ ४९ ॥
स्वदेशे परदेशे वा अतिथिं नोपवासयेत् ।
काम्यकर्मफलं लब्ध्वा गुरूणामुपपादयेत् ॥ ५० ॥
गुरुभ्य आसनं देयं कर्तव्यं चाभिवादनम् ।
गुरूनभ्यर्च्य युज्येत आयुषा यशसा श्रिया ॥ ५१ ॥
नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियम् ।
मैथुनं सततं धर्म्यं गुह्ये चैव समाचरेत् ॥ ५२ ॥

ब्राह्मणभुक्तावशिष्टं मातुर्हृदयमिव हितकरं कृतं धात्रा तत् ये उपासते ते सत्यं ब्रह्म समासते आसादयन्ति आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलाभे सर्वग्रन्थीनां विप्रमोक्ष इति क्रमेण आहारशुद्धेर्ब्रह्म-

प्रापकत्वश्रुतेः ॥४७॥ शंकुशुकः कीलबद्धशुकवत्पराधीनो वृथा पण्डितो वा दन्त्यादिपाठे संश्लेषकः कामलोभादिवशः ॥ ४८ ॥ यजुषा यजुर्वेदविदाऽध्वर्युणा मांसं यज्ञियमपि निवृत्तो न भक्षयेत् वृथामांसमसंस्कृतं मांसं पृष्ठमांसं चरममांसं श्राद्धशेषमित्यर्थः । पृष्ठं चरममात्रे स्यादिति विश्वः । एतेन हिंसायुक्तो धर्मो न कर्त्तव्य इत्युक्तम् ॥ ४९ ॥ किं तर्हि गृहस्थेन कर्त्तव्य मत आह सेवेति । काम्यं कमनीयं कर्म भिक्षाचर्यं तस्य फलमन्नादि गुरूणां पित्रादीनाम् ॥ ५० ॥ ५१ ॥ धर्म्यं ऋतुकालिकं गुह्ये रहसि ॥ ५२ ॥

**तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः ।**
**सर्वमार्यकृतं चौक्ष्यं बालसंस्पर्शनानि च ॥ ५३ ॥**

**दर्शने दर्शने नित्यं सुखप्रश्नमुदाहरेत् ।**
**सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम् ॥ ५४ ॥**

**देवागारे गवां मध्ये ब्राह्मणानां क्रियापथे ।**
**स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥ ५५ ॥**

**सायंप्रातश्च विप्राणां पूजनं च यथाविधि ।**
**पण्यानां शोभते पण्यं कृषीणां वाद्यते कृषिः ॥ ५६ ॥**

**बहुकारं च सस्यानां वाह्ये वाहो गवां तथा ।**
**संपन्नं भोजने नित्यं पानीये तर्पणं तथा ॥ ५७ ॥**

हृदयं रहस्यं तीर्थं गुरुः शुचिः अग्निः आर्यकृतं शिष्टाचरितं सर्वं चौक्ष्यं प्रशस्तं स्वार्थे ष्यञ् बालं गोपुच्छम् ॥ ५३ ॥ प्रदिष्टं कर्तव्यत्वेनोपदिष्टम् ॥ ५४ ॥ क्रियापथे श्रौतस्मार्त्ते धर्मानुष्ठाने दक्षिणं पाणिमुद्धरेत् यज्ञोपवीती भवेत् । अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनवीतमिति श्रुतेः ॥ ५५ ॥ सायमिति । सार्द्धश्लोकः विप्राणां पूजनमेव उत्तमं पण्यम् उत्तमा कृषिश्च तद्वद्दृष्टफलमित्यर्थः वाद्यते स्थिरीक्रियते सस्यानां धान्यानां बहुकारं बहुलीकरणं च तदेव गवामिन्द्रियाणां वाह्ये प्राप्ये वाहः प्रापणं दिव्यस्त्र्यन्नपानादीष्टप्राप्तिरपि विप्राणां पूजनमेवेत्यर्थः ॥ ५६ ॥ पूजनप्रकारमाह संपन्नमिति ।

भोजने संपन्नमिति ब्रूयाद्दाता सुसंपन्नमिति प्रतिग्रही । एवमुत्तरत्र यवाग्वां द्रुतौदने कृसरे द्विदलेन सह पाचिते ओदने ॥ ५७ ॥

सुशृतं पायसे ब्रूयाद्यवाग्वां कृशरे तथा ।
श्मश्रुकर्मणि संप्राप्ते क्षुते स्नानेऽथ भोजने ।
व्याधितानां च सर्वेषामायुष्यमभिनन्दनम् ॥ ५८ ॥

प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
सह स्त्रियाऽथ शयनं सहभोज्यं च वर्जयेत् ॥ ५९ ॥

त्वंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ।
अवराणां समानानामुभयेषां न दुष्यति ॥ ६० ॥

हृदयं पापवृत्तानां पापमाख्याति वैकृतम् ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥ ६१ ॥

ज्ञानपूर्वकृतं पापं छादयन्त्यबहुश्रुताः ।
नैनं मनुष्याः पश्यन्ति पश्यन्त्येव दिवौकसः ॥ ६२ ॥

पापेनापिहितं पापं पापमेवानुवर्तते ।
धर्मेणापिहितो धर्मो धर्ममेवानुवर्तते ।
धार्मिकेण कृतो धर्मो धर्ममेवानुवर्तते ॥ ६३ ॥

संप्राप्ते कृते सति विप्राणामभिनन्दनं वन्दनादिना संतोषणं कार्यमिति शेषः कीदृशमभिनन्दनं व्याधितानाम् आयुष्यं आयुष्करणम् ॥ ५८ ॥ प्रत्यादित्यमादित्याभिमुखो न मेहेत न मूत्रमुत्सृजेत् शकृत्पुरीषम् ॥ ५९ ॥ अवराणां कनिष्ठानां समानानां तुल्यानाम् ॥ ६० ॥ आर्यवृत्तं सेव्यमित्युक्तं तच्चाभिवादनादिरूपं दम्भेनापि कर्तुं शक्यमिति कथमार्यत्वनिश्चयस्तत्राह हृदयमिति वैकृतं नेत्रादिविकारैः पापं हृदयमाख्याति यथोक्तं नेत्रवक्त्रविकारेण ज्ञायतेऽन्तर्गतं मन इति गूहमानाः पापम् ॥ ६१ ॥ ६२ ॥ पापेन पापं पापिनं पापं प्रकाशनीयं धर्मस्तु गोपनीय इत्यर्थः ॥ ६३ ॥

पापं कृतं न स्मरतीह मूढो विवर्तमानस्य तदेति कर्तुः ।
राहुर्यथा चन्द्रमुपैति चापि तथाऽबुधं पापमुपैति कर्म ६४

आशया संचितं द्रव्यं दुःखेनैवोपभुज्यते ।
तद्बुधा न प्रशंसन्ति मरणं न प्रतीक्षते ॥ ६५ ॥

मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः
तस्मात्सर्वेषु भूतेषु मनसा शिवमाचरेत् ॥ ६६ ॥

एक एव चरेद्धर्मं नास्ति धर्मे सहायता ।
केवलं विधिमासाद्य सहायः किं करिष्यति ॥ ६७ ॥

धर्मो योनिर्मनुष्याणां देवानाममृतं दिवि ।
प्रेत्यभावे सुखं धर्माच्छश्वत्तैरुपभुज्यते ॥ ६८ ॥

विवर्त्तमानस्य अशास्त्रस्थस्य अबुधमिति छेदः ॥ ६४ ॥ मरणं कर्तृ मानसं मनोनिर्वर्त्यं मनसा शिवमित्यस्य सर्वभूतेभ्यः अभयं दद्यादित्यर्थः ॥ ६५ ॥ ६६ ॥ एक इति । धर्मं ध्यानयोगम् । ननु सहोभौ चरतां धर्ममिति विधेर्दम्पत्योरग्नि होत्रादिधर्मो विहितस्तत्कथमुच्यते नास्ति धर्मे सहायतेति स्त्र्यादेरिति शेषः का तर्हि विधेर्गतिरित्यत आह केवलमिति । मनसि धर्मशून्ये बाह्यसहायो विधिप्राप्तोऽप्यनर्थक इत्यर्थः । यथोक्तं "मनसैव कृतं मन्ये शरीरेण कृतं कृतम् । येनैवालिङ्ग्यते कान्ता तेनैवालिङ्ग्यते सुतेति" तस्मात्स्त्र्यादिसापेक्षधर्ममनादृत्य मानसिके योगधर्मे एव मनो दध्यादिति भावः ॥६७॥ एव मेव स्तौति धर्म इति । योनिरुत्पत्तिप्रलयस्थानं देवत्वमनुष्यत्वादिप्रापको धर्म इत्यर्थः तेषामेव देवमनुष्याणां दिवि हार्दाकाशाख्ये ब्रह्मलोके अमृतं कैवल्यकारणं धर्म एव तथा प्रेत्यभावे अपूर्वदेहप्राप्तौ धर्मादेव सुखं तैर्धर्मकर्तृभिः ॥ ६८ ॥

धर्मपुत्र निषेवस्व सुतीक्ष्णौ च हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः ॥ ६९ ॥

सत्यमार्जवमक्रोधमनसूयां दमं तपः ।
अहिंसा चानृशंस्यं च विधिवत्परिपालय ॥ ७० ॥

सत्ये तिष्ठ रतो धर्मे हित्वा सर्वमनार्जवम् ।
देवतातिथिशेषेण यात्रां प्राणस्य संलिह ॥ ७१ ॥
फेनमात्रोपमे देहे जीवे शकुनवत्स्थिते ।
अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक ॥ ७२ ॥
अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु ।
अन्तरं लिप्समानेषु बालस्त्वं नावबुध्यसे ॥ ७३ ॥
अहःसु गण्यमानेषु क्षीयमाणे तथायुषि ।
जीविते लिख्यमाने च किमुत्थाय न धावसि ॥७४॥
ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ॥ ७५ ॥
धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयातापि पीड्यते ॥ ७६ ॥
ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः ।
धर्म्यं पन्थानमारूढास्तानुपास्व च पृच्छ च ॥ ७७ ॥

एतदेव व्यासकृतशुकोपदेशेन द्रढयति धर्ममिति । पुत्रेति शुकाभिमुखीकरणम् ॥ ६९ ॥ ७० संलिह स्पृश स्वादु विवेकं माकार्षीरित्यर्थः ॥ ७१ ॥ स्वपिषि पुरुषार्थसाधने न प्रवर्तसे ॥ ७२ ॥ शत्रुषु कामादिषु अन्तरं छिद्रम् ॥ ७३ ॥ न धावसि देवं गुरुं वा शरणं न यासि ॥ ७४ ॥ ७५ ॥ अपथा अपथेन कुमार्गेणेत्यर्थः ॥ ७६ ॥ कर्तव्यं परमं हितमुपदिशति ये त्विति ॥ ७७ ॥

उपधार्य मतं तेषां बुधानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥ ७८ ॥
अद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः ।
सर्वभक्ष्या न पश्यन्ति कर्मभूमिमचेतसः ॥ ७९ ॥

धर्मनिःश्रेणिमास्थाय किञ्चित् किञ्चित्समारुह ।
कोशकारवदात्मानं वेष्टयन्नानुबुध्यसे ॥ ८० ॥
संपतन् देहजालानि कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ॥ ८१ ॥
ब्राह्मणस्य तु देहोऽयं न कामार्थाय जायते ।
इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् ॥ ८२ ॥
ब्राह्मण्यं बहुभिरवाप्यते तपोभि
स्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तः
क्षेमार्थी कुशलपरः सदा यतस्व ॥ ८३ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दरसाभिलाषि
सदानन्दविद्वत्कृते मोक्षधर्मसारोद्धारे
स्वधर्मावश्यकर्तव्यतोपदेशना-
मकं प्रथमं प्रकरणम् ।

अद्यकालिकया वर्तमानमात्रदर्शिन्या ॥ ८९ ॥ ९० ॥ स्वधर्मेण चित्त शुद्धिमापाद्य वैराग्यादिपुरःसरतत्त्वज्ञानमधिकं परमपुरुषार्थसाधनमेवान-न्त्यपदप्राप्तये संपादनीयं न तु क्षुद्रभोगासक्तिमत्तया ब्राह्मणजन्म व्यर्थं नेय-मित्याशयेनाह संपतन्नित्यादि त्रिभिः। कदाचिदित्यत्यन्तदौर्लभ्यं द्योतितं तस्य परिपालनं शास्त्रोक्तधर्मानुष्ठानजन्यचित्तशुद्धिविवेकवैराग्यादिसाधन-परम्परया तत्त्वज्ञानमापाद्यैव भवति नान्यथेति भावः ॥ ८१—८३ ॥

---

## अथ वैराग्यप्रकरणम् २ ।

लब्ध्वा नृदेहमचिरेण पुमान्स्वधर्मान्
संपाद्य भोगविरतिप्रभृतीन्गुणाग्र्यान् ।
आराध्य माधवपदाम्बुजमादरेण

ज्ञात्वा तमेव भवबन्धविमुक्तिमीयात् ॥ १ ॥
वैराग्यमेव पुरुषस्य पुमर्थहेतु
ज्ञानेऽस्ति पुष्कलमिदं करणं ततोऽत्र ।
सम्यक्तदेव महतामुपदेशसिद्धं
व्यासोक्तमद्भुतपदैः खलु लिख्यतेऽद्धा ॥ २ ॥

मानुष्यमसुखं प्राप्य यः सज्जति स मुह्यति ।
नालं स दुःखमोक्षाय संयोगो दुःखलक्षणम् ॥ १ ॥
सक्तस्य बुद्धिश्चलति मोहजालविवर्द्धनी ।
मोहजालावृतो दुःखमिह चामुत्र सोऽश्नुते ॥ २ ॥
सर्वोपायात् तु कामस्य क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥ ३ ॥
नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ४ ॥
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम् ॥ ५ ॥
आकिञ्चन्यं सुसन्तोषो निराशिस्त्वमचापलम् ।
एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ॥ ६ ॥
परिग्रहं परित्यज्य भवता न जितेन्द्रियः ।
अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् ॥ ७ ॥

तत्रादौ शुकं प्रति नारदोपदेशेन वैराग्यप्रकरणमुपक्रमते । तत्रासुखे सुखबुद्धिरेव महाननर्थ इत्याह मानुष्यमिति द्वाभ्याम् । सज्जति विषयेष्विति शेषः स विषयेष्वासक्तः नालं समर्थो न भवति यतो विषयसंयोग एव दुःखहेतुरित्यर्थः तदेव विवृणोति सक्तस्येति ॥ १ ॥ २ ॥ तत्रापि सर्वानर्थनिजस्त्र्यादिविषयकोऽभिलाषोऽनिष्टविषये द्वेषश्च तयोर्निग्रहे मोक्षाय यतितव्यमित्याह सर्वेति ॥ ३ ॥ रागत्यागपूर्वकविद्यादिसंपादने यत्न आस्थेय इत्याशयेनाह नेत्यादिसप्तभिः ॥ ४—७ ॥

निरामिषा न शोचन्ति त्यजेदामिषमात्मनः ।
परित्यज्यामिषं सौम्य दुःखतापाद्विमोक्ष्यसे ॥ ८ ॥
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं संगेष्वसंगिता ॥ ९ ॥
गुणासंगेष्वनासक्त एकचर्यारतः सदा ।
ब्राह्मणो न चिरादेव सुखमायात्यनुत्तमम् ॥ १० ॥
शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषम् ।
अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः ॥ ११ ॥
तत्र मृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यते जन्तुस्तत्कथं नावबुध्यसे ॥ १२ ॥
अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः ।
अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे ॥ १३ ॥
संवेष्ट्यमानं बहुभिर्मोहात्तन्तुभिरात्मजैः ।
कोशकार इवात्मानं वेष्टयन्नावबुध्यसे ॥ १४ ॥
अलंपरिग्रहेणेह दोषवान् हि परिग्रहः ।
कृमिर्हि कोशकारस्तु बध्यते सपरिग्रहान् ॥ १५ ॥
पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ १६ ॥
महाजालसमाकृष्टान्स्थले मत्स्यान्निवोद्धृतान् ।
स्नेहजालसमाकृष्टान् पश्य जन्तून्सुदुःखितान् ॥१७॥
कुटुम्बं पुत्रदारं च शरीरं संचयाश्च ये ।
पारक्यमध्रुवं सर्वं किं सुकृतदुष्कृतम् ॥ १८ ॥

निरामिषाः कुत्रापि विषयेऽकृतरागा अतः स्वासक्तिहेतुर्विषयाभिलाषां त्यजेत् तत्त्यागादेव दुःखहानिरित्यर्थ ॥ ८—१० ॥ दुरुच्छेद्यकर्मवैचित्र्यं दृष्ट्वैव वैराग्यं भोगेभ्यो विधेयमित्याह शुभैरिति त्रिभिः ॥ ११—१३ ॥ अहंत्वममत्वाभ्यां तदास्पदैः पदार्थैश्चात्मनो बध्यमानस्य मोचने समाहितो भवेत्याह संवेष्ट्यमानमिति ॥१४॥ तत्र पुत्रवित्तकलत्रादिपरिग्रह एव महानंनर्थ इत्याह चतुर्भि ॥ १५—१८ ॥

यदा सर्वं परित्यज्य गन्तव्यमवशेन ते ।
अनर्थे किं प्रसक्तस्त्वं स्वमर्थं नानुतिष्ठसि ॥ १९ ॥
अविश्राममनालम्बमपाथेयमदैशिकम् ।
तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥ २० ॥
न हि त्वां प्रस्थितं कश्चित्पृष्ठतोऽनुगमिष्यति ।
सुकृतं दुष्कृतं च त्वां यास्यन्तमनुयास्यति ॥ २१ ॥
विद्या कर्म च शौचं च ज्ञानं च बहुविस्तरम् ।
अर्थार्थमनुसार्यन्ते सिद्धार्थश्च विमुच्यते ॥ २२ ॥
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृताः॥२३॥
रूपकूलां मनः स्रोतां स्पर्शद्वीपां रसावहाम् ।
गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ॥ २४ ॥
क्षमारित्रां सत्यमयीं धर्मस्थैर्यवटारिकाम् ।
त्यागवाताध्वगां शीघ्रां नौतार्यां तां नदीं तरेत्॥२५॥

स्वस्योपकारकत्वं कुत्रापि नास्तीति सर्वस्माद्विरज्य परमपुमर्थलाभाय यतितव्यमित्याह यदेति चतुर्भिः ॥ १९—२२ ॥ विषयभोगलालसानां तत्रैव निमग्नानां तृष्णैव परमबन्धनं तस्योच्छेदनमेव महापुरुषार्थ इत्याह निबन्धनीति क्षमैवारित्राणि नौचालनदण्डाः यस्यां धर्मस्थैर्यं वटारिका नौकर्षणरज्जुर्यस्याम् ॥ २३—२५ ॥

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥ २६ ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यज ॥ २७ ॥
यो जन्तुः स्वकृतैस्तैस्तैः कर्मभिर्नित्यदुःखितः ।
स दुःखप्रतिघातार्थं हन्ति जन्तूननेनकधा ॥ २८ ॥
ततः कर्म समाधत्ते पुनरन्यन्नवं बहु ।
तप्यतेऽथ पुनस्तेन भुक्त्वापथ्यमिवातुरः ॥ २९ ॥
अजस्रमेव मोहान्धो दुःखेषु सुखसंज्ञितः ।
बुध्यते मथ्यते चैव कर्मभिर्मन्यवत्सदा ॥ ३० ॥
ततो निबद्धः स्वां योनिं कर्मणामुदयादिह ।
परिभ्रमति संसारे चक्रवद्‌ बहुवेदनः ॥ ३१ ॥
स त्वं निवृत्तबन्धस्तु निवृत्तश्चापि कर्मतः ।
सर्ववित्सर्वजित्सिद्धो भवभावविवर्जितः ॥ ३२ ॥
संयमेन नवं बन्धं निवर्त्य तपसो बलात् ।
संप्राप्ता बहवः सिद्धिमप्यबाधां सुखोदयाम् ॥ ३३ ॥
त्यज धर्ममधर्मं च तथा सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ ३४ ॥
त्यज धर्ममसंकल्पादधर्मं चाप्यलिप्सया ।
उभे सत्यानृते बुद्ध्वा बुद्धिं परमनिश्चयात् ॥३५॥

देहस्य भोगायतनस्यात्यन्तकुत्सितत्वमालोच्यापि विरज्येतेत्याहास्थीति द्वाभ्याम् ॥ २६ ॥ २७ ॥ कर्मबद्धस्य जन्तोरत्यन्तानर्थकर्तृत्वमालोच्यापि विषयेभ्यो विरज्येतेत्याह य इति चतुर्भिः ॥ २८—३१ ॥ तस्मादेवं

कुरुष्वेति कर्तव्यमुपादिशति स इति ॥ ३२ ॥ ३३ ॥ तत्र मुख्यमुपदेशमाह त्यजेति ॥ ३४ ॥ तत्त्यागे प्रकारमुपदिशति त्यजेति परमनिश्चयात्स्वरूपसाक्षात्काराद् बुद्धेरपि तत्र स्वरूपेऽत्यन्ताभावदर्शनमेव तत्त्यागः नतु तदर्थं पृथक् प्रयास इति भावः ॥ ३५ ॥

**अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ।**
**निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ॥ ३६ ॥**
**शोकस्थानसहस्राणि भयस्थानशतानि च ।**
**दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ३७ ॥**
**अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।**
**मनुष्या मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः ॥ ३८ ॥**
**द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् ।**
**न तानाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते ॥ ३९ ॥**
**दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्त्तते ।**
**अनि[illegible] पश्येत्तथा क्षिप्रं विरज्यते ॥ ४० ॥**
**नार्थो न धर्मो न यशो योऽतीतमनुशोचति ।**
**अप्यभावेन युज्येत तच्चास्य न निवर्त्तते ॥ ४१ ॥**
**गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।**
**[illegible] नैतदेकस्य शोकस्थानं हि विद्यते ॥ ४२ ॥**
**मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।**
**दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ४३ ॥**
**नाश्रु कुर्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु संततिम् ।**
**सम्यक् प्रपश्यतः सर्वं नाश्रु कर्मोपपद्यते ॥ ४४ ॥**
**दुःखोपघाते शारीरे मानसे चाप्युपस्थिते ।**
**यस्मिन्न शक्यते कर्तुं यत्नस्तन्नानुचिन्तयेत् ॥ ४५ ॥**

चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ ४६ ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ ४७ ॥

सर्वथा सच्छास्त्रविचारे यतितव्यमित्याहाशोकामिति ॥ ३६ ॥ ३७ ॥ अविवेक एव दुःखहेतुरित्याहानिष्टेति ॥ ३८ ॥ पदार्थविस्मरणमेव दुःखोत्तरणोपायो नान्य इत्याह द्रव्येष्विति ॥ ३९ ॥ पदार्थवैराग्यमेवादितः संपाद्यमित्याह दोषदर्शीति ॥ ४० ॥ तच्च दुःखमपि ॥ ४१ ॥ भूतानां स्वभावमालोच्यापि न शोचनीयमित्याह गुणैरिति ॥ ४२ ॥ विवेक्यविवेकिनोर्महदन्तरमित्याशयेनाह मृतमिति पञ्चभिः ॥ ४३—४७ ॥

अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः।
आरोग्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ ४८ ॥
न जानपदिकं दुःखमेकः शोचितुमर्हति।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ ४९ ॥
सुखाद् बहुतरं दुःखं जीविते नात्र संशयः।
स्निग्धत्वं चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ ५० ॥
परित्यजति यो दुःखं सुखं चाप्युभयं नरः।
अभ्येति ब्रह्म सोऽत्यन्तं न तं शोचन्ति पण्डिताः॥५१॥
त्यजन्ते दुःखमर्था हि पालने न च ते सुखाः।
दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥५२॥
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः।
अतृप्ता यान्ति विध्वंसं संतोषं यान्ति पण्डिताः॥५३॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥५४॥

सर्वस्यानित्यत्वादपि विषयाभिलाषा त्याज्येत्याहानित्यमिति ॥ ४८ ॥ सर्वसाधारणदुःखानुसंधानं मूढकृत्यं विपश्चिता न कार्यमित्याहनेति ॥४९॥ जीविते रागो मरणे द्वेषोऽप्यविवेकमूलकोऽस्तीत्याह सुखादिति ॥ ५० ॥ दुःखवद्वैषयिकसुखमपि हेयमेव तत्त्यागे ब्रह्मसुखाविर्भावः सिद्ध एवेत्याह परित्यजतीति ॥ ५१ ॥ महता क्लेशेन संचिता अप्यर्था अनर्थपर्यवसायिन एवेत्याह त्यजन्त इति द्वाभ्याम् ॥ ५२ ॥ ५३ ॥ सर्वस्यान्तवत्त्वं विचार्य कुत्रापि न विश्वसनीयमित्याह सर्व इति ॥ ५४ ॥

अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् ।
तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः ॥ ५५ ॥
निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति ।
स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ॥ ५६ ॥
भूतेषु भावं संचिन्त्य ये बुध्वा मनसः परम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् ॥५७॥
संचिन्वानकमेवैनं कामानामवितृप्तिकम् ।
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥ ५८ ॥
तथाप्युपायं पश्येत दुःखस्य परिमोक्षणम् ।
अशोचन्नारभेच्चैव मुक्तश्चाव्यसनी भवेत् ॥ ५९ ॥
शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च ।
नोपभोगात्परं किंचिद्धनिनो वाऽधनस्य वा ॥ ६० ॥
किं ते धनेन किं बन्धुभिस्ते
किं ते पुत्रैः पुत्रक यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताश्च सर्वे ॥ ६१ ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वास्य न वाकृतम् ॥६२॥

अतस्तत्तृष्णात्यागेन संतोष एव श्रेयानित्याहात इति ॥ ५५ ॥ आयुषोऽतिचाञ्चल्यादप्यविश्वास्यमाह निमेषेति ॥ ५६ ॥ आत्मज्ञानमेव पुमर्थसाधनमित्याह भूतेष्विति ॥ भावं परमार्थतत्त्वं प्रत्यञ्चम् ॥ ५७ ॥ मृत्योरव्यभिचारित्वादपि श्रेयसे शीघ्रं प्रयतितव्यमित्याह संचिन्वानकमिति द्वाभ्याम् ॥ ५८ ॥ ५९ ॥ नोपभोगात्परं क्षणिकेन्द्रियविषयसंयोगमात्रोपभोगमात्रमेवोच्चावचशब्दादिषु फलं नान्यः कश्चित्पुमर्थ इत्यर्थः ॥ ५० ॥ अतस्तत्साधनेषु व्यर्थः प्रयास इत्याह किमिति ॥ ६१ ॥ सद्यः स्वोद्धारे प्रयतितव्यमित्याह श्व इति ॥ ६२ ॥

**अनुगम्य विनाशान्ते निवर्तन्ते ह बान्धवाः ।**
**अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ॥ ६३ ॥**
**सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।**
**तथात्मानं समादध्याद्‌ भ्रश्यते न पुनर्यथा ॥ ६४ ॥**
**यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी ।**
**तमाहुः पुण्यकर्माणमशोच्यं पुत्रबान्धवैः ॥ ६५ ॥**
**यस्य नोपहता बुद्धिर्निश्चये ह्यवलम्बते ।**
**स्वर्गे कृतावकाशस्य नास्ति तस्य महद्‌ भयम् ॥६६॥**
**तपोवनेषु ये जातास्तत्रैव निधनं गताः ।**
**तेषामल्पतरो धर्मः कामभोगानजानताम् ॥ ६७ ॥**
**यस्तु भोगान् परित्यज्य शरीरेण तपश्चरेत् ।**
**न तेन किंचिन्न प्राप्तं तन्मे बहुमतं फलम् ॥ ६८ ॥**
**मातापितृसहस्राणि पुत्रदारशतानि च ।**
**अनागतान्यतीतानि कस्य ते कस्य वा वयम् ॥६९॥**
**अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ।**
**न तं पश्यामि यस्याहं तं न पश्यामि यो मम ॥७०॥**

न तेषां भवता कार्यं न कार्यं तव तैरपि ।
स्वकृतैस्तानि जातानि भवांश्चैव गमिष्यति ॥ ७१ ॥
इह लोके हि धनिनां स्वजनः स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥ ७२ ॥

ममत्वं न कुत्रापि कर्तव्यमित्याहानुगम्येति ॥ ६३ ॥ मानुष्यं जन्म व्यर्थं न नेयमित्याह सोपानमिति ॥ ६४ ॥ नोत्क्रामति धर्ममिति शेषः । ६५ ॥ नोपहतेति नैकधेतिवत्समासः ॥ ६६ ॥ विषयरसपरिज्ञानपूर्वकविषयत्यागं प्रशंसति तप इति द्वाभ्याम् ॥ ६७ ॥ ६८ ॥ अस्मिन्ननादिसंसारे स्वकीयः कोऽपि नास्ति यत्र ममतां कुर्यादित्याह मातेति । जीवितदशायामपि कस्यापि कोऽपि नास्ति किमुत मरणानन्तरमित्याहेहेति त्रिभिः ॥६९—७२॥

संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
ततः क्लेशमवाप्नोति परत्रेह तथैव च ॥ ७३ ॥
सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञासु नीतं वा त्रायते नापि पौरुषम् ॥ ७४ ॥
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानां रात्र्यहानि पुनःपुनः ॥ ७५ ॥
व्यत्ययो ह्ययमत्यन्तं पक्षयोः शुक्लकृष्णयोः ।
जातान्मर्त्यान् जरयति निमेषं नावतिष्ठते ॥ ७६ ॥
सुखदुःखानि भूतानामजरो जरयत्यसौ ।
आदित्यो ह्यस्तमभ्येति पुनःपुनरुदेति च ॥ ७७ ॥
अदृष्टपूर्वानादाय भावानपरिशङ्कितान् ।
इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति रात्रयः ॥ ७८ ॥
यो यमिच्छेद्यथाकामं कामानां तदवाप्नुयात् ।
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम् ॥ ७९ ॥

संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तःप्रहीणाः सर्वकर्मभिः ॥ ८० ॥
अपरे बालिशाः सन्तो निर्गुणाः पुरुषाधमाः ।
आशीर्भिरप्यसंयुक्ता दृश्यन्ते सर्वकामिनः ॥ ८१ ॥
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते ॥ ८२ ॥
अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठते ।
कश्चित्कर्तानुसृत्यान्यो नाप्राप्यमधिगच्छति ॥८३॥
अपराधं समाचक्ष्व पुरुषस्य स्वभावतः ।
शुक्रमन्यत्र संभूतं पुनरन्यत्र गच्छति ॥ ८४ ॥
तस्य योनौ प्रयुक्तस्य गर्भो भवति वा न वा ।
आम्रपुष्पोपमा यस्य निवृत्तिरुपलभ्यते ॥ ८५ ॥
केषाञ्चित्पुत्रकामानामनुसंतानमिच्छताम् ।
सिद्धौ प्रयतमानानां न चाण्डमुपजायते ॥ ८६ ॥
गर्भाच्चोद्विजमानानां क्रुद्धादाशीविषादिव ।
आयुष्मान् जायते पुत्रः कथं प्रेत्य इवाभवत् ॥८७॥
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दशमासान्परिधृता जायन्ते कुलपांसनाः ॥ ८८ ॥

अन्यार्थानर्थचरणेन स्वात्मघातो न कर्तव्य इत्याह संचिनोतीति ॥ ७२ ॥ विपर्यासः सुखे दुःखधीः दुःखे सुखधीः ॥ ७३ ॥ अहो कालक्रीडेयं यत्र जनोऽयं मोमुह्यमानःस्वश्रेयसे न यतत इति महता कण्ठरवेणानुक्रोशति स्रवन्तीति चतुर्भिः ॥ ७४—७७ ॥ भोगेषु जन्तूनां पराधीनत्वादपि कुत्राप्य भिलाषा न कर्तव्येत्याह य इति ॥ ७८—८८ ॥

सङ्गत्या जठरे न्यस्तं रेतो विन्दुमचेतनम् ।
केन यत्नेन जीवन्तं गर्भत्वमिह पश्यसि ॥ ८८ ॥
अन्नपानानि जीर्यन्ते यत्र भक्षाश्च भक्षिताः ।
तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्यते ॥ ९० ॥
नाभ्युत्थाने मनुष्याणां योगाः स्युर्नात्र संशयः ।
व्याधिभिश्च विमथ्यन्ते व्याधैः क्षुद्रमृगा इव ॥ ९१ ॥
व्याधिभिर्मथ्यमानानां त्यजतां विपुलं धनम् ।
वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ॥ ९२ ॥
ते चाति निपुणा वैद्याः कुशलाः संभृतौषधाः ।
व्याधिभिः परिकल्ष्यन्ते मृगा व्याधैरिवार्दिताः ॥ ९३ ॥

देहधारणमत्याश्चर्यमित्याह संगत्येति ॥ ८९—९१ ॥ सर्वसर्वत्रानियतव्यवस्थां दृष्ट्वा सर्वस्माद्विरज्येतेत्याहनेति ॥ ९२ ॥ ९३ ॥

ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ९४ ॥
के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिणः ।
श्वापदानि दरिद्रांश्च प्रायो नार्ता भवन्ति ते ॥ ९५ ॥
घोरानपि दुराधर्षान्नृपतीनुग्रतेजसः ।
आक्रम्याददते रोगा पशून् पशुगणा इव ॥ ९६ ॥
इति लोकमनाक्रन्दमोहशोकपरिप्लुतम् ।
स्रोतसा सहसा क्षिप्तं ह्रियमाणं बलीयसा ॥ ९७ ॥
न धनेन न राज्येन नोग्रेण तपसा तथा ।
स्वभावमनिवर्तन्ते विनियुक्ताः शरीरिणः ॥ ९८ ॥
न म्रियेरन्न जीर्येरन्सर्वे स्युः सर्वकामिनः ।
नाप्रियं प्रति पश्येयुरुत्थानस्य फले सति ॥ ९९ ॥

ॐ नमः परमात्मने।

# शाकटायनव्याकरणम्।

## चिन्तामण्यपराभिधानलघुवृत्तिसहितम्।

श्रियं क्रियाद्वः सर्वज्ञज्ञानज्योतिरनश्वरीम्।
विश्वं प्रकाशयंश्चिन्तामणिश्चिन्तार्थसाधनः ॥ १ ॥
नमस्तमःप्रभावाभिभूतभूद्योतहेतवे।
लोकोपकारिणे शब्दब्रह्मणे द्वादशात्मने ॥ २ ॥
स्वस्ति श्रीसकलज्ञानसाम्राज्यपदमाप्तवान्।
महाश्रमणसङ्घाधिपतिर्यः शाकटायनः ॥ ३ ॥
सर्वशास्त्राम्बुधिं बुद्धिमन्दरेण प्रमथ्य यः।
स यशःश्रि समुद्दध्रे विश्वं व्याकरणामृतम् ॥ ४ ॥
स्वल्पग्रन्थं सुखोपायं सम्पूर्णं यदुपक्रमम्।
शब्दानुशासनं सार्वमर्हच्छासनवत्परम् ॥ ५ ॥
इष्टिर्नेष्टा न वक्तव्यं वक्तव्यं सूत्रतः पृथक्।
संख्यातं नोपसंख्यातं यस्य शब्दानुशासने ॥ ६ ॥
तस्यातिमहतीं वृत्तिं संहृत्येयं लघीयसी।
सम्पूर्णलक्षणा वृत्तिर्वक्ष्यते यक्षवर्मणा ॥ ७ ॥
ग्रन्थविस्तरभीरूणां सुकुमारधियामयम्।
शुश्रूषादिगुणान् कर्तुं शास्त्रसंग्रहणोद्यमः ॥ ८ ॥
शब्दानुशासनस्यान्वर्थायाश्चिन्तामणेरिदम्।

वृत्तेर्ग्रन्थप्रमाणंतु षटसहस्रं निरूपितम् ॥ ९ ॥
इन्द्रचन्द्रादिभिः शाब्दैर्यदुक्तं शब्दलक्षणम् ।
तदिहास्ति समस्तं च यन्नेहास्ति न तत् क्वचित् ॥ १० ॥
गणधातुपाठयोर्गणधातूँल्लिङ्गानुशासने लिङ्गगतम् ।
उणादिकानुणादौ शेषं निःशेषमत्रवृत्तौ विद्यात् ॥ ११ ॥
बालाबलाजनोऽप्यस्या वृत्तेरभ्यासवृत्तितः ।
समस्तं वाङ्मयं वेत्ति वर्षेणैकेन निश्चयात् ॥ १२ ।

तत्र सूत्रस्यादावयं मङ्गलश्लोकः ।

**नमः श्रीवर्द्धमानाय प्रबुद्धाशेषवस्तवे ।**
**येन शब्दार्थसम्बन्धाः सार्वेण सुनिरूपिताः ॥ १ ॥**

शब्दार्थसम्बन्धाः वाचकवाच्ययोग्यताः । अथवा आगमप्रयोजनोपायोपेयभावोऽस्ति । येन सर्वसत्त्वहितेन तत्त्वतः प्रज्ञापितास्तस्मै श्रीमते महावीराय साक्षात्कृतसकलद्रव्याय नमस्करोमीत्यध्याहारः । इति विघ्नप्रशमनार्थमर्हद्देवतानमस्कारं परममङ्गलमारभ्य भगवानाचार्यः शाकटायनः शब्दानुशासनं शास्त्रमिदं आरभते ॥

**धर्मार्थकाममोक्षेषु तत्त्वार्थावगतिर्यतः ।**
**शब्दार्थज्ञानपूर्वेति वेद्यं व्याकरणं बुधैः ॥ २ ॥**

**अइउण् ॥ १ ॥ ऋक् ॥ २ ॥ एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरलञ् ॥ ५ ॥ ञमङणनम् ॥ ६ ॥ जबगडदश् ॥ ७ ॥ झभघढधष् ॥ ८ ॥ खफछठथट् ॥ ९ ॥ चटतव् ॥ १० ॥ कपय् ॥ ११ ॥ शषसअंअः ≍क≍पर् ॥ १२ ॥ हल् ॥ १३ ॥**

इति वर्णसमाम्नायः क्रमानुबन्धोपादानः प्रत्याहारयन् शास्त्रस्य लाघवार्थः। सामान्याश्रयणात् दीर्घप्लुतानुनासिकग्रहणम्॥

**ह्रस्वदीर्घप्लुतहलोऽप्येकद्वित्र्यर्धमात्रिकाः।**
**नासिकामनुयातस्तु वर्णः स्यादनुनासिकः॥ ३॥**

ऋ इत्यनेन लृवर्णस्यापि ग्रहणं भवति। "दूरादामन्त्र्यस्य गुरुर्वैकोऽनृत्" इति लृग्रहणात्। तथा च "ऋत्यकः" इति लृकारोऽपि सिद्धम्॥ हकारस्य द्विरुपदेशोऽषशलादौ च ग्रहणार्थः॥ हकारादिष्वकारादय उच्चारणार्थाः॥

**सात्मेतत्॥ १॥ १॥ १॥**

संज्ञासूत्रमेतत्। इता सहोच्चार्यमाणो वर्णः समुदायो वाऽऽत्मनः प्रभृत्यातस्मादितो व्यवस्थितानां संज्ञा भवत्यात्मना सह। अण् अक् अच् हल् सुप् सुट् तिङ् मस् कण्॥

**सञ्ज्ञानियमनिषेधाधिकार-**
**नित्यापवादविधिपरिभाषाः।**
**अतिदेशविकल्पाविति गतयः**
**शब्दानुशासने सूत्राणाम्॥**

**उता स्वः॥ १॥ १॥ २॥**

उकारेणेता सहोपादीयमानो वर्णः स्वस्य वर्गस्यात्मना सह सञ्ज्ञा भवति॥ कु चु टु तु पु॥

**तेयान्॥ १॥ १॥ ३॥**

तकारेणेता सहोपादीयमानो वर्णः इयान् यावन्मात्र उपात्तस्तावन्मात्र एवासौ वेदितव्यः। अत् इत् उत् ऋत्॥

भाव्योऽग्॥ १ ॥ १ ॥ ४ ॥

भाव्यो विधेयः प्रत्ययविकारागमरूपः अगकारको वर्ण इत्यानेव वेदितव्यः। भिक्षुः अस्मै अष्टाभिः लविता॥ अगिति किम्?। अमुम्। अमू॥

अप्रयोगीत्॥ १ ॥ १ ॥ ५ ॥

इहोपदिश्यमानो वर्णः समुदायो वा यो लौकिकशब्दप्रयोगे न दृश्यते स इत्सञ्ज्ञो भवति। एधि—एधते। अइउण—अण्। टुवेपृङ् वेपथुः। डुकृञ्—कृत्रिमम्॥

स्वःस्थानास्यैक्ये॥ १ ॥ १ ॥ ६ ॥

स्थानं कण्ठादि। आस्यं मुखम्। ओष्ठात् प्रभृति प्राक्काकलकात्। तत्र भवम्। स्पृष्टादिप्रयत्नपञ्चकमास्यम्॥

कण्ठोष्ठमूर्धजिह्वादन्तोरस्तालु नासिकावर्णानाम्।
स्थानान्यास्यं स्पृष्टेषत्स्पृष्टं विवृतसंवृतेषद्विवृतम्॥ १ ॥

तयोरभेदेवर्णो वर्णस्य स्वो नाम वेदितव्यः। अकुहविसर्जनीयजिह्वामूलीयाः कण्ठ्याः। कुर्जिह्वामूलीया विसर्जनीया उरस्याः। जिह्वामूलीयो जिह्व्यः। सर्वमुखस्थानमवर्णमित्येके। इएऐचुयशास्तालव्याः। एऐ कण्ठ्यतालव्यावेकेषाम्। उओऔपूपध्मानीया ओष्ठ्याः। ओऔ कण्ठ्योष्ठ्यावेकेषाम्। वो दन्त्योष्ठ्यः। सृक्वस्थानमेकेषाम्। ऋटुरषा मूर्धन्याः। रेफो दन्तमूल एकेषाम्। लृतुलसा दन्त्याः। नासिक्योऽनुस्वारः। कण्ठनासिक्य एकेषाम्। आस्यं स्पृष्टं करणं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। विवृतमूष्मणाम्। स्वराणां च। एओ विवृततरौ। ताभ्यामैऔ। ताभ्यामवर्णः। ईषद्विवृतमूष्मणाम्। संवृतमकारस्येति अ अ अ इत्याकारः। उदात्तो-

ऽनुदात्तः स्वरितश्चानुनासिकोनिरनुनासिकश्चेति षट् । परं दीर्घप्लुताविति द्वादशाऽवर्णभेदाः । परस्परस्य स्वे भवन्ति । एवमि-वर्णादीनां त्वष्टादशभेदाः । ऌवर्णस्यानुकरणादन्यत्र दीर्घोनास्तीति द्वादशभेदाः । एचां ह्रस्वाभावाद् द्वादश भेदाः । यवलानामनुनासि-कोऽननुनासिकश्चेति द्वौ भेदौ । वर्ग्याः पञ्च पञ्च रेफोष्माणां स्वे न सन्ति ॥

## आसन्नः ॥ १ ॥ १ ॥ ७ ॥

इहाऽऽसन्नानासन्नप्रसङ्गे स्थानगुणप्रमाणादिभिर्यथाशास्त्रमासन्न एव विधिरुपात्तो वेदितव्यः । तत्र स्थानेन—"दीर्घः ॥ १ । १ । ७७ ॥ लोकाग्रम् । मुनीन्द्रः । गुणेन—"क्तेऽनिट् चजः कुर्विति—॥ ४ । । ६७१ ॥" पाकः, त्यागः । चकारस्याऽघोषस्याऽल्पप्राणस्य तादृश एव ककारो भवति । जकारस्य घोषवतोऽल्पप्राणस्य तादृश एव गकारः । प्रमाणेन—'दोर्मोऽस्यादरोमात्रश्चाश्वाविन्यमन्"—॥ १ । २ । ४४ ॥" अमुष्मै, अमूभ्यां मात्रकस्य मात्रिकः द्विमात्रस्य द्विमात्रिकः । अर्थेन—"मानिस्थ्यैकार्थयोस्त्वन्यतोऽनूः ॥ २ । २ । ४१ ॥" वातण्डयुवतिः । दारदवृन्दारिका वतण्डिशब्दस्यापत्या-र्थस्य तदर्थो वातण्ड्य भावः दरच्छब्दस्य दारदः ॥

## सम्बन्धिनां सम्बन्धे । १ । १ । ८ ॥

सम्बन्धिशब्दानां यत्कार्यमुच्यते तत् सम्बन्धे सत्येव भवति ना-न्यत्र । "श्वशुराद्यः ॥ २ । ४ । ६४ ॥" श्वशुर्यः । संज्ञायान्तु श्वशुरादिजेव । श्वाशुरिः ॥

## बहुतिसंख्या । १ । १ । ९ ॥

बतुडतिप्रत्ययान्तं संख्यावद् भवति । एकाधिकासंख्या तत्कार्यं

प्रतिपद्यत इत्यर्थः । यावत्कः, यावद्धा, यावत्कृत्वः, यतिधा, यतिकृत्वः ॥

## बहुगणं भेदे । १ । १ । १० ॥

बहुगण इत्येतौ शब्दौ भेदे वर्तमानौ संख्यावद्भवतः । भेदो नानात्वमेकत्वप्रतियोगि । बहुकः । बहुधा । बहुकृत्वः । गणकः । गणधा । गणकृत्वः । भेद इति किं ? वैपुल्ये संघे च मा भूत् ॥

## कसमासेऽध्यर्धः । १ । १ । ११ ॥

अध्यर्धः शब्दः कप्रत्यये विधातव्ये समासे संख्यावद्भवति । अध्यर्धकम् । अध्यर्धशूर्पम् । क्रीतिप्रत्ययस्य द्विगोः प्लुक् ॥

## अर्धपूर्वपदोडत् । १ । १ । १२ ॥

अर्धपूर्वपदोडत्प्रत्ययान्तः शब्दः कसमासयोः संख्यावद्भवति । डदिति "संख्यापूर्णेडदित्यारभ्य आ "द्वित्रेस्तीयतः" तकारेण प्रत्याहारः । अर्धपञ्चमकम् । अर्धपञ्चमशूर्पम् ॥

## पौत्रादिवृद्धम् । १ ॥ १ ॥ १३ ॥

परमप्रकृतेरप्रत्ययवतः यत्पौत्राद्यपत्यं तद्वृद्धसंज्ञं भवति । गर्गस्यापत्यं पौत्रादि गार्ग्यः । वात्स्यः । अनन्तरापत्यं गार्गिः । वात्सिरित्येव भवति ॥

## प्रपौत्राद्यस्त्रीवंश्यज्यायोभ्रात्रोः सति युवा ॥१॥१॥१४ ॥

प्रपौत्रः पौत्राद्यपत्यं परमप्रकृतेश्चतुर्थः । वंशे भवो वंश्यः । पित्रादिरात्मानः कारणम् । ज्यायान् भ्राता वयोऽधिकः एकपितृकः एकमातृको वा । परमप्रकृतेः प्रपौत्राद्यपत्यं स्त्रीवर्जितं वंश्ये सति जीवति पुत्रादि, ज्यायसि च भ्रातरि कनीयान्भ्राता युवसंज्ञो भवति । गार्ग्यायणः । वात्स्यायनः । परमप्रकृतिर्गर्गस्तस्यानन्तरापत्यं गार्गि-

स्तदनन्तरापत्यं वृद्धो गार्ग्यः तृतीयः स्यात् । तुरीयो (तुर्यो) गार्ग्यायणो युवा । प्रपौत्रादीतिकिं ? पौत्रो गार्ग्यः । अस्त्रीतिकिं ? स्त्री गार्गी ॥

## सत्सपिण्डेऽधिवयःस्थाने वा ॥ १ ॥ १ ॥ १५ ॥

ययोः पूर्वः सप्तमः पुरुषः एकस्तावन्योन्यसपिण्डौ । वयो—यौवनादि । स्थानं—पिता पुत्र इत्यादि । परमप्रकृतेः प्रपौत्राद्यपत्यंस्त्रीवर्जितं वयःस्थानाभ्याम् अभ्यधिके सपिण्डे जीवति सति सज्जीवदेव युवसंज्ञं वा भवति । पितृव्ये पितृव्यस्य पितरि पितामहे पुत्रे वा वयोऽधिके जीवति । गर्गस्यापत्यं जीवन् गार्ग्यः । गार्ग्यायणो वा । वात्स्यः । वात्स्यायनो वा । सदित्यादीतिकिम् ? अन्यत्र गार्ग्यः । स्त्री गार्गी ॥

## युववृद्धं कुत्सार्चे ॥ १ ॥ १ ॥ १६ ॥

युवा च वृद्धश्चापत्यं यथाक्रमं कुत्सायामर्चायां च विषये युवसंज्ञं वा भवति । गर्गस्यापत्यं युवा कुत्सितो वा गार्ग्यः । गार्ग्यायणो वा जाल्मः । गुरूमाम्भूत्वा स्वतन्त्र उच्यते । अन्यत्र गार्ग्यायण एव गर्गस्यापत्यं वृद्धमर्चितं गार्ग्यः । गार्ग्यायणो वा । अन्यत्र गार्ग्य एव ॥

## नाम दुः ॥ १ ॥ १ ॥ १७ ॥

यन्नामधेयं संव्यवहाराय हठान्नियुज्यते देवदत्तादि तद्दुसंज्ञं वा भवति । देवदत्तीयाः । दैवदत्ताः ॥

## त्यदादिः ॥ १ ॥ १ ॥ १८ ॥

त्यदादयः शब्दाः नित्यं दुसंज्ञा भवन्ति ॥ त्यदीयम् । तदीयम् । किमीयम् । तादायनिः । यादायनिः । त्यदादिः सर्वाद्यन्तर्गणः ॥

अपुंसि स्त्रियामर्थे वर्तमानादीकारान्तादूकारान्ताच्च परस्य-तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा ङितः सुपो नित्यमाडागमो भवति ॥ नद्यै । लक्ष्म्यै । नद्याः । लक्ष्म्याः । नद्याम् । लक्ष्म्याम् । कुर्व्यै । वध्वै । कुर्व्याः । वध्वाः । कुर्व्याम् । वध्वाम् ॥ अति-कुर्व्यै । अतिवध्वै । खरकुटीव खरकुटी तस्यै खरकुट्यै ॥ कुमारीवाचरतीति कुमारी तस्यै कुमार्य्यै स्त्रियै पुरुषाय वा ॥ अपुंस इति किम् ? । ग्रामण्ये । खलप्वे स्त्रियै पुरुषाय वा ॥

वेयुवोऽस्त्रियाः ॥ १ । २ । ३१ ॥

इयुवादेशभाविनौ यावीकारोकारौ तदन्तादपुमर्थात्स्त्री-वृत्तेः परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा ङितः सुपो वा आड् भवति स्त्रीशब्दं वर्जयित्वा ॥ श्रियै । श्रिये । भ्रुवै । भ्रुवे । श्रियः । श्रियाः । भ्रुवाः । भ्रुवः । श्रियाम् । श्रियि । भ्रुवाम् । भ्रुवि । अतिश्रियै । अतिश्रिये । प्रियश्रियै । प्रियश्रिये । अतिभ्रुवै । अति-भ्रुवे । पृथुभ्रुवै । पृथुभ्रुवे स्त्रियै पुरुषाय वा ॥ इयुव इति किम्? । नद्यै । पुनर्भ्वै ॥ अस्त्रिया इति किम् ? । स्त्रियै । परमस्त्रियै । अपुंस इति किम् ? । यवक्रिये । कटप्रुवे स्त्रियै पुरुषाय वा ॥

नोमामः ॥ १ । २ । ३२ ॥

इयुवादेशभावीकारोकारान्तादपुमर्थात्परस्य तत्सम्बन्धि-नोऽन्यसम्बन्धिनो वा सुप आम नामादेशो वा भवति स्त्रीशब्दं वर्जयित्वा । श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् । अतिश्रीणाम् अतिश्रियाम् । पृथुभ्रूणाम् । पृथुभ्रुवाम् । स्त्रीणाम् पुरुषाणाम् वा अस्त्रिया इति किम् ? । स्त्रीणाम् । परमस्त्रीणाम् ।

नम्ह्रस्वाट्साटः ॥ १ । २ । ३३ ॥

नमन्तात् ह्रस्वान्तादाडन्तात्संबन्धदाडश्च शब्दात्परस्या-मो नित्यं नाम् भवति ॥ वारीणाम् । त्रपूणाम् । ह्रस्वात् धना-

नाम् । मुनीनाम् । धेनूनाम् । पितॄणाम् । आङ:–शालानाम् । बहुराजानाम् । साट:–नदीनाम् । वधूनाम् । स्त्रीणाम् ॥

रषणां संख्यानाम् ॥ १ । २ । ३४ ॥

रेफषकारनकारान्तानां संख्यावाचिनां सम्बन्धिन आमो नाम् भवति ॥ चतुर्णाम् । परमचतुर्णाम् । षण्णाम् परमषण्णाम् । अष्टानाम् । परमाष्टानाम् । सम्बन्धिन इति किम् ? अतिचतुराम् । अतिषषाम् प्रियाष्टानाम् ॥

त्रेस्त्रयः ॥ १ । २ । ३५ ॥

त्रिशब्दस्यामस्सम्बन्धिनस्त्रयादेशो भवति । त्रयाणाम्-परमत्रयाणाम् । आमस्सम्बन्धिविज्ञानादिह न भवति । अत्रीणाम् । अतित्रीणाम् ॥

मोणोऽमः ॥ १ । २ । ३६ ॥

अण: परस्यामादेर्मकारो भवति ॥ धनम् । मुनिम् । धेनुम् । नदीम् ॥

जराया ङसिन्द्रस्याचि ॥ १ । २ । ३७ ॥

जराशब्दस्य स्वसम्बन्धिन्यन्यसम्बन्धिनि वाऽजादौ सुपि परे इन्द्रस्याचार्यस्य मते ङसादेशो भवति ॥ जरसौ । जरस: । एकदेशविकृतस्यानन्यत्वात्–अतिजरसौ । अतिरसौ कुले । अन्येषां मते न भवति । जरे । जरा: ॥

धातोस्तिकारकसमस्तानेकाचोऽतत्संयोगाद्य्व्योः ॥ १ । २ । ३८ ।

तिकारकघटको यो धातु: समस्तकृतसमास यश्चानेकाच: तयोर्याविवर्णोवर्णौ तयोरजादौ सुपि परे यञ् भवति-न चेत्ताविवर्णोवर्णौ तस्य धातोरवयवात्संयोगात्परौ भवत: ॥ सुल्वौ । सुल्व: । यवल्वौ । यवल्व: । खलप्वौ । खलप्व: । अनेकाच:·वस्विच्छति । वसू क्यच: क्विप् । वस्वौ । वस्व: । तिकारकेत्या-

दीति किम्? । लुवौ लुवः । परमलुवौ ॥ परमलुवः ॥ असंयोगादिति किम्? । कटप्रुवौः । तद्ग्रहणं किम्? । उन्नुवौ । सकन्नुवौ ॥

**दृन्पुनःकरवर्षाभिर्भुवः ॥ १ । २ । ३९ ॥**

दृन् पुनर्, कर, वर्षा इत्येतैरेव सह समस्तस्य भू इत्येतस्य क्विबन्तस्योवर्णस्याचि परे सुपि यञ् भवति ॥ दृन्भ्वः, पुनर्भ्वः । करभ्वौ, करभ्वः । कार इत्यपि पाठः कारभ्वौ, कारभ्वः वर्षाभ्वौ वर्षाभ्वः एतैरिति किम् । स्वयम्भुवौ ॥

**प्रत्ययेऽसुधीणः ॥ १ । २ । ४० ॥**

तिकारकसमस्तानेकाचो धातोः सुधी इणित्येतद्वर्जितस्येवर्णस्यासंयोगात्परस्याजादौ प्रत्यये परे यञ् भवति ॥ सुन्यौ सुन्यः । सेनान्यौ सेनान्यः । अध्यौ अध्यः । अनेकाचः—निन्ये निन्याते निन्यिरे ॥ असुधीण इति किम्? । सुधियौ सुधियः ईयतुः ईयुः सुष्ठु ध्यायति दधातीति वा सुधिः अस्मादेव निपातनाद्धीभावः ॥

**भ्रुहल्श्नोश्चेयुवौ ॥ १ । २ । ४१ ॥**

भ्रूशब्दस्य हलुत्तरस्य श्नुप्रत्ययस्य धातोश्चेवर्णोवर्णयोरजादौ प्रत्यये परे यथासंख्यमिय् उव् इत्येतावादेशौ भवतः ॥ भ्रुवै भ्रुवः आप्नुवन्ति । राध्नुवन्ति नियौ लुवौ लुवः ॥ अचीति किम्? भ्रूः । आप्नुतः । नीः । लूः ॥

**स्त्रियाः ॥ १ । २ । ४२ ॥**

स्त्रीशब्दस्य य इवर्णस्तस्याजादौ प्रत्यये परे इय् भवति ॥ स्त्रियौ स्त्रियः । अतिस्त्रियौ अतिस्त्रियः ॥

**वाम्शसि ॥ १ । २ । ४३ ॥**

स्त्री इत्येतस्येवर्णस्यामि शसि च परे इयादेशो वा भवति ॥ स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । अतिस्त्रियम् । अतिस्त्रीम् । अतिस्त्रियः, अतिस्त्रीन् स्त्रीन्, पुरुषान्

**दो मोऽस्यादसो माद्गुश्चाषिन्यसन् ॥ २ । २ । ४४ ॥**

अदस् इत्येतस्यावर्णान्तस्य दकारस्य मकारो भवति तस्मान्मकारात्परस्याल: स्थाने गु इत्यादेशो भवति । स च गु वेर्भावोच्चान्यस्मिन्कार्ये कर्तव्येऽसन् लब्धात्मा । पूर्वावस्थो भवति ॥ अमू । अमुम् । अमू अमून् । अमूदृक् । अमूदृशः । अमूदृक्षः ॥ अस्येति । किम् ? । अदः । कुण्डम् । प्रियादसौ ॥ अषिनीति । किम् ? । अमुष्मै । अमुना ॥ असन्निति । किम् ? । अमुया । अमूभ्याम् । असन्नित्यधिकारः । "नाम्योदिभ्यः" ॥ १ । २ । १०१ ॥ इति यावत् ॥

असत्त्वेऽमू सुकर्माणः पिपठीः सुभ्रु गौजिढत ॥
गुडलिहमान् भवानिष्टं राजभिश्चेति सिद्ध्यति ॥ १ ॥

**वाद्रेः ॥ १ । २ । ४५ ॥**

अद्र्यन्तस्यादसो दकारस्य वा यथासंभवं विकल्पेन मकारो भवति । मात्परस्याल: स्थाने गुः नित्यं भवति ॥ अमुद्र्यङ्, अदमुयङ् । अमुमुयङ्, अदद्र्यङ् ॥

**गी बहुष्वेः ॥ १ । २ । ४६ ॥**

बहुषु वर्तमानस्यादसो मकारात्परस्य एकारस्य स्थाने गी । इत्यादेशो भवति ॥ गेरपवादः । अमी । अमीभिः । अमीभ्यः ॥ बहुष्विति किम् ? । अमू कुले । अमू कन्ये । एरिति । किम् ? । अमून्, अमूः ॥ मादिति किम् ? । अमुके । अमुकेभ्यः ॥

**न्लुक् सुबाश्रये ॥ १ । २ । ४७ ॥**

"नः ॥ १ । २ । ९५ ॥ इति यो नकारलोपः । सुबाश्रये

णिनिमित्तयोर्मध्ये सति न भवति ॥ शकारे—रशना । राशिना ॥ चवर्गे । अर्चना । मूर्च्छना आर्जनम् । लकारे—वृषलेन प्रकल्प्यमानम् । प्रवलमानम् ॥ टवर्गे—पृष्टेन । पृष्ठेन । दृढेन । करणेन-सकारे—रसना रसेन ॥ तवर्गे वर्तमानम् । तीर्थेन । वर्धनम् । मर्दनम् ॥ एतेष्विति किम् ? । मूर्खेण । गर्वेण । पुष्पेण । तिसृणाम् । मातृणाम् । अजभक्तिमध्यगतरेफमृवर्णं प्रतिज्ञायते ॥

घि घ्नः ॥ १ । २ । ५२ ॥

हन्तेर्घकारे स्थानिनिमित्तयोरन्तरे सति णो न भवति ॥ वृत्रघ्ने ब्रह्मघ्ने ॥ घीति किम् ? । वृत्रहणौ । वृत्रहणः ।

पदेऽनाङ्यतद्धिते ॥ १ । २ । ५३ ॥

आङ्वर्जिते पदे स्थानिनिमित्तयोरन्तरे सति णो न भवति न चेत्तत्पदं तद्धितप्रत्ययपरे भवति ॥ प्रावनद्धम् । पर्य्यावनद्धम् । माषकुम्भवापेन । चतुरङ्गयोगेन ॥ अनाङीति । किम् । प्राणद्धम् । पर्य्याद्धणम् ॥ अतद्धित इति किम् ?। आर्द्रगोमयेण ।

अन्तस्तुभ्नादीनाम् ॥ १ । २ । ५४ ॥

पदान्तस्य तुभ्नादीनाञ्च नकारस्य णो न भवति ॥ वृक्षान् । नरान् ॥ तुभ्नादेः—तुभ्नोति । तृप्नोति ॥

नृतेर्यङः ॥ १ । २ । ५५ ॥

नृतेर्धातोर्यङन्तस्य न भवति ॥ नरीनृत्यते नर्नर्त्ति । नरीनर्त्ति । नर्नरीति ॥

अभिन्ने ॥ १ । २ । ५६ ॥

षाभ्यां परस्य नकारस्य णो भवति न चेत्स्थानिनिमित्ताद्भिन्नेऽन्यस्मिन् पदे वर्तते ॥ पूष्णः । तक्ष्णः । चतुर्णाम् । तीर्णम् । पद इति किम् ? । मुनिर्नयति अभिन्ने वाक्ये मा भूत् । मेषनासिकः । समासपदे ह्यभिन्नेऽप्यवयवौ तु भिन्न-

पदे ॥ गर्गभगोऽस्या अस्तीति गर्गभगिणी । मातृभगिणी इत्यत्र नकारः प्रत्ययस्थो न भिन्नपदस्थः ॥

पूर्वपदस्थाद्वान्तनम्सुपः ॥ १ । २ । ५७ ॥

पूर्वपदस्थात् षात्परो य उत्तरपदस्यान्तो यश्च नम् । यश्च सुबवयवो नकारः तस्य वा णो भवति ॥ माषवापिणौ माषवापिनौ । व्रीहिवापिणौ व्रीहिवापिनौ ॥ नम्—माषवापाणि । माषवापानि । प्रहिण्वन् । प्रहिन्वन्, । सुप्—माषवापेण । माषवापेन व्रीहिवापेण । व्रीहिवापेन ॥ पूर्वपदस्थादिति किम्? ॥ कूपवारिणा ॥ अन्तनम्सुप इति किम् ? । गर्गाणां भगिनी गर्गभगिनी ॥

सक्कोकाचो ॥ १ । २ । ५८ ॥

पूर्वपदस्थात्षादुत्तरस्य कवर्गवत्येकाचि चोत्तरपदे तदन्तस्य नमः सुबवयवस्य च नकारस्य नित्यं णो भवति ॥

मोक्षगामिणम् । स्वर्गकामाणि कुलानि । पुष्पमेघाणाम् ॥ एकाचि—ब्रह्महणम् । माषपाणि । क्षीरपेण ॥

क्तोऽषि ॥ १ । २ । ५९ ॥

क्तक्तवत्वोः क्त्वाप्रत्ययस्य च तकारस्य य आदेशः स षादेशादन्यस्मिन् विधौ प्रवर्तमानेऽसन् भवति ॥ क्षामिमान् । शुष्किका । लून्युः । बुद्ध्वा दग्ध्वा ॥ अषीति किम् ? । वृक्णः । वृक्णवान् ॥

क्विञस्सष्षिः ॥ १ । २ । ६० ॥

परिभाषेयं स्थानिनिमित्तनियमार्था । यः कश्चिदिह शास्त्रे षिनाम विधीयते स सर्वः कवर्गादिञश्च परस्य सकारस्य स्थाने भवति ॥ स च परस्मिन्कार्ये प्रवर्तमानेऽसन् भवतीति । वेदितव्यः ॥ वाक्षु । त्वक्षु ॥ इञ्—सर्पिषा । धनुषा ॥

शर्नम: ॥ १ । २ । ६१ ॥

इयमपि परिभाषा क्विजः परो यः शर् नम् च । तस्मात्परस्य सकारस्य षिर्भवतीति वेदितव्यम् ॥ सर्पिःषु । धनुःषु । सर्पींषि । धनूंषि ॥

सिचो न यङि ॥ १ । २ । ६२ ॥

सिचो धारण इत्यस्य यङि । सर्वः षिरादेशो न भवति । सेसिच्यते । अभिसेसिच्यते ॥ यङीति । किम् ? । सिषेच अभिषिषिक्षति ॥

सुञस्स्यसनि ॥ १ । २ । ६३ ॥

सुञः स्ये सनि च प्रत्यये परे । सर्वः षिर्न भवति ॥ परिसोष्यति । अभ्यसोष्यत् ॥ सनि–सुसूषते । क्विप्–सुसूः ॥ स्यसनीति किम् ? । सुषाव । अभिषुणोति ॥

सेधतेर्गतौ ॥ १ । २ । ६४ ॥

सेधतेर्गतौ वर्तमानस्य सर्वः षिर्न भवति ॥ अभिसेधति । अभिसेधयते गाः ॥ गताविति किम् ? । निषेधं प्रतिषेधत्यकार्यात् । निषेधसूत्रत्रयमपिपरिभाषैव ॥

शास्वसिघस्सिकृतस्यासक्सातोऽबहुपदात् ॥ १ । २ । ६५॥

क्विजः क्विष्पराच्च शर्नमः परो यः शासिवसिघसीनां यश्च सिः "तिरसस्तेस्सिः" ॥ १ । १ । १६७ ॥ इत्यादिना विहितः यश्च कृतो–विहितः सगायमसस्थानिकवर्जितो यश्च कृतस्य सात्प्रत्ययवर्जितस्यावयवस्सकारस्तस्य स्थाने षिरादेशो भवति न चेत्स बहुप्रत्ययात्पदाच्च परो भवति ॥ शास्=अशिषत् । शिष्टः । शिष्टवान् ॥ वसि–उषितः । उषितवान् ॥ घसि–जक्षतुः जक्षुः सि–चतुष्कपाठकम् । द्विष्पचति ॥ कृत-एषः । सिषेच ॥कृतावयवस्–वाक्षु । वक्ष्यति । सर्पिष्षु । सर्पिःषु । सर्पींषि ॥ शासादीति

किम्? । अभिसेकत्—अभिसस्रेकत् ॥ असक्माल इति किम्? । वदिष्यति । निंस्से ॥ कुमिहस्यते । मुनिसाह्करोति ॥ अबहुपदादिति किम्? बहुसेक् । बहुसेचौ । दधिसेक् दधिसेचौ ॥

षढः कस्सि ॥ १ । २ । ६६ ।

षढयोस्सकारे परे ककारादेशो भवति ॥ प्रेक्ष्यते तोक्ष्यते विविक्षति अद्राक्षीत् ॥ ढस्य—लेक्ष्यति । अलेक्ष्यत् । निह्नोक्षति

रः पदान्ते विसर्जनीयः ॥ १ । २ । ६७ ॥

रेफस्य पदान्ते वर्तमानस्य विसर्जनीयादेशो भवति । सजूः । सजुःषु । अहः । अहःसु । वृक्षः । प्रातः । गीः ॥ पदान्त इति किम्? । गिरौ गिरः ॥ पदान्त इत्यधिकारः "पदस्य" ॥ १ । २ । ९२ ॥ इति यावत् ॥

धातोर्व्रीकृदीर्घोऽयहल्निचाच्छुकुरोः ॥ १ । २ ६८॥

छुर् कुर् इत्येतद्वर्जितस्य धातोरवयवे वकारे रेफे च पदान्ते यप्रत्ययवर्जितहल्परे नकारे परे च तदवयवः पूर्वं इग्दीर्घो भवति ॥ गीः । धूः । आशीः॥ सजूः गीर्षु ॥ धूर्षु ॥ अयहल्नि दीव्यात् । तूर्वति । कूर्दते । शीर्णम् । प्रदीव्ना । प्रदीर्ण्ने॥ अयहल्नि चेति किम्? । गिरौ गिरः किरनि । गिरति ॥ यप्रतिषेधः किम्? गिर्यः । धुर्यः ॥ निरनुबन्धोपादानादिह भवत्येव—दीव्यति । कीर्यते ॥ अच्छुकुरोरिति किम्? धुर्यात् । कुर्यात् ॥ चकारः किम्? । कुर शब्दे—कूर्यते॥ हलीति सिद्धे नग्रहणम् "असिद्धं बहिरङ्गमन्तरङ्गे" इति दिव्यतुः दिव्युरित्यादिवत् आदेशस्यासिद्धत्वप्राप्तस्तन्माभूदित्येवमर्थम् । नग्रहणादिह न भवति पुम्मुरकाम्यति ॥

म्वोश्च मो निः ॥ १ । २ । ६९ ॥

मकारान्तस्य धातोरन्तस्य पदान्ते मकारवकारयोश्च परयोर्नकारो भवति ॥ प्रशान् । प्रदान् । प्रदान्सु । प्रतान् । प्रता-

न्भिः । प्रतान्सु । नस्यासिद्धत्वाल्लुग्न भवति ॥ म्वोः—नन्नम्मि । नन्नन्वः । नन्नन्मः । जंगन्मि । जगन्वान् ॥म्वोश्चेति किम् ? प्रतामौ । प्रतामः ॥

**अनडुद्द्यु दुष्णिग्दिग्दृक्स्पृग्दधृक्परिव्राट् ॥ १ । २ । ७० ॥**

अनडुहित्यादीनि शब्दरूपाणि पदान्ते कृतदत्वादीनि निपात्यन्ते ॥ अनडुह् इत्येतस्य दत्वम्—स्वनडुत्कुलम् अनडुद्भ्याम् । अनडुत्सु । दिव इत्येतस्य उत्वम्—विमलद्यु दिनम् । द्युभ्याम् । द्युषु । तकाराद्द्यौर्द्यौर्भवतीति द्युभवति । क्वौ । दीर्घो भवति ॥ उष्णिहः—उष्णिक् । उष्णिग्भ्याम् । उष्णिक्षु । दिशः—दिक् दिग्भ्याम् । दिक्षु । दृशः—दृक् । दृग्भ्याम् । दृक्षु । त्वदृक् । यादृक् । तादृक् । स्पृशः—घृतस्पृक् घृतस्पृग्भ्याम् । घृतस्पृक्षु । दधृषः—दधृक् दधृग्भ्याम् । दधृक्षु । एषां । गत्वम् ॥ परिव्राडित्येतस्य डत्वम् । परिव्राट् । परिव्राड्भ्याम् । परिव्राट्सु ॥ पदान्त इति किम् ? । अनड्वाहौ । अनड्वाहः दिवौ । दिवः । इत्यादि ॥

**नग्वा ॥ १ । २ । ७१ ॥**

नगिति नशेर्धातोःसकारस्य पदान्ते गत्वं वा निपात्यते॥ जीवनक् । जीवनग्भ्याम् । जीवनक्षु । षः—जीवनट् । जीवनड्भ्याम् । जीवनट्सु ॥ पदान्त । इति किम् ? । जीवनशः ॥

**सजूरहस्सोऽतिप्यक्रुस्स्रंसुध्वंसो रिः ॥ १ । २ । ७२ ॥**

सजुष् अहन्नित्येतयोरन्तस्यालस्सकारस्य च पदान्ते वर्तमानस्य रिर्भवति । क्रुस्स्रंसुध्वंसु इत्येतान्वर्जयित्वा ।अतिपि—न चेत्तिप्परो भवति ॥ सजूः । सजूर्भ्याम् । अहः । अहोभ्याम् । वृक्षः । पयः ॥ अतिपीति । किम् ? अचकात् । अन्वशात् । भवान् । अक्रुस् स्रंसुध्वंसोरिति किम् ? । विद्वत् ।

उपसेदिवत् कुलम्। उखास्रत्। पर्णध्वत्॥ पदान्त इति किम्? सजुषे सजुषः। इत्यादि॥

**सिपि दश्च वा॥ १। २। ७३॥**

पदान्ते दकारस्य सकारस्य च सिपि रिर्वा भवति॥ अभिनस्त्वम्। अभिनत्त्वम्। अचकास्त्वम्। अचकात्त्वम्॥

**रः सुप्सि॥ १। २। ७४॥**

रेफस्य सुपः सकारे परे रिर्भवति। विसर्जनीयापवादः। वार्षु। गीर्षु।

**जलो जश्॥ १। २ ७५।**

जलः पदान्ते वर्तमानस्य जश् भवति। ऋत्विग्। ऋत्विग्भिः। त्रिष्टुब्। त्रिष्टुब्भिः। सुभुग्। सुभुग्भिः। गुडलिड्। गुडलिड्भिः। कुड्। क्रुड्भिः॥ पदान्त इति किम्?। त्रिष्टुभौ। त्रिष्टुभः॥

**बशो भष् झषस्स्ध्वोश्चैकाचः प्रत्यये॥ १। २। ७६॥**

पदान्ते यो झष् सश्च सकारादौ ध्वशब्दादौ च प्रत्यये परतः। तदन्तस्यैकाचोऽवयवस्य बशः स्थाने भषादेशो भवति॥ धर्मभुट्। धर्मभुड्भ्याम्। धर्मभुत्सु। एवं पर्णघुट्। गोधुक्। स्ध्वोः—भोत्स्यते। अभुद्ध्वम्। निघोक्ष्यते। न्यघूढ्वम्। घोक्ष्यते। अघुग्ध्वम्। स्ध्वोश्चेति किम्?। धर्मबुधौ। धर्मबुधः॥

**धाञो झलि च॥ १। २। ७७॥**

झषन्तस्य धाञो बशः स्थाने झलादौ प्रत्यये परे भष् भवति॥ धत्तः। धत्थः। धत्से। धध्वे॥ झष इति किम्?। दधाति। दधासि॥ झलीति किम्?। दध्वः। दध्मः। चकारो झलि च पदान्ते चेत्युत्तरत्र समुच्चयार्थः॥

**यङोऽन्येषाम्॥ १। २। ७८॥**

दधातेर्यङ्लुगन्तस्य झषन्तस्य बशः स्थाने झलादौ प्रत्यये परे केषामाचार्याणां मतेन भष् भवति ॥ दाद्धः । दाद्धथः । अन्येषाम्-धात्तः । धात्थः ॥

धेस्तथः ॥ १ । २ । ७९ ॥

धेटो यङ्लुगन्ताज्झषन्तात्परयोः तकारथकारयोः स्थाने एकेषां मतेन भष् भवति ॥ दाद्धः । दाद्धः । अन्येषाम्—धात्तः । धात्थः ॥

अधः ॥ १ । २ । ८० ॥

अदधातेर्झषन्तात् परयोस्तथयोस्स्थाने भष् भवति । लब्धा । लब्धुम् । अलब्ध । अलब्धाः । एवं दोग्धा । लेढा । बोद्धा ॥ धाप्रतिषेधात् धत्ते । धत्थः ॥

इञो लिलुङां धो ढः ॥ १ । २ । ८१ ॥

इञः परयोर्ल्योः—लिङो लिटश्च लुङश्च धकारस्य ढकारो भवति ॥ चेषीढ्वम् । च्योषीढ्वम् । चकृढ्वे । ववृढ्वे । अचेढ्वम् । अच्योढ्वम् ॥

वेड्ञेः ॥ १ । २ । ८२ ॥

इञः परस्यादिटः ञिटश्च परेषां लिलुङां धकारस्य ढकारादेशो भवति वा ॥ अविध्वम् अविढ्वम् । उपदिदीयध्वे । उपदिदीयढ्वे । अलविध्वम् । अलविढ्वम् ॥ ञेः—लाविषीध्वम् । लाविषीढ्वम् । अलविध्वम् अलाविढ्वम् ॥

हः ॥ १ । २ । ८३ ॥

हकारस्य पदान्ते झलि च प्रत्यये परे ढकारो भवति ॥ परिषट् । परिषड्भ्याम् । परिषट्सु । झलि-वोढा । वक्ष्यते ॥

दादेरेधादेर्घः ॥ १ । २ । ८४ ॥

एधादेर्धातोर्यो दकारादिरवयवस्तदवयवस्य हकारस्य पदा-

न्ते झलि च प्रत्यये परे घकारो भवति ॥ गोधुक्। गोधुग्भ्याम्। गोधुक्षु। अधोक्। झलि—अधाक्षीत्। दग्धा। धक्ष्यते॥ एधादेरिति किम्? दामलिट् गुडलिट् दृषद्घुट्॥

नि घ्नः ॥ १। २। ८५॥

हन्तेर्हकारस्य नकारे परे घकारो भवति॥ वृत्रघ्ना। घ्नन्। घ्नन्ति। पित्तघ्नम्॥

द्रुहमुहस्नुहस्निहो वा ॥ १। २। ८६

द्रुह् मुह् स्नुह् स्निह् इत्येतेषां हकारस्य पदान्ते झलि च परे घकारो वा भवति॥ मित्रध्रुक्। मित्रध्रुग्भ्याम्। मित्रध्रुक्षु। मित्रध्रुट्। मित्रध्रुड्भ्याम्। मित्रध्रुट्सु। एवमुन्मुक्, उन्मुट्। उत्स्नुक्, उत्स्नुट्। उत्स्निक्, उत्स्निट्। झलि, द्रोग्धा। द्रोढा मोग्धा, मोढा। स्नोग्धा, स्नोढा। स्नेग्धा। स्नेढा॥

नहो धः ॥ १। २। ८७॥

नहो हकारस्य पदान्ते झलि च परे धकारो भवति॥ उपानत्। उपानद्भ्याम्। उपानत्सु। झलि—सन्नद्धा। सन्नत्स्यति॥

चोः कुः ॥ १। २। ८८॥

चवर्गस्य पदान्ते झलि च परे कवर्गो भवति॥ वाक्। वाग्भिः। वाक्षु। एवं त्वक्। स्रक्। ऋत्विक्॥ झलि—वक्ता वक्ष्यति॥ झलीति किम्?। वाचा। वाचः॥

युज्यञ्चिक्रुञ्चः ॥ १। २। ८९॥

युज् अञ्च् क्रुञ्च् इत्येतेषां पदान्ते झलि च परे कवर्गो भवति॥ युङ्। प्राङ्। क्रुङ्। क्रुङ्भ्याम्। क्रुङ्क्षु॥

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशः षः ॥ १। २। ९०॥

व्रश्च् भ्रस्ज सृज् मृज् यज् राज् भ्राज् इत्येतेषां छकारस्य शकारस्य च पदान्ते झलि च परे षकारो भवति॥

मूलवृट् । मूलवृड्भ्याम् । एवं धानाभृट् । तीर्थस्तट् । कंसपरिमृट् । देवेट् । विराट् । परेतराट् । विभ्राट् । छस्य—विट् । शस्य-गोविट् । झलि—भ्रष्टा भ्रष्टुम् । एवं, भ्रष्टा । स्रष्टा । मार्ष्टा । यष्टा । राष्टिः । भ्राष्टिः । छस्य—प्रष्टा । शस्य—उपविष्टा । उपवेक्ष्यते ॥ भ्राजः राजसहचरितस्य षत्वमन्यस्य कुत्वमेव विभ्राक् ॥ झलीति किम्? मूलवृश्चौ । मूलवृश्चः । भ्रश्चादिसाहचर्याद्धातोर्नेष्यते॥ निशाया-निड्भ्याम् । निड्छु ॥

संयोगस्यादिस्कोर्लुक् ॥ १ । २ । ८१ ॥

पदान्ते यः संयोगो यश्च झलि प्रत्यये—तस्यादेस्सकारस्य ककारस्य च लुग्भवति ॥ मस्ज् साधुमक्, साधुमग्भ्याम् । तक्ष्-काष्ठतक् । काष्ठतग्भ्याम् ॥ झलि—लग्नः । लग्नवान् । वृक्णः वृक्णवान् । आचष्टे ॥

पदस्य ॥ १ । २ । ८२ ॥

संयोगान्तस्य पदस्य लुग् भवति ॥ श्रीमान् । श्रेयान् पुंभ्याम् । पुंसु ॥

रात्सः ॥ १ । २ । ८३ ॥

रेफात्परो यस्सकारस्तदन्तस्य लुग्भवति॥ चिकीः । चिकीर्भ्याम् । चिकीर्षु । रात्स एव इति नियमादिह न भवति ऊर्ग् । न्यमाड्ड् ॥

ला ॥ १ । २ । ८४ ॥

लादेशेन सह प्रकृतेर्यस्संयोगस्तदन्तस्य पदस्य लुग् भवति ॥ शकेः-अशाशक् । वस्के-अवावक् । अजागर् भवान् ॥

नः ॥ १ । २ । ८५ ॥

नकारान्तस्य पदस्य लुग् भवति ॥ राजा । राजभ्याम् राजसु ॥ पदस्येति किम्? राजानौ राजानः ॥

मान्तोपान्तजयो मतोर्मो वः ॥ १ । २ ॥ ८६ ॥

मश्च अश्च मौ तावन्तौपान्तौ यस्य तस्मान्मकारान्ता न्मकारोपान्तादवर्णान्तादवर्णोपान्ताज्जयन्ताच्च परस्य मतोर्मकारस्य वकारो भवति ॥ मान्तात्–किंवान् । मोपान्तात्–दाह्वि? मवान् । अवर्णान्तात्–वृक्षवान् । शालावान् । अवर्णोपान्तात् अहर्वान् । यशस्वान् । भास्वान् । जयः–विद्युद्वान् दृषद्वान् ॥ एतेभ्य इति किम् ? अग्निमान् । वायुमान् ॥

नाम्नि ॥ १ । २ । ८७ ॥

संज्ञायाँ विषये मतोर्मकारस्य वकारो भवति ॥ अहीवती । कपीवती । मुनीवती । एवंनामानो नद्यः । आसन्दीवान् नाम ग्रामः ॥

अष्ठीवच्चक्रीवत्कक्षीवच्चर्मण्वद्रुमण्वत् ॥ १ । २ । ८८ ॥

एते शब्दा मतौ नाम्नि विषये निपात्यन्ते ॥ अष्ठीवान् नाम शरीरैकदेशः । चक्रीवान् रासभः राजा च । कक्षीवान् नामर्षिः गजश्च । चर्मण्वती नाम नदी । रुमण्वान् नाम पर्वतः मन्त्री च ॥ नाम्नीति किम् ? अस्थिमान् । चक्रवान् कक्षावान् । चर्मवान् । रुवणवान् ॥

अब्धौ चोदन्वान् ॥ १ । २ । ८९ ॥

आपो धीयन्तेऽस्मिन्नित्यब्धिः । अब्धौ नाम्नि च उदन्वानिति निपात्यते ॥ उदन्वान् घटः । उदन्वान्मेघः । नाम्नि–उदन्वान् समुद्रः ऋषेराश्रयश्च । अब्धौ चेति किम् । उदकवान् पुटः । अत्रोदकमात्रस्य सम्बन्धमात्रं विवक्षितं न तद्वानित्यर्थः ॥

राजन्वान् सुराज्ञि ॥ १ । २ । १०० ॥

शोभनो राजा यस्य तस्मिन्विवक्षिते राजन्वानिति मतौ

लुगभावो निपात्यते ॥ राजन्वान् देशः । राजन्वती पृथिवी । सुराज्ञीति किम् ? राजवान् देशः ॥

नोर्म्यादिभ्यः ॥ १ । २ १०१ ॥

'ऊर्मि' इत्येवमादिभ्यः परस्य मतोर्मो वत्वं न भवति ॥ ऊर्मिवान् । यवमान् । गरुत्मान् । इक्षुमती ॥

ङ्यौत्यृतोऽपदस्यार् ॥ १ २ । १०२ ॥

अपदस्य ऋकारस्य ङौ औटि च परे अर्भवति ॥ पितरि पितरौ, पितरः । पितरम् । पितरौ ॥ ङ्यौटीति किम् ? पित्रा ॥ तकारः किम् ? द्यौ ग्रौ ॥ अपदस्येति किम् ? कर्त्रि, कुलं पश्य ॥

ङातो ङुः ॥ १ । २ । १०३ ॥

अपदस्य ऋकारात्परस्य ङकारोपलक्षितस्य ङसिङसोर् - कारस्य इति उत् ङिदादेशो भवति ॥ पितुरागच्छति । पितुः स्वम् ॥ अत इति किम् ? मात्रे । पित्रे ॥

ख्यत्य उः ॥ १ । २ । १०४ ॥

अपदस्य ख्य् त्य् इत्येताभ्यामनच्काभ्यां परस्य ङात उकारो भवति ॥ सख्युरागच्छति । सख्युः स्वम् । पत्युराग- च्छति । पत्युः स्वम् ॥ ख्यत्य् इत्यनच्कग्रहणादिह न भवति— सुख्यात् । अपत्यात् ॥ अत इति तकारादिह न भवति—सख्याः । पत्याः ॥

एङो लुक् ॥ १ । २ । १०५ ॥

अपदस्य एङः परस्य ङातः लुग्भवति ॥ मुनेरागच्छति । मुनेः स्वम् । साधोः । गोः ।

एदे ॥ १ । २ । १०६ ॥

अकारान्तस्यापदस्य एकारे अकारे च परे लुग्भवति ।

पचे । यजे । पठन्ति । पचन्ति । यः । सः ॥

## डित्यन्त्याजादेः । १ । २ । १०७ ॥

अचां सन्निविष्टानां योऽन्त्योऽच् तदादेश्शब्दरूपस्य डिति परे लुग् भवति ॥ मुनौ । साधौ । पिता । माता ॥

## नः पथिमथ्यृभुक्षः ॥ १ । २ १०८ ॥

पथिन्, मथिन्, ऋभुक्षिन् इत्येतेषां नकारान्तानामपद् संज्ञानामन्त्याजादेर्लुग् भवति ॥ पथः । पथा । मथः । ऋभुक्षः सुपथी नगरी । सुमथी स्त्री । अनृभुक्षी सेना ॥ न इति किम् ? पन्थानमिच्छतः पथ्यः पश्य ॥ अपदस्येति किम् ? पथिभ्याम् । पथिभिः ॥

## श्यनप्सुट्यन् ॥ १ । २ । १०९ ॥

पथ्यादीनां नकारान्तानां शौ अनपुंसकविषये सुटि च परे अन्त्याजादेरन्नित्ययमादेशो भवति ॥ सुपन्थानि वनानि । सुमन्थानि कुलानि । अनृभुक्षाणि वलानि । पन्थानौ । पन्थानः । पन्थानम्, पन्थानौ ॥ एवं मन्थानावित्यादि ॥ नपः प्रतिषेधः किम् ? सुमथी वने । सुपथी कुले ॥

## थो नट् ॥ १ । २ । ११० ॥

पथ्यादीनां नकारान्तानां श्यनप्सुटि परे थकारस्य नडागमो भवति ॥ अटावितौ तथैवोदाहृतम् ॥

## आस्स्यनः ॥ १ । २ । १११ ॥

पथ्यादीनां सकारादौ श्यनप्सुटि परे अनःआकारो भवति ॥ पन्थाः । मन्थाः ॥ ऋभुक्षाः ॥

## द्यौः ॥ १ । २ । ११२ ॥

दिवित्यठप्रुत्पन्नस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादौ श्यनप्सुटि परे औकारादेशो निपात्यते ॥ द्यौः । हे द्यौः प्रियद्यौ ।

अनडुहो नम् ॥ १ । २ । ११३ ॥

अनडुह इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादौ श्यनप्सुटि परे नमागमो भवति ॥ अनड्वान् । बह्वन-ड्वान् ॥

उगिदचोऽनैधादेः ॥ १ । २ । ११४

उगिद्रूपस्य तस्य नैधादेरञ्चतेश्च तत्सम्बन्धिन्यन्यसम्बन्धिनि वा श्यनप्सुटि परे नम्भवति ॥ गोमन्ति । पचन्ति । प्राञ्चि कुलानि । गोमान् । गोमन्तौ । गोमन्तः । गोमन्तम् । गोमन्तौ ॥ एवं पचन् । प्राङ् ॥ अनैधादेरिति किम् ? उखास्रत् ॥ अधादेरित्यनुक्तेः गोमत्यतेः क्विपि—गोमान् । प्रियगोमान् ॥ श्यनप्सुटीति किम् ? गोमतः पश्य । गोमती कुले ॥

युज्ञोऽसमासे ॥ १ । २ । ११५ ॥

युजृयोग इत्यस्यासमासे श्यनप्सुटि नम् भवति ॥ युञ्जि कुलानि । युङ् । युञ्जः । युञ्जौ । युञ्जः । युञ्जम् । ऋनिर्देशा द्युजी समाधावित्यस्य न भवति ॥ युजमापन्ना मुनयः ॥ असमास इति किम् ? अश्वयुक् ॥

पुंसो ङस् ॥ १ । २ । ११६ ॥

पुंस् इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा श्यनप्सुटि परे ङस् इत्यादेशो भवति ॥ बहु पुमांसि कुलानि । पुमान् । पुमांसौ । पुमांसः । पुमांसम् । पुमांसौ ॥ श्यनप्सुटीति किम् ? पुंसः पश्य । द्विपुंसी कुले ॥

ओत औ ॥ १ । २ । ११७ ॥

श्यनप्सुटि परे ओकारस्य औकारो भवति ॥ गौः । गावौ । गावः । द्यौः । द्यावौ । द्यावः । हे गौः । अतिद्यौः ॥

तकारो निर्देशार्थः ॥ लाक्षणिकत्वादिह न भवति ॥ हे चित्रगो । घ्यनप्सुटीति किम् ? । गवा । द्यवा ॥

डाम्शसः ॥ १ । २ । ११८ ॥

ओकारान्तात्परस्य घ्यनप्सुटोऽम्शसः आदेः डा इति डिदाकारो भवति ॥ गाम् । गाः । द्याम् । द्याः ॥

ऋत्सखीदुशनस्पुरुदंशोऽनेहसस्सेः ॥ १ । २ । ११९ ॥

ऋकारान्तादिकारान्ताच्च सखिशब्दादुशनस्पुरुदंशस्अनेहस् इत्येतेभ्यश्च परस्य घ्यनप्सुटि सेः डा भवति ॥ पिता । कर्ता सखा प्रियसखा । उशना । पुरुदंशा । अनेहा । तकारः किम् ? । गृ निगरणार्थः ॥ इयं सखी ॥ सेरिति किम् ? । उशनसौ । उशनसः । पुरुदंशसौ । पुरुदंशसः ॥ घ्यनप्सुटीति-किम् ? कर्तृ । सखी । कुलम् ॥

हल्ङ्याब्दीर्घाल्लुक् ॥ १ । २ । १२० ॥

हलः ङी आब् इति दीर्घाभ्याश्च परस्य घ्यनप्सुटः सेर्लुक् भवति ॥ राजा । उखास्रत् । नारी । किशोरी । सप्रेयसी पुमान् । बाला । बहुराजा । ङ्याबिति किम् ? लक्ष्मीः । तन्त्रीः । ग्रामणीः । कीलालपाः । दीर्घादिति किम् ? निष्कौशाम्बिः । अतिखट्वः ( भः ) इत्यपिपुस्तकान्तरे ॥

वोशनोशनन्नघोभगोभो स्सम्श्चैकामन्त्रणे ॥ १ । २ । १२१ ॥

उशन उशनन् अघोर् भगोर् भोर् इत्येते शब्दा वा निपात्यन्ते । एकामन्त्रणे घ्यनप्सुटि परतः सुअमित्येतयो श्च लुक् ॥ प्रसिद्धतत्सम्बन्धस्य कार्यान्तरं प्रत्यभिमुखीकरणमामन्त्रणमुच्यते । हे उशन । वहे उशनन् । हे उशनः । हे अघोः । हे अघवन् । हे भगोः । हे भगवन् । हे भोः । हे भवन् । एक

ग्रहणं किम् ? हे उशनसौ । हे उशनसः । हे अघवन्तौ । हे अघवन्तः । हे भगवन्तौ । हे भगवन्तः । आमन्त्रणे इति किम् ? उशना । अघवान् । भगवान् । भवान् ॥ भोः इति सर्वादेर्भवच्छब्दस्य निपातनादिह न भवति । हे भवन् अत्रान्तोऽयं भवच्छब्दः । भो ब्राह्मणि इत्यत्राव्ययं द्रष्टव्यम् ॥

हस्वोऽन्नित्याटः ॥ १ । २ । १२२ ॥

अकारान्तस्य यस्य च य्वोपुसइतिनित्यमाङ्विधीयते । तस्य चैकामन्त्रणे श्यनप्सुटि ह्रस्वो भवति ॥ सोरमश्च लुक् । हे देव हे नदि । हे धन । हे वधु । हे लक्ष्मि॥ अन्नित्याट इति किम् ? हे कीलालपाः । हे सेनानीः । नित्यग्रहणं किम् ? हे श्रीः । हे भ्रूः ॥

द्व्यचोऽम्बार्थस्य ॥ १ । २ । १२३ ॥

द्वावचौ यस्य तस्याम्बार्थस्यैकामन्त्रणे श्यनप्सुटि ह्रस्वो भवति ॥ सोश्च लुक् ॥ हे अम्ब । हे अव्व । हे अक्क । हे अल्ल । हे अत्त । हे प्रियाम्ब ॥ द्व्यच इति किम् ? अम्बारे । हे अम्बिके । हे मातरिति परत्वादर् ॥

एदाङः ॥ १ । २ । १२४ ॥

आङ एकामन्त्रणे एकारो भवति । सोर्लुक् । हे शाले । हे माले ॥

ह्रस्वैतो लुचि चारेऽङ् ॥ १ । २ । १२५ ॥

ह्रस्वान्तस्यैदन्तस्य चैकामन्त्रणे लुचि श्यनप्सुटि चारेङ् चासम्भ आदेशो भवति । सोश्च लुक् ॥ हे पितः । हे मातः । हे शुचे । हे पटो । हे अतिहे । हे से । लुचि–हे कर्तः कुल । हे वारे । हे त्रपो ॥

पुत्रेऽर्हे मातुः कचोड् ॥ १ । २ । १२६ ॥

स्वपदार्थोपसर्जनो यो मातृशब्दः पुत्रे वर्तते ॥ तस्मात्पस्य कच: बहुव्रीहौ इयनप्लुतयैकामन्त्रणे अडिति डिदादेशो भवति ॥ अर्हे पुत्रस्य प्रशंसायाम् ॥ हे गार्गीमात । हे वात्सीमात ॥ अर्ह इति किम् ? अरे गार्गीमातृक ॥

वोऽनडुच्चतुरोः ॥ १ । २ । १२७ ॥

अनडुह् चतुर् इत्येतयोरुकारस्यैकामन्त्रणे इयनप्लुति वशब्दो भवति ॥ हे अनड्वन् । हे बह्वनड्वन् । हे प्रियचत्वः । हे अतिचत्वः ।

वाः ॥ १ ॥ २ ॥ १२८ ॥

अनडुच्चतुरोरुकारस्य इयनप्लुति वा इत्यादेशो भवति ॥ बह्वनड्वांहि । चत्वारि कुलानि । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहम् । अनड्वाहौ ॥ चत्वारो प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः ॥

नडान्लुक् ॥ १ । २ । ११८ ॥

ऋत्सखित्० ॥ १ । २ । ११९ ॥ इति यो डादेशः या च "न १ । २ । ९५ ॥" इति नकारस्य लुक् तौ द्वावप्यत्रैकामन्त्रणे न भवतः ॥ हे पितः । हे सखे । हे राजन् । हे दण्डिन् ॥

सखित ऐ च ॥ १ । २ ॥ १३० ॥

इकारान्तस्य सखिशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा इयनप्लुति ऐकारो भवति ॥ नचैकामन्त्रणे ॥ सखायौ । सखायः । सखायम् । सखायौ ॥ प्रियसखायौ । प्रियसखायः इत्यादि ॥ तकारः किम् ? इमे सख्यौ ॥ इयनप्लुटीति किम् ? सखीन् । सख्यौ ॥ नचैकामन्त्रण इति किम् ? हे सखे ॥ चकार एकामन्त्रणे गच्छतीति समुच्चयार्थः ॥

क्रोष्टोः क्रोष्टृ ॥ १ । २ । १३१ ॥

क्रोष्टुशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा इयन ण्सुटि क्रोष्टृ इति तृप्रत्ययान्तादेशो भवति ॥ नचैकामन्त्रणे ॥ क्रोष्टा क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टरौ ॥ अतिक्रोष्टा । प्रियक्रोष्टा । पञ्चभिः क्रोष्टुभिः क्रीतौ पञ्चक्रोष्टारौ रथौ ॥ इयनण्सुटीति किम् ? क्रोष्टून् । कृशक्रोष्टुवनम् । नचैकामन्त्रण इति किम् ? हे क्रोष्टो ॥

वाच्यापि ॥ १ । २ । १३२ ॥

क्रोष्टुशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा आपि तृतीयैकवचनादौ सुप्यजादौ वा क्रोष्टृ इत्यादेशो भवति ॥ क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे । क्रोष्ट्रुः क्रोष्टोः । क्रोष्ट्रोः । क्रोष्टरि । क्रोष्टौ ॥ आमि नित्यत्वान्नाम् ॥ क्रोष्टूनाम् ॥ अचिति किम् ? क्रोष्टुभ्याम् । क्रोष्टुषु ॥ आपीति किम् ? क्रोष्टून् ॥

अप्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृ होतृ पोतृ प्रशास्त्र दीर्घः ॥ १ । २ । १३३ ॥

तृप्रत्ययान्तस्य अप् स्वसृ नप्तृ नेष्टृ त्वष्टृ क्षत्तृ होतृ पोतृ प्रशास्तृ इत्येतेषाञ्च तत्सम्बन्धिन्यन्यसम्बन्धिनि वा इयनण्सुटि तदासन्नोऽकारो दीर्घो भवति ॥ न चैकामन्त्रणे ॥ तृ—कर्तारौ । कर्तारः । कर्तारम् । कर्तारौ ॥ आपः । स्वापः । स्वस्वारौ । स्वसारः । नप्तारौ । नप्तारः । नेष्टारौः ॥ नेष्टारः ॥ त्वष्टारौ त्वष्टारः । क्षत्तारौ क्षत्तारः । होतारौ । होतारः । पोतारौ पोतारः । प्रशास्तारौ । प्रशास्तारः । अतिकर्तारौ । अतिकर्तारः ॥ इयनण्सुटीति किम् ? हे कर्तः । हे स्वसः ॥

न्यक् ॥ १ । २ । १३४ ॥

श्यनप्सुटि परे यो नकारस्तस्मिन्पूर्वो भवति ॥ वनानि । दधीनि । मधूनि । कर्तृणि । राजा । राजानौ । राजानः । राजानम् । राजानौ ॥ नचैकामन्त्रण इति किम् ? हे राजन् हेतवन् ॥

स्महतः ॥ १ । २ । १३५ ॥

सकारान्तस्य महच्छब्दस्य च श्यनप्सुटि निमित्ते यो नकारस्तस्मिन् पूर्वो ऽक् दीर्घो भवति ॥ श्रेयांसि । महान्ति । कुलानि । श्रेयान् । श्रेयांसौ महान् । महान्तौ । इत्यादि । प्रियश्रेयान् । अतिमहान् । नचैकामन्त्रणे हे श्रेयन् । हेमहन् ॥ निमित्तविज्ञानादिह न भवति । सुहन् । सुहिंसौ ॥

इन्हन्पूषार्यम्णश्शौ ॥ १ । २ । १३६ ॥

इन् हन्, पूषन् । अर्यमन् । इत्येतेषां शावेव परे यो नकारस्तस्मिन्पूर्वोऽक्दीर्घो भवति ॥ बहुदण्डीनि । बहुब्रह्महाणि । बहुपूषाणि । बह्वर्यमाणि कुलानि । "न्यक्" इति सिद्धे नियमार्थं वचनम् । शावेव नान्यत्र । इति । तेनेह न भवति । दण्डिनौ । ब्रह्महणौ । पूषणौ । अर्यमणौ । "अर्थवद्ग्रहणे नानर्थकस्येति" प्लीहान् । प्लीहानौ । प्लीहानः । इत्यत्र नियमो न भवति ॥ वाग्मिनौ । वाग्मिनः इत्यत्र तु अनिनस्मन्ग्रहणान्यर्थंअतोऽनर्थकस्य "चे"ति भवति ॥

सावतोश्च ॥ १ । २ । १३७ ॥

अत्वित्युकारानुबन्धस्य इन्--हन्--पूषन्--अर्यमनित्येतेषां च सौ यो नकारस्तस्मिन् पूर्वोऽग् दीर्घो भवति ॥ भवान् । गोमान् । दण्डी । वाग्मी । ब्रह्महा । पूषा । अर्यमा । प्रियगोमान् । प्रियदण्डी । इत्यादि ॥ नचैकामन्त्रण इति किम् ? हे गोमन् । हे दण्डिन् ॥

असोऽनेधादेः ॥ १ । २ । १३८ ॥

अनेधादेरसन्तस्य सौ परे यस्तदासन्नोऽक् स दीर्घो भवति ॥ वेधाः । अप्सराः । सुपयाः । गौः । सुस्रोताः नदी ॥ अनेधादेरिति किम् ? पिण्डग्रः । चर्मवः । नचैकामन्त्रणे-हे वेधः हे सुपयः ॥

ञ्च ॥ १ । २ । १३९ ॥

ञ्चोच इति यश्शकारानुबन्धश्चादेशस्तस्मिन् पूर्वो ऽक् दीर्घो भवति ॥ प्राचा प्राचः । दधीचः । दधीचा । प्राची । प्रतीची । प्राच्यः । प्रतीच्यः ।

नाम्यतिसृचतुष्षः ॥ १ । २ । १४० ॥

नाम्यादेशे तिसृचतुष्षकारान्तवर्जितस्य पूर्वोऽक् दीर्घो भवति ॥ धनानाम् शुचीनाम् । पटूनाम् । मातॄणाम् ॥ अतिसृ चतुष्ष इति किम् ? तिसृणाम् । चतुर्णाम् षण्णाम् ॥

नुर्वा ॥ १ । २ । १४१ ॥

नृइत्येतस्य नामि परे पूर्वोऽग्दीर्घो भवति वा॥ नृणाम् । नॄणाम् ॥

संख्याया विसायादह्नस्याहन् ङौ ॥ १।२। १४२॥

संख्यायाः वि साय इत्येताभ्यां च परस्य अह्न इत्येतस्य ङौ परे वा अहन्इत्यादेशो भवति ॥ द्वयोरह्नोर्भवः । द्व्यह्नः । तस्मिन् द्व्यह्नि । द्व्यहनि । द्व्यह्ने । तावदह्नि । तावदहनि । तावदह्ने विगतमह्नः । व्यह्नः । तस्मिन् । व्यह्नि । व्यहनि । व्यह्ने । सायमह्नः । सायाह्नि । सायाहनि । सायाह्ने ॥

**पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकन्शकन्नुदन्नासंश्चा-**
**सुटि ॥ १ । २ । १४३ ॥**

पाद दन्त नासिका मास हृदय निशा असृज् यूष दोस् यकृत् शकृत् उदक आसन्न इत्येतेषामसुटि सुटोऽन्यस्मिन् सुपि-परे यथाक्रमं पद् दत् नस् मास् हृद् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्येते आशो भवन्ति वा ॥ पदा पादेन । दोष्णा दोषा । यक्ना यकृता । शक्ना शकृता उद्ना उदकेन । आसनि आस्नि असने ॥ असुटीति किम् ? पादः पादौ चेन वानुकृष्यते ॥

**पादोऽपदस्य ण्यसुट्छिण्यादौ पद् ॥ १।२। १४४॥**

अपदसंज्ञकस्य यः पाद इत्यवयवस्तस्य णौ इत्येतस्मि-न्सुट्छिण्यादिवर्जिते चान्यस्मिन् प्रत्यये परे पद् इत्यादेशो-भवति ॥ द्विपदी कुले । द्विपदः पश्य । द्विपदी इयम् । द्विपदिकां ददाति ॥ अपदस्येति किम् ? द्विपाद्भ्याम् । द्विपाद्भिः ॥ ण्यसुट्-छिण्यादीति किम् ? द्विपादौ । द्विपादः । व्याघ्रपान्दि कुलानि पश्य । पादयति पादुकः ॥

**क्वस उस् ॥ १ । २ । १४५ ॥**

अपदसंज्ञकस्यावयवो यः क्वसुस्तस्य ण्यसुट्छिण्यादौ परे उसादेशो भवति ॥ विदुषी कुले । विदुषी स्त्री । विदुषः । विदुषा । विदुष्मान् । पेचुषी कुले । पेचुषः । पेचुषा । पेचुष्मान् ॥ ण्यसु ट्छिण्यादाविति किम् ? विद्वांसौ । विद्वांसः । पेचिवांसौ । विद्वांसि कुलानि । विद्वयति । विद्वस्यति ॥

**श्चोऽचः ॥ १ । २ । १४६ ॥**

अपदसंज्ञकस्यावयवो योऽञ्चतिर्लुप्तनकारस्तस्य ण्यसु-

ट्छियादौ प्रत्यये परे ईच इत्यादेशो भवति ॥ दधीची । मधूची स्त्री । दधीचः । मधूचः । ग्यसुट्छियादाविति किम्? दध्यञ्चि कुलानि॥ दध्यञ्चौ । दध्यञ्चः । दध्यचति । दध्यच्यते ॥

उद ई ॥ १ । २ । १४७ ॥

उत् इत्येतस्मात्परस्यापदसंज्ञकावयवस्य लुप्तनकारस्याञ्चतेर्ग्यसुट्छियादौ प्रत्यये परे ई इत्यादेशो भवति ॥ उदीची कुले । उदीचः उदीचा । उदीची इयम् । अन्यत्र उदञ्चौ । उदञ्चः। उदञ्चि कुलानि ॥ उदति । उदच्यते ॥ पदत्वे-उदग्भ्याम् । लुप्तनकारस्य ग्रहणात्-उदञ्चः । उदञ्चौ । उदञ्चि ॥

श्वयुवन्मघोनां वस्येसुप्युश् ॥ १ । २ । १४८ ॥

श्वन् युवन् मघवन् इत्येतेभ्योऽपदसंज्ञकावयवेभ्यः ग्यसुट्छियादावीप्रत्यये सुपि च परे तदवयवस्य वशब्दस्य उशादेशो भवति ॥ शुनीयम् । प्रियशुनी कुले । शुनः । शुना । अतियूनीयम् । अतियूनी कुले । यूनः । यूना । अतिमघोनीयम् । अतिमघोनी कुले । मघोनः मघोना । ईसुपीति किम्? शौवमांसम् । यौवनम् । माघवनम् अन्यत्र-श्वानौ युवानौ । मघवानौ । प्रियश्वानि कुलानि ॥ पदत्वे श्वभ्याम् ॥

श्नोऽनोऽहल्वमात् ॥ १ । २ । १४९ ॥

अपदसंज्ञकावयवस्य अन् इत्येतस्य ग्यसुट्छियादावीसुपि परे श्नादेशो भवति । नचेत्सोऽन् शब्दः हलोनन्तराद्वकारान्मकाराच्च परः स्यात् । राज्ञीयम् । सुराज्ञी कुले । राज्ञः । राज्ञा । तक्ष्णः । तक्ष्णा ॥ अहल्वमादिति किम्? पर्वणा कर्मणा हल्ग्रहणं किम्? दाम्ना । साम्ना । अन्यत्र राजानौ । सुराजानि कुलानि ॥ पदत्वे-राजभ्याम् । राजभिः ॥

ओं नमः परमात्मने ।

# श्रीमद्भगवद्गीता ।

## बृहद्गीतासारार्थसंग्रहापरनामधेयया गीतार्थदीपिकया व्याख्यया सहिता ।

धृतराष्ट्र उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

श्रीगणेशाय नमः ।

चिदानन्दं सत्यं कमलजमुखैर्देवनिकरै-
र्नुतं वन्दे रक्षोऽधिपवधकृते संश्रिततनुम् ।
सुमित्राकैकेयीतनयहनुमत्सौरिमुखरै-
र्युतं सीतारामं दशरथसुतं मोक्षदमनुम् ॥ १ ॥
नत्वा श्रीशङ्कराचार्यमुखान् व्याख्याकृतोऽखिलान् ।
तद् व्याख्यासारमादाय कुर्वे गीतार्थदीपिकाम् ॥ २ ॥
गीताशास्त्रामृताम्भोधौ विहारार्थं ममेदृशी ।
प्रवृत्तिर्न परार्थाय प्रमादः क्षम्यतां बुधैः ॥ ३ ॥

इह खलु परमकारुणिकः पूर्णानन्दस्वरूपो निजमाययोपात्तदेहो भगवान् वासुदेवो देवकीनन्दनः श्रीकृष्णः शोकमोहाभिभूतं जीवनिचयमुद्दिधीर्षुर्यद्गीताभिधं शास्त्रं सर्ववेदसारभूतं काण्डत्रयात्मकं तत्त्वं यदखण्डार्थप्रतिपादनपरं निजविग्रहायार्जुनाय श्राहयामास तदेव क्रमेण दयामूर्त्तिर्वेदव्यासो महाभारते श्लोकैर्भगवन्मुखारविन्दनिर्गतैः स्वनिर्गतैश्च निबध्नाति धृतराष्ट्र उवाचेत्यादिना । तत्र धृतराष्ट्रेण युद्धोद्योगं संजयमुखाच्छ्रुत्वा—

केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति संजय ।
उदग्रमनसः केऽत्र के वा दीना विचेतसः ॥

के पूर्वं प्राहरंस्तत्र युद्धे हृदयकम्पने ।
मामकाः पाण्डवेया वा तन्ममाचक्ष्व संजय

इत्यादिना कृतं प्रश्नं वैशम्पायनो जनमेजयं प्रति संक्षिप्योपोद्घाताया-नुवदति धृतराष्ट्र उवाचेति । मामकाः दुर्योधनादयः पाण्डवेया युधिष्ठिरादयः युयुत्सवः योद्धुमिच्छन्तः धर्मस्य क्षेत्रे उत्पत्तेर्वृद्धेश्च भूमौ कुरोराज्ञः क्षेत्रे यज्ञार्थं निर्मिते भूतले समवेताः मिलिताः सन्तः किमकुर्वत किं कृतवन्तः स्व-धर्मभूतं धर्मयुद्धं कृतवन्त उताधर्मयुद्धमिति धर्मक्षेत्रपदेन बोधितम्। युयुत्सया समवेताः इत्येतन्मया विस्तरेण श्रुतं तदनन्तरं यथा यत्कृतवन्तस्तथा तद्वि-स्तरेण वदेत्याशयः । भीष्मपतनेन कलहस्यानर्थताद्योतकानां भवदादि-वाक्यानां सम्यक् जयो जात इति द्योतयन् सम्बोधयति सञ्जयेति ॥ किमा क्षेपोऽपि ध्वनितः किमकुर्वत उत योग्यं कृतवन्त इत्यर्थः । धर्मक्षेत्रे हिंसाप्र-धानस्य युद्धस्यानुचितत्वात् मामकानामधार्मिकत्वेन तत्सम्भवेऽपि परम-धार्मिकत्वेन प्रसिद्धाः पाण्डवा भीष्मादिपातनं किंकृतवन्त इति बोधयन्नाह पाण्डवाश्चेति भाष्योत्कर्षदीपिकाकृतः ।

प्राचीनास्तु पाण्डवानां बहुविधं जयकारणं पूर्वं श्रुत्वा स्वराज्यभ्रंशाद् भीतो धृतराष्ट्रः पप्रच्छ स्वपुत्रजयकारणमिच्छन् धृतराष्ट्र उवाचेति पाण्ड-वानां पुत्राणां च युद्धाय सन्नद्धानां प्रवृत्तिं श्रोतुकाम उक्तवानित्यर्थः । पूर्वं योद्धुमिच्छवोऽपि सन्तः कुरुक्षेत्रे सङ्गताः मदीयाः दुर्योधनादयः पाण्डु-पुत्राश्च युधिष्ठिरादयः किं कृतवन्तः किं पूर्वोत्पन्नयुद्धेच्छानुसारेण युद्धमेव कृतवन्तः उत भीष्मार्जुनादिवीरपुरुषनिमित्तदृष्टभयाद्युद्धेच्छानिवृत्याऽन्य-देव किंचित्कृतवन्तः अदृष्टभयमपि दर्शयितुमाह धर्मक्षेत्र इति धर्मस्यानुत्प-न्नस्योत्पत्तेरुत्पन्नस्य च वृद्धेर्निमित्तं सस्यस्येव क्षेत्रं यत्कुरुक्षेत्रं "यदनुकुरु-क्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्" इत्यादिश्रुतिप्रसिद्धं तस्मिन् गताः पाण्डवाः पूर्वमेव धार्मिका यदि पक्षद्वयहिंसानिमित्तादधर्माद्भीता निव-र्त्तेरंस्ततः प्राप्तराज्या एव मत्पुत्राः अथवा धर्मक्षेत्रमाहात्म्येन मत्पुत्राणां कदाचिच्चित्तप्रसादः स्यात्तदा च तेऽनुतप्ताःकपटोपात्तं राज्यं पाण्डवेभ्यो यदि दद्युस्तर्हि विनापि युद्धं हता एवेति स्वपुत्रराज्यलाभे पाण्डवराज्यालाभे च दृढतरमुपायमपश्यतो महानुद्वेग एव प्रश्नबीजम् । रागद्वेषादिदोषान् सम्यग् जितवानसीति कृत्वा निर्व्याजेन त्वया कथनीयमिति सूचनार्थं संजयेति संबोधनं मामकाः किमकुर्वतेत्येतावतैव प्रश्ननिर्वाहे पाण्डवाश्चेत्युक्त्या तेषु ममकाराभावप्रदर्शनेन तद्द्रोहमभिव्यनक्तीत्यर्थः

## संजय उवाच ।

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**

नन्वत्र युयुत्सव इति विशेषणबलेन समवेतानां तेषां कर्त्तव्यं युद्धमेवेति युद्धस्यैव कर्त्तव्यत्वे प्रतीयमाने कथं युद्धं प्रवृत्तमिति प्रश्नौचित्यौ किमकुर्वतेति प्रश्नोऽनुपपन्न इति चेन्न धर्मक्षेत्रमहिम्ना स्वयमेव धर्मपरो भूत्वा दुर्योधनस्तत्पित्र्यमर्द्धराज्यं दत्तवानुत तन्महिम्ना प्रवृद्धधर्मा सन्धर्मपुत्रः स्वजनवधोऽनर्थायेति भयाद् युद्धादुपरतोऽथवा सर्वे युद्धमेव कृतवन्तो यत्तत्र प्रवृत्तं तद्वदेत्युपपन्नतरः प्रश्न इति भावः ॥ १ ॥

एवं पृष्टः सञ्जयो युद्धमेव सर्वे कृतवन्त इति तृतीयपक्षमङ्गीकृत्य अर्जुनोऽतिकारुणिको हिंसाप्रधानाद्युद्धान्निवृत्तः पुनर्भूभारं संजिहीर्षुणा श्रीकृष्णेनोपदिष्टो युद्धं कृतवान् युधिष्ठिरादयस्त्वाततायिनमायान्तं हन्यादेवाविचारयन्नित्यादिक्षत्रधर्मविदस्तत् कृतवन्तस्त्वदीयास्तु क्रूरस्वभावादेवेत्याशयेनाक्षेपं परिहरन् प्रश्नस्योत्तरमाह दृष्ट्वेत्यादिना । तु शब्दश्चाक्षेपनिरासार्थः पाण्डवानां सैन्यं व्यूहरचनया व्यवस्थितमवलोक्य दुर्योधनो द्रोणाचार्यसमीपे गत्वा राजनीतिगर्भवाक्यमब्रवीत् । ननु स्वसमीपे कुतो नाहूतवानित्यत आह राजेति । वीरपुरुषा अत्यादरेण युद्धे प्रवर्त्त्या इति राजनीतिकुशल इत्यर्थः । प्राचीनास्तु एवं कृपालोकव्यवहारनेत्राभ्यमपि हीनतया महतोऽन्धस्य पुत्रस्नेहमात्राभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने विदिताभिप्रायस्य संजयस्यातिधार्मिकस्य प्रत्युत्तरमवतारयति वैशम्पायनः सञ्जय उवाचेति । तत्र पाण्डवानां दृष्टभयसंभावनापि नास्ति अदृष्टभयं तु भ्रान्त्यार्जुनस्योत्पन्नं भगवतोपशमितमिति पाण्डवानामुत्कर्षस्तुशब्देन चोच्यते स्वपुत्रकृतराज्यप्रतिदानशङ्कया तु मा ग्लासीरिति राजानं तोषयितुं तत्पुत्रदौष्ट्यमेव पूर्वं वर्णयति दृष्ट्वेति । पाण्डुपुत्राणां सैन्यं व्यूहरचनया धृष्टद्युम्नादिभिः स्थापितं दृष्ट्वा तदा संग्रामोद्यमकाले आचार्यं द्रोणनामानमुपसंगम्य स्वयमेव तत्समीपं गत्वा न तु स्वसमीपे तमाहूय एतेन पाण्डवसैन्यदर्शनजनितभयं सूच्यते भयेन स्वरक्षार्थं तत्समीपगमनेऽप्याचार्यगौरवव्याजेन भयसंगोपनं राजनीतिकुशलत्वादित्याह राजेति ।

आचार्यं दुर्योधनोऽब्रवीदित्येतावतैव निर्वाहे वचनपदं वचनमात्रमेवाब्रवीन्नतु कंचिदर्थमित्येतत्परमित्याहुः।

अन्ये तु पाण्डवबलोत्कर्षवर्णनेन स्वबलस्य शौर्यबलपौरुषोत्साहोद्रेकं संपादयितुमिच्छयेदं वचनमब्रवीत्। उवाच मधुसूदन इत्यत्र श्रीभगवानुवाचेतिवदत्रापि दुर्योधन उवाचेति स्थातव्यं तथा पाठाभावस्तु प्रामादिक एवेत्याहुः॥ २॥

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता॥ ३॥**

वचनमेवोदाहरति पश्येत्यादिना एवं तां भवदादीनतिरथानपरिगणय्य सन्मुखे स्थितां पाण्डुपुत्राणां युधिष्ठिरादीनां चमूं सेनां महतीमनेकाक्षौहिणीयुक्तामक्षोभ्यां द्रुपदस्य पुत्रेण धृष्टद्युम्नेन तव शिष्येण बुद्धिमता व्यूढां व्यूहरचनया शकटपद्माद्याकारेण स्थापिताम् पश्य॥ हे आचार्य उभयेषामाचार्यस्यापि तव पाण्डवेषु प्रीतिर्नयुक्ता यतस्त्वामपरिगणय्य तव सन्मुखे महती सेना तैः स्थापितेत्याशयः द्रुपदपुत्रेण तव शिष्येणेति पदद्वयेन द्रुपदपुत्रस्य स्वमृत्योरपि त्वया शिक्षणं कृतमिति मृत्योरपि तव भयं नास्तीति सूचितम् शिक्षितमपि मूर्खेण विस्मर्यते इति शङ्कानिरासाय धीमतेत्युक्तम्। परेतु तदेव वाक्यविशेषरूपं वचनमुदाहरति पश्यैतामित्यादि नवभिः श्लोकैः तत्र तावत्पाण्डवेषु प्रियशिष्येष्वतिस्निग्धहृदयत्वादाचार्यो युद्धं न करिष्यतीति सम्भाव्य तस्मिन्परेषामवज्ञां विज्ञापयन् तस्य क्रोधातिशयमुत्पादयितुमाह पश्येति-एतामत्यासन्नत्वेन भवद्विधानपि महानुभावानवगणय्य निर्भयत्वेन स्थितां पाण्डुपुत्राणां चमूं महतीमपरिमितत्वेन दुर्निवारां पश्य प्रार्थनायां लोट् अहं शिष्यत्वात्त्वामाचार्यं प्रार्थयामीत्याह आचार्येति। दृष्ट्वा च तत्कृतामवज्ञां स्वयमेव ज्ञास्यतीति भावः। ननु तदीयावज्ञा सोढव्यैवास्माभिः प्रतिकर्त्तुमशक्यत्वादित्याशङ्क्य तन्निरसनं तव सुकरमेवेत्याह व्यूढां तव शिष्येणेति शिष्यापेक्षया गुरोराधिक्यं सर्वसिद्धमेव धृष्टद्युम्नेनेत्यनुक्त्वा द्रुपदपुत्रेणेति कथनं द्रुपदपूर्ववैरसूचनेन क्रोधोद्दीपनार्थं धीमतेत्युपेक्षानिरासार्थं व्यासङ्गान्तरानिरासार्थं पश्येति प्रार्थनम्। अन्यच्च हे पाण्डुपुत्राणामाचार्य ननु मम तेषु स्नेहाधिक्यात् द्रुपदपुत्रेण तव शिष्येणेति त्वद्वधार्थमुत्पन्नेऽपि त्वयाध्या-

पित इति तव मौढ्यमेव ममानर्थकारणमिति सूचयति । शत्रोरपि सकाशात्तद्वधोपायभूता विद्या गृहीतेति तस्य धीमत्त्वम् अत एव तच्चमूदर्शनेनानन्दस्तवैव भविष्यति भ्रान्तत्वात् । नान्यस्य कस्य चिदपि यं प्रतीयं प्रदर्शनीयेति त्वमेवैतां पश्येत्याचार्यं प्रति तत्सैन्यं प्रदर्शयन्निगूढं द्वेषं द्योतयति । एवं च यस्य धर्मक्षेत्रं प्राप्याचार्येऽपीदृशी दुष्टबुद्धिस्तस्य कानुतापशङ्का सर्वाभिशङ्कितत्वेनातिदुष्टाशयत्वादिति भाव इत्याहुः । पश्य योद्धृतेजोबलपौरुषसन्नाहसंजृम्भितां विलोकयेत्यर्थ इत्यन्ये ॥ ३ ॥

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**

शत्रुसैन्ये प्रसिद्धान् शूरान्दर्शयन्नुपेक्षणीयत्वं वारयति अत्रेति । तेजोबलपौरुषसन्नाहमेव प्रकटयति त्रिभिरित्यन्ये । अत्र अस्यां चम्वां शूराशौर्येणोपेताः महेष्वासाः इषवः वाणाः अस्यन्ते क्षिप्यन्ते यैस्तानि धनूंषि महान्ति येषां ते महेष्वासाः किम्भूताः युधि युद्धे भी भयेन भीयते चकितैरेव वीरान्तरैरवलोक्यत इति भीमः महादेवसंग्रामाद्युपार्जितयशोभिरर्जुनं श्वेतं सम्पादितं विश्वं येन सोऽयमर्जुनस्ताभ्यां समाः बलेन पराक्रमेण च तुल्याः सर्वे युद्धकुशला इत्यर्थः । के ते इत्याकाङ्क्षायां तानेवाह युयुधान इत्यादिना । महारथा इत्यन्तेन वीरान्तरैरेव मिश्रीभावेन युद्धाविष्टोऽतिशयेन युध्यतीति युयुधानः सात्यकिः युद्ध मिश्रणे इत्युक्तेः विगतः विपक्षभूतो राजा यस्य स विराटः द्रुवत् वृक्षवत्संग्रामे निश्चलौ पादौ यस्य स द्रुपदः द्रुर्वृक्षः पदं ध्वजे चिन्हं यस्य स द्रुपद इति वा महारथ इति द्रुपदस्यैव विशेषणं सन्निहितत्वादेकवचनस्वारस्याच्च एवमग्रेऽपि बोध्यम् ॥ ४ ॥

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥**

धृष्टः भयङ्करः शत्रुविनाशनः केतुः चिन्हं ध्वजादिर्यस्य स धृष्टानां रणे प्रगल्भानां केतुर्विनाशक इति वा युद्धे कुशलः चिकितानस्यापत्यं चेकितानः । काशो ब्रह्मतत्त्वप्रकाशो यस्यां निवसतां सुलभः सा काशी तस्या राजा काशिराजः संग्रामविजयार्हः पुरून्बहून् जयतीति पुरुजित् कुन्तिभोजः

कुन्ती पिता शिवेर्गोत्रापत्यं शैव्यं नरपुङ्गवः । नरश्रेष्ठः एतच्च शैव्यस्यैव विशेषणमुक्तयुक्तेः । परेतु नन्वेकेन द्रुपदपुत्रेणाधिष्ठितां सेनां यः कश्चिदप्यस्मदीयो जेष्यति किमिति त्वं भीतोऽसीत्यत आह अत्रेति न केवलमत्र धृष्टद्युम्न एव शूरः येनोपेक्षणीयता स्यात् किं तु अस्या चम्वामन्येपि बहवः शूराः संतीत्यवश्यमेव तज्जये यतनीयमित्याशयः शूरानेव विशिनष्टि महेष्वासा इति । महान्तोऽन्यैरप्रधृष्या इष्वासा धनूंषि येषां ते तथा दूरत एव परसैन्यविद्रावणकुशला इति भावः । के ते इत्याकाङ्क्षायां तानेवाह युयुधान इत्यादि । द्रुपदश्च महारथ इत्येके । युयुधानविराटद्रुपदानां विशेषणं महारथ इति वा धृष्टकेतुचेकितानकाशिराजानां विशेषणं वीर्यवानिति पुरुजित्कुन्तिभोजशैब्यानां विशेषणं नरपुङ्गव इति । विक्रान्तो युधामन्युः वीर्यवांश्चोत्तमौजा इति द्वौ सर्वविशेषणानि समुच्चित्य सर्वत्र योजनीयानीति वेत्याहुः ॥ ५ ॥

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥**

युधायां युद्धे मन्युः कोपवेगो यस्य स युधामन्युः । उत्तममोजो बलं यस्य स उत्तमौजाः शत्रून्विविधमीरयति पालाययतीति वीरस्तस्य कर्म वीर्यं तदस्यास्तीति वीर्यवान् । सौभद्रोऽभिमन्युः द्रौपदीपुत्राः प्रतिविन्ध्यादयः पञ्च चकारादन्येऽपि पाण्ड्यराजघटोत्कचादयो गृह्यन्ते पञ्च पाण्डवास्त्वतिप्रसिद्धा एवेति न गणिताः द्रुपदश्च महारथ इत्युक्तमयुक्तं यतोऽन्येऽपि महारथा भीष्मप्रोक्ताः सन्तीत्याशङ्क्य तदङ्गीकुरोति सर्व एव महारथा इति ये गणिताः सप्त तादृशचकारगृहीताश्चान्ये ते सर्वेऽपि महारथा एवेत्यदोषः रथानां महत्त्वं च अस्त्रशस्त्रादिप्रभुत्वं महारथस्य लक्षणं तु

एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ।
शस्त्रशास्त्रप्रवीणश्च स वै प्रोक्तो महारथः ॥
अमितान्योधयेद् यस्तु स प्रोक्तोऽतिरथस्तु सः ।
रथस्त्वेकेन योद्धा स्यात्तन्न्यूनोऽर्धरथः स्मृतः ॥

इत्युक्तं श्रेयम् यद्यपि परपक्षेऽतिरथादयोऽपि सन्ति तथापि तत्तिरोधानं तवातिरथस्य महारथानां निवारणसामर्थ्यं नत्वन्येषां रथादीनामित्याचार्यस्योत्साहजननार्थम् । परेतु सर्वेऽपि महारथा एव नैकोऽपि रथोऽर्द्धरथो वा महारथा इत्यतिरथस्याप्युपलक्षणमित्याहुः ॥ ६ ॥

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥**

ननु ते बहवो महारथा मयैकेनातिरथेनापि कथं निवार्या इत्याशङ्क्याऽन्येऽपि तव सहकारिणोऽस्मत्सैन्ये महाशूराः सन्तीत्याशयेन परसेनानेतृनिर्देशानन्तरं स्वसेनानेतॄन् निर्देष्टुमाह अस्माकमिति अस्माकं सर्वेषां मध्ये विशिष्टा विद्याबलपौरुषपराक्रमकुलशीलादिभिरुत्कृष्टा ये च मम सैन्यस्य नायका मुख्या नेतारस्तान्सर्वान्निबोध जानीहि तान्संज्ञार्थम् असंख्येषु तेषु मध्ये कतिचिन्नामभिरुक्तावशिष्टानुपलक्षयितुं ते तुभ्यं ब्रवीमि विज्ञापनं करोमि नतु किंचिदज्ञातं ज्ञापयाम्युत्तमत्वात्तेवत्याशयेनाह द्विजोत्तमेति । परेतु यद्येवं परबलमतिप्रभूतं दृष्ट्वा भीतोऽसि तर्हि संधिरेव परैरिष्यतां किं विग्रहाग्रहेणेत्याचार्याभिप्रायमाशङ्क्याह अस्माकमिति । ब्राह्मणत्वात्तावद्युद्धाकुशलस्त्वं तेन त्वयि विमुखेऽपि भीष्मादीनां क्षत्रियश्रेष्ठानां सत्त्वान्नास्माकं महती क्षतिरित्याशयेन द्विजोत्तमेत्युक्तं प्रियशिष्याणां पाण्डवानां चमूं दृष्ट्वा हर्षेणाविष्टमनसस्तव स्वीयवीरविस्मृतिर्माभूदिति ममेयमुक्तिरिति संज्ञार्थमित्यनेनेति दुर्योधनदौष्ट्यमित्याहुः ॥ ७ ॥

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ८ ॥**

के त इत्याकाङ्क्षायां तानेव विशिष्टान् सेनानायकांश्च परिगणयति-भवानित्यादिना । भवान् त्वमेव यस्य तव युद्धकौशलोपदेशेन भगवान्महादेवोऽर्जुनेन निर्जितः स त्वं सबलक्षत्रियकुलान्तकलीलावतारपरशुरामस्यापि रणे भयङ्करत्वात् भीष्मः । वैरिणां कर्त्तनात् कर्णः । शत्रुहिंसनशीलः कृपः कृ हिंसायामित्युक्तेः । समितिं संग्रामं जयतीति समितिञ्जयः एतच्च करणात्पश्चात्परिगणनेन कृपाश्वत्थाम्नोः कोपो मा भूदिति तयोर्विशेषणं मध्यमणिन्यायेनोभयत्र संबद्धत्वादित्यर्थः । एते चत्वारः सर्वतो विशेषा इति बोध्यम् ॥ नायकान् गणयति अश्वत्थामेत्यादिना अश्नुते व्याप्नोतीत्यश्वं तादृशं त्थाम बलं यस्य सः अश्नाति वैरिणो भक्षयति इत्यश्वस्तादृशं बलं यस्येति वाश्वत्थामा सर्वलोकसंहर्तृरुद्रस्य लीलावतारः यस्य संग्रामोपार्जितकीर्तिमञ्जरी वर्णनायां शत्रवः विगतकर्णाः बधिरा इव भवन्तीति विकर्णः सोमदत्तस्य

पुत्रः सौमदत्तिः महादेवदत्तवरः भूरिश्रवाः सिन्धुराजो जयद्रथः रुद्रदत्तवरः तथैव चेति पाठे तथैवेतरेऽपीत्यर्थः ॥ ८ ॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

गणयितुमशक्तः सन्नन्यानपि नायकान्संगृह्णाति अन्ये चेति। च अपरम् अन्ये सहायत्वेन समागताः भगदत्तशल्यकृतवर्म्मादयः बहवोऽपरिमिताः शूराः शौर्योपेताः मदर्थे मद्विजयार्थे त्यक्तं निश्चितं जीवितं यैस्ते तथा दुर्योधनविजयार्थमस्माकं जीवनं गच्छति चेद् गच्छत्विति निश्चयवन्त इति भावः। नानाविधानि शस्त्राणि खड्गादीनि प्रहरणानि गदादीनि च येषां ते तथा सर्वे युद्धे विशारदाः निपुणाः अत्र स्वसैन्यस्य बाहुल्यं शौर्यं स्वस्मिन्भक्तियोंद्धुमुद्योगं युद्धकुशलत्वं च यथा क्रमेण दर्शितमिति बोध्यम् ॥९॥

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

पुनरपि स्वसैन्योत्कर्षे हेत्वन्तरमावेदयति अपर्याप्तमिति। तत्पाण्डवानां बलमस्माकं बलं सैन्यमभिभवितुमपर्याप्तं नालम् असमर्थं यतोऽस्माकं बलं प्रसिद्धमहिम्ना भीष्मेण शत्रुभयङ्करेणाभितः सर्वतो रक्षितम् इदमस्मदीयं तु बलमेवैषां पाण्डवानां सैन्यमभिभवितुं पर्याप्तं समर्थं यतः परेषां बलं भीमेन बालेनाभिरक्षितमित्यर्थः। यद्वा तत्परोक्षं सर्वं विषयीकर्त्तुमशक्यं भीष्मेण चाभिरक्षितमस्माकं बलमतः परैरपर्याप्तं पर्याप्तुं क्षोभयितुमशक्यमेतेषां पाण्डवानां त्विदं परिदृश्यमानं परिमितं भीमेन चाभिरक्षितं बलमतोऽस्माभिः पर्याप्तं पर्याप्तुमभिभवितुं सोढुं च शक्यमित्यर्थः। अतो भयकारणाभावादस्माकमेव विजयो भविष्यतीति भावः। परेतु सैन्यद्वयवर्णनप्रयोजनमाह अपर्याप्तमिति। तथाभूतैर्वीरैर्युक्तमपि भीष्मेणाभिरक्षितमप्यस्माकं बलमपर्याप्तं परैः सह योद्धुमसमर्थं भाति भीष्मस्योभयपक्षपातित्वात् एतेषां पाण्डवानां तु इदं बलं भीमेनाभिरक्षितं सदस्माभिर्योद्धुं पर्याप्तं समर्थं भाति भीमस्यैकपक्षपातित्वादित्यर्थ इत्याहुः। किञ्च अपर्याप्तं युद्धाय यन्न समर्थं निरुक्तेभ्यो भिन्नमस्माकं बलं तद्भीष्माभिरक्षितं भीष्मेणाभितः शरीरवाक्शस्त्रास्त्रबलेन रक्षितं सन्मम जयाय पर्याप्तमेव भवति महापुरुषाश्रयबलात्तेषां पाण्ड-

वानां तु इदं पुरो दृश्यमानं बलं पर्याप्तमपि भीमेनाभिरक्षितं सदपर्याप्तमेव भवति हीनपुरुषाश्रयत्वादिति भावः। इतोऽन्यथा व्याख्याने सन्धिप्रसङ्गादेव-मेव युक्तमिति भातीत्यप्यन्ये ॥ १० ॥

**अयनेषु तु सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥**

यद्यप्यस्माकं भयकारणं किञ्चिदपि नास्ति तथापि संग्रामविवा-दादिषु विजयनियमाभावादेवं कर्त्तव्यमित्याह अयनेष्विति । तुशब्दः कर्त्तव्यविशेषद्योती। तथा हि युद्धप्रारम्भकाले सेनापतिः सर्वसैन्यमधि-ष्ठाय मध्ये तिष्ठति अन्ये तु तत्पूर्वापरादिदिक्ष्ववतिष्ठन्ते तथा च युद्ध-भूमौ पूर्वापरादिदिग्विभागेन नियतावस्थितिस्थानेष्वयनेषु सर्वेषु यथा भागं भागमनतिक्रम्य विभक्तां स्वां स्वां रणभूमिमपरित्यज्यावस्थिताः सन्तो भवन्तः सर्वेऽपि युद्धाभिनिवेशात्पुरतः पृष्ठतः पार्श्वतश्चापश्यन्तं सेनापतिं भीष्ममेवाभिसमन्ताद्रक्षन्तु तस्मिन् रक्षिते हि तत्प्रसादादेवास्मा-कं सर्वं रक्षितं भविष्यतीत्याशयः। हि यस्माद् भीष्माधीनो मम जयस्त-स्माद्भवन्तो योद्धार एव सर्वे निरुक्ता अयनेषु चक्रादिव्यूहमार्गेषु यथाभागं विभक्तं स्वं स्वं स्थानं यथा तथा स्थिताः सन्तो भीष्ममेव सेनाग्रे युध्यन्त-मभितो रक्षन्तु भीष्मस्य परेभ्य उपद्रवो यथा न स्यात्तथा परिवेष्ट्य रक्ष-णं कुर्वन्त एव युद्धं कुरुतेत्यर्थ इत्यन्ये ॥ ११ ॥

**तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥**

एवं पाण्डवसैन्यादतिभीतस्य तन्निवृत्त्यर्थं स्वपार्श्वे आगतस्यापि स्वास्मिन्प्रवञ्चनं ज्ञात्वा स्वस्याप्राधान्यं च श्रुत्वा सन्तोषात्तूष्णीं स्थित-माचार्यं दृष्ट्वा स्वं स्तुवन्तं दुर्योधनं चालक्ष्य भीष्मस्तस्य हर्षोत्पादने प्रवृत्त इत्याह तस्येति। पितामहः भीष्मः तस्य दुर्योधनस्य हर्षं बुद्धि-स्थमुल्लासविशेषं सम्यगुत्पादयन् शत्रुभयोत्पादनपूर्वकं तद्धर्षोत्पादनार्थमु-च्चैर्महान्तं सिंहनादं विनद्य कृत्वा शङ्खं दध्मौ पूरितवान् कुरुवृद्धत्वात्पि-तामहत्वात्तदुपजीवितया तद्वशत्वाच्च भीष्मस्योक्तार्थे प्रवृत्तिरुचितैवेति भावः। असामर्थ्यं वारयति प्रतापवानिति। तेन निनादेनोत्पन्नरणोत्साहैर्द्रो-

णादिसर्वसैनिकैः स्वस्वसिंहनादपूर्वकं शङ्खवादनेन शत्रुभयोत्पादनपूर्वकं तद्धर्षोत्पादने समर्थ इत्यर्थः। परे तु कुरुवृद्धत्वादाचार्यदुर्योधनयोरभिप्रायपरिज्ञानं पितामहत्वादनुपेक्षणं नत्वाचार्यवदुपेक्षणं प्रतापवत्त्वादुच्चैरुदात्तं सिंहनादपूर्वकं शङ्खवादनेन परेषां भयोत्पादनं सूचितमित्याहुः ॥ १२ ॥

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालक्ष्य सर्वतो युद्धोत्सवः प्रवृत्त इत्याह ततः इति। भीष्मस्य शङ्खपूर्णानन्तरं तेन निनादेनोत्पन्नरणोत्साहैर्द्रोणादिसर्वसैनिकैः स्वस्वशङ्खाश्चापरैः सेनाचरैर्भेर्यः पणवा आनकाः गोमुखाश्च वाद्यविशेषाः सहसैव तत्क्षणमेवाभ्यहन्यन्त वादिताः स च शङ्खादिशब्दस्तुमलो महानासीत्तथापि न पाण्डवानां क्षोभो जात इत्याशयः ॥ १३ ॥

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥**

स शब्दः परेषां वीररसोद्भावको जातो न तु भयजनक इत्यभिप्रेत्य दुर्योधनसेनाशङ्खपूर्णप्रवृत्यनन्तरं पाण्डवानां शङ्खपूर्णे प्रवृत्तिमाह तत इत्यादिपञ्चभिः ततः दुर्योधनसैन्यवाद्यशब्दानन्तरं श्वेतैः शुक्लवर्णैर्हयैः हे आकाशे स्वभावतो वेगाधिक्याद्वा यान्तीति हयास्तैरश्वविशेषैर्युक्ते संयोजिते महति आदित्यमण्डलतुल्येऽग्निना दत्ते पूज्ये वा स्यन्दने युद्धभूमिप्रद्रवणशीले रथे स्थितौ वर्त्तमानौ न तु भयात्प्रचलितौ माधवः लक्ष्मीपतिः पाण्डवोऽर्जुनश्चैव दिव्यौ दिवि भवावप्राकृतौ शङ्खौ प्रदध्मतुः प्रकर्षेण परवाद्यशब्दाभिभवसम्पादनेन दध्मतुः आपूरितवन्तौ शङ्खशब्देनैव तव पुत्रेभ्यो राज्यलक्ष्मीमाहृतवानिति सूचनार्थं माधव इति। तदीयं राज्यं तत्पुत्रस्यैव भविष्यतीति द्योतनार्थं पाण्डव इति ॥ १४ ॥

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥**

तदेव विभागेन विस्पष्टं प्रदर्शयन्नाह पाञ्चजन्यमित्यादिना हृषीकाणामिन्द्रियाणाम् ईश अधिष्ठाता हृषीकेश इति पदं पाण्डवानां पाण्यादी-

न्द्रियेभ्यो बलप्रदः परेषां तु तेभ्यस्तदप्रदः प्रत्युत हारक इति सूचनार्थं पञ्चजननामकदैत्यदेहोद्भवं पाञ्चजन्यं दिग्विजये गोग्रहे च राज्ञो भीष्मादींश्च जित्वा धनं गोधनं चाहृतवानतः सर्वैरप्ययमजेय इति सूचनार्थं धनञ्जयपदं माधवार्जुनयोः शङ्खशब्दं श्रुत्वा सहृष्टः युद्धरसिको भीमसेनोऽपि शङ्खं वादितवानित्याह पौण्ड्रमिति । भीमं भयानकं दुःशासनरक्तपानादि कर्म यस्य सः तेन पीतं रक्तमपि तदुदरस्थवृकाग्निजीर्णं भविष्यतीति सूचनार्थं वृकोदर इति भीमं हिडिम्बवधादिरूपं कर्म यस्य तादृशो वृकोदरत्वेन बह्वन्नपाकादतिबलिष्ठो भीमसेन इति कथितमित्यपरे ॥ १५ ॥

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**

**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**

एतेषां प्रवृत्तिमनुमोदयन् युधिष्ठिरोऽपि शङ्खपूर्णे प्रवृत्त इत्याह अनन्तविजयमिति । युधिष्ठिरोऽनन्तविजयं महाशङ्खं दध्माविन्यनुषङ्गः यस्य पूर्णादनन्तः सन्ततो विजयो भवतीत्यनन्तविजयः शत्रून् जित्वा निष्कण्टकं राज्यमनुभविष्यतीति बोधनार्थं राजेति पदं कुन्त्या दुःखं राज्यं प्राप्यापाकरिष्यतीति कुन्तीपुत्रपदेन ध्वनितं सर्वान् जित्वायमेव स्थिरो भविष्यतीति सूचनाय युधिष्ठर इत्युक्तं कुन्त्या महता तपसा धर्ममाराध्य लब्धः स्वयं च राजसूययाजित्वेन मुख्यो राजेति कुन्तीपुत्रराजपदाभ्यां सूचितमित्यन्ये । ज्येष्ठभ्रातॄणां मार्गं नकुलसहदेवावनुसृतवन्तावित्याह नकुल इति नकुलः सुघोषनामशङ्खं सहदेवो मणिपुष्पकं च दध्मावित्यनुषङ्गः । शङ्खतच्छब्दकर्तृनाम कीर्तनेन पाण्डवानामुत्कर्षः सूचितः ॥ १६ ॥

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**

**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**

अन्येषामपि तत्पक्षीयाणां सर्वेषामैकमत्यबोधनाय प्रवृत्तिमाह । काश्यश्चेत्यादिना च अपरं काश्यः काशिराजः परमेष्वासः परमधनुर्धरः च पुनः शिखण्डी महारथः शिखण्डवान् सर्वदेवासुराजेयभीष्मबधार्थमुत्पन्नः पौरुषेयशिखायुक्तः शिखण्डा श्मश्रुशून्यता साऽस्यास्तीति वा च अपरं धृष्टद्युम्नः धृष्टं परधर्षकं द्युम्नं बलं यस्य सः विराटः सत्यकस्यापत्यं सात्यकिः स चापराजितः पारिजातहरणबाणयुद्धादिषु पराजयमप्राप्तः एते सर्वे पृथक् पृथक् शङ्खान्दध्मुः वादयामासुरित्युत्तरेण संबन्धः ॥ १७ ॥

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**

**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् ॥ १८ ॥**

हे पृथिवीपते धृतराष्ट्र द्रुपदः चापरं द्रौपदेयाः द्रौपदीपुत्राः च पुनः महाबाहुः सौभद्रः एते सर्वे प्रत्येकं शङ्खान् दध्मुः पृथ्वीव दुःखं सोढुं योग्योऽसीति पृथ्वीपतित्वेन सूचितं स्थिरो भूत्वा शृण्वित्यपरे ॥ १८ ॥

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।**

**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**

त्वदीयानां शङ्खादिशब्दैः परेषां भयं नोत्पन्नं परेषां तैस्तु त्वदीयानामत्यन्तं तदुत्पन्नमित्यभिप्रेत्याह स घोष इति। सः पाण्डवीयशङ्खादिजन्यस्तुमुलस्तीव्रः घोषः शब्दः धार्तराष्ट्राणाम्। अत्र संबन्धमात्रार्थोऽण् धृतराष्ट्रस्य पुत्राः पौत्राः सैनिकाश्च धार्तराष्ट्रास्तेषां हृदयानि व्यदारयत् विदारणतुल्यां पीडां जनितवानित्यर्थः। किं कुर्वन् नभ आकाशं पृथीवीं च व्यनुनादयन् प्रतिध्वनिना पूरयन् इत्यर्थः ॥ १९ ॥

**अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।**

**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**

तद्यथेह कर्मचितो लोकः क्षीयते इत्यादिश्रुतिर्जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेत्यादिस्मृतिभिश्च जन्यत्वदृश्यत्वादियुक्तिश्च मोक्षैककामिनः स्वेन पूजा देवानां तदुद्देशेन क्रियमाणकर्मणां तत्फलानां च विचारः सम्यक् कर्तव्य इति सूचयितुं परमार्थिनोऽर्जुनस्य कर्त्तव्यं योद्धृव्ययोद्धृणां युद्धक्रियायास्तत्फलस्य च विचारं तदुदितवैराग्यं च प्रतिपादयितुमिदं प्रकरणमारभ्यमाणस्तस्मिन्समये श्रीकृष्णं प्रत्यर्जुनेन यदुक्तं तच्चतुर्भिः श्लोकैः संजय आह अथेत्यादिना। हे महीपते अथ तुमुलशब्देन त्वदीयानां व्यथाप्राप्त्यनन्तरम् उभयोः सेनयोर्युद्धसन्नाहसमनन्तरं वा कपिध्वजः पाण्डवो व्यवस्थितान् व्यथाप्राप्त्या पलायने प्राप्तेऽपि विशेषेणोत्साहेनावस्थितान् धृतराष्ट्रसंबन्धिनो दृष्ट्वा प्रत्यक्षेणोपलभ्य तदा शस्त्राणां संपाते समुदाये प्रवृत्ते प्रयोगाभिमुखे सति संपाते प्रयोगकाले प्रवृत्ते प्राप्ते इति वा धनुरुद्यम्य गाण्डीवं धनुरुद्यतं कृत्वा सज्जीकृत्य वा हृषीकेशं प्रतीदं वाक्यमाहेति द्वितीयेनान्वयः। पण्डोरतिवीरस्य पुत्रत्वात् स्वयमप्रतिशूरत्वा-

च्च तव पुत्रेभ्यो राज्याहरणसमर्थः कपिर्वानरो हनुमान् सीतात्मिकां लक्ष्मीं भगवते रामचन्द्राय प्रापयिता तव पुत्रपराजयं संपाद्य पाण्डवेभ्यो राज्यलक्ष्मीप्रदानाय यस्य ध्वजे स्थितः इति कपिध्वजपाण्डवपदाभ्यां ध्वनितोऽर्थ इत्यर्थः ॥ २० ॥

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

**अर्जुन उवाच ।**

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**

वाचः प्रवर्तकेन तेनैव प्रेरित आहेति हृषीकेशपदेन सूचितं हृषीकेशमिन्द्रियप्रवर्तकत्वेन सर्वान्तःकरणवृत्तिज्ञमित्यपरे तथा च दुर्बलैर्बुद्धिहीनैर्भवद्भिः कपटेन गृहीतं महीपतित्वं पाण्डवानामतिशूराणां भगवता हनुमता चानुगृहीतानां बुद्धिमतामेव तद्भविष्यतीति भवता तत्प्राप्तिदुराशा त्याज्येति ध्वनयन्संबोधयति महीपते इति । वाक्यमेवोदाहरति सेनयोरुभयोर्मध्ये मम रथं स्थापय । ननु मत्स्थापितं रथं ते चालयिष्यन्तीत्यत आह हे अच्युत रथमप्यचलं कर्तुं समर्थोऽसीत्यभिप्रायः । तथा च परमेश्वरोऽपि यस्य सारथ्ये स्थितः प्राकृतसारथिवन्नियुज्यते तस्य विजये कः संशय इति भावः । नन्वेवं रथं स्थापयन्तं मामेते रथाच्च्यावयिष्यन्तीत्यत आह अच्युतेति । सर्वदेशकालवस्तुष्वच्युतं त्वां को वा च्यावयितुमर्हति न कोऽपीति भाव इत्यन्ये । युक्तं च हरेर्भक्तपारवश्यं कोपश्च न युक्तो यतो हरेः स्वरूपं न जातु प्रच्युतं भवतीत्यभिप्रेत्याच्युतेत्युक्तमित्यपरे ॥ २१ ॥

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**

**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥**

सेनयोरुभयोर्मध्ये क्व स्थापनीयमित्यपेक्षायामाह यावदिति । योद्धुकामानवस्थितानेतान्भीष्मद्रोणादीन् यावत् यावति देशे यस्मिन् स्थाने स्थित्वाहं निरीक्षे द्रष्टुं समर्थः स्यां तस्मिन्स्थाने रथं स्थापयेत्यर्थः । कालपरं वा यावदिति । निरीक्षणप्रयोजनमाह कैरिति अस्मिन् रणसमुद्यमे युद्धोद्योगे वहूनां शूराणां मध्ये कैः सह मया योद्धव्यं मया सह च कैर्योद्धव्यमित्यालोचनार्थमित्यर्थः । परे तु मध्ये रथस्थापनफलमाह यावदिति। ननु त्वं योद्धा न युद्धद्रष्टा अतस्तव किमेषां दर्शनेनेत्यत आह कैरिति मत्कर्तृक-

युद्धप्रतियोद्धारः के किंकर्तृकयुद्धप्रतियोद्धाहमित्येतज्ज्ञानमेव मध्ये रथस्थापनप्रयोजनमित्यर्थ इत्याहुरन्यत्समानम् ॥ २२ ॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

योद्धुकामानवस्थितानित्युक्तं विवृणोति योत्स्यमानानिति । यद्वा ननु बन्धव एते सन्धिं कारयिष्यन्तीति कुतो युद्धमित्याशङ्क्याह योत्स्यमानानिति। य एते भीष्मद्रोणादय अत्र रणभूमौ समागतास्तान्योत्स्यमानानवेक्षे उपलभे नतु सन्धिकामानित्यर्थः । किमर्थमागतास्तत्राह धार्तराष्ट्रस्य दुर्योधनस्य दुष्टबुद्धेरविचारकारिणः स्वरक्षणोपायमजानतः प्रियं विजयं कर्त्तुमिच्छवो नतु तत्कर्त्तुं समर्थाः अतो महता प्रागल्भ्येनात्रागतास्ते ऽप्यविचारकारिण इति बोध्यं दुर्बुद्धेरधर्मनिष्ठस्य युद्धेनेष्टमर्थं सम्पादयितुकामास्सन्तोऽत्र कुरुक्षेत्रे ये वा एते समागतास्तान्योत्स्यमानान्सर्वानवेक्षे नाम रूपं कुलं संबन्धं च यथा ज्ञास्ये तथा रथं स्थापयेत्यन्ये ॥ २३ ॥

**सञ्जय उवाच ।**

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**
**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**
**उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥**

ततः किं वृत्तमित्याकाङ्क्षायां सञ्जय उवाच एवमित्यादिना एवं पूर्वोक्तप्रकारेण गुडाकेशेनार्जुनेनोक्तो हृषीकेशः सेनयोरुभयोर्मध्ये भीष्मद्रोणयोः सर्वोत्तमयोः सर्वेषां च महीपतीनां प्रमुखतः सन्मुखे रथोत्तमं दिव्यं रथं स्थापयित्वा इत्युवाच उक्तवान् इतीति किं हे पार्थ एतान्कुरून्भीष्मादीन्समवेतान् युद्धार्थमिति तान्पश्येति द्वयोरन्वयः यस्याज्ञामीश्वरोऽप्यङ्गीकरोति तस्यार्जुनस्य माहात्म्यं किं वक्तव्यमिति भावः । भरतवंशोद्भवत्वाच्छोकं मा कुर्वित्याशयेन भारतेति गुडाकेशेन जिताज्ञाननिद्रेणैवमुक्तः । हृषीकेशः सर्वेन्द्रियनियन्ता लोकोद्धाराय स्वस्वरूपभूतस्यार्जुनस्यान्तःकरणे शोकमोहयोराविर्भावयिता सेनयोरुभयोर्मध्ये भीष्मद्रोणयोः सर्वेषां च राज्ञां सन्मुखे

रथोत्तमं स्थापयित्वोवाच हे पार्थ लोकोद्धाराय स्त्रीस्वभावौ शोकमोहाव-ङ्गीकुरु कथमित्यपेक्षयामाहैतान्मिलितान् कुरूंस्स्वबान्धवान्पश्य दृष्ट्वाश्चैते महीपा एतानहं न हन्मीति निर्विस्मयो भवेति तात्पर्यार्थो हृषीकेशादिपदैः सूचितः परे तु एवमर्जुनेन प्रेरितो भगवानहिंसारूपधर्ममाश्रित्य प्रायशो युद्धात्तं निवर्त्तयिष्यतीति धृतराष्ट्राभिप्रायमाशङ्क्य तन्निराकर्त्तुमिच्छुः सञ्जय उवाचेत्याह वैशम्पायनः एवमित्यादि हे भारत भरतवंशमर्यादामनुसंधायापि द्रोहं परित्यज बन्धूनामिति संबोधनाशयः गुडाकेशेन जितनिद्रतया सर्वत्र सावधानेनैवमुक्तो भगवान् न तं युद्धान्न्यवर्त्तयत् किं तु सेनयोरुभयोर्मध्ये भीष्मद्रोणयोः प्रमुखतः सन्मुखे सर्वेषां च राज्ञां सन्मुखे चकारेण समास-निष्ठोऽपि प्रमुखतः शब्द आकृष्यते भीष्मद्रोणयोः पृथक्कीर्तनमतिप्राधान्य-सूचनाय रथोत्तममग्निदत्तं दिव्यं रथं स्थापयित्वा हृषीकेशः सर्वाभिप्रायज्ञो भगवान् अर्जुनस्य शोकमोहावुपस्थिताविति विज्ञाय सोपहासमर्जुनमुवाच हे पार्थ पृथायाः स्त्रीस्वभावेन शोकमोहग्रस्ततया तत्संबन्धिनस्तवापि तद्वत्ता समुपस्थितेति सूचयन् हृषीकेशत्वमात्मनो दर्शयति यद्वा पृथा मम पितुः स्वसा तस्याः पुत्रोऽसीति संबन्धोल्लेखेनाश्वासयति मम सारथ्ये निश्चितो भूत्वा सर्वानपि समवेतान् कुरून्पश्य निःशङ्कतयेति दर्शनविध्या-शयः। अहं सारथ्ये तिष्ठामीति सावधानस्त्वं सांप्रतमेव रथित्वं त्यक्षसीति किं तव परसेनादर्शनेनेत्यर्जुनस्य धैर्यमापादयितुं पश्येत्येतावत्पर्यन्तं भगवतो वाक्यम् अन्यथा सेनयोर्मध्ये स्थापयामासेत्येतावदेव ब्रूयादित्याहुः। अपरे तु गुडाकेशः अङ्गुष्ठतर्जनीयोगो गुडेत्युच्यते तत्परिमाणाग्रकेशो यस्य सः यद्वा गुडा गोलःब्रह्माण्डगोलस्तमन्तर्बहिश्चाकति व्याप्नोतीति गुडाकःशिवः विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवमिति श्रुतेः यद्वा गुडवन्मधुरस्सन्भक्ता नकति व्याप्नोति इति गुडाकः स शिव ईशो यस्य स गुडाकेसोऽर्जुनस्तेनै-वमुक्तस्सन् श्रीकृष्णः रथिकसारथिभ्यामश्वविशेषैर्ध्वजप्रभावेन च रथ-स्योत्तमत्वं तं रथोत्तमं सेनयोर्मध्ये स्थापयित्वा भीष्मद्रोणप्रमुखतः षष्ठीब-हुवचनान्तस्तसिः भीष्मद्रोणौ प्रमुखमादिर्येषां तेषां भीष्मद्रोणप्रमुखानां म-हीक्षितां भूभुजां सर्वेषां शृण्वतां सतामिति शेषः हे पार्थ समवायं प्राप्ता-नेतान्कुरूनपश्येत्युवाच छत्रियन्यायेनात्र भीष्मस्यैव महीक्षित्त्वमित्या-हुः॥ २४ ॥ २५ ॥

**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।**
**आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान्सखींस्तथा॥२६॥**

एवं स्वसारथ्ये दृढतया स्थितेन स्वोक्तकारिणा भगवतोक्तोऽर्जुनस्तथैव कृतवानित्याह तत्रेत्यादि तत्र समवेतान्कुरून्पश्येति भगवदभ्यनुज्ञाने सति सेनयोरुभयोरपि स्थितान् पार्थोऽपश्यदित्यन्वयः। एतान्समवेतान् कुरून्दृष्ट्वा स्त्रीस्वभावौ शोकमोहावङ्गीकुर्विति भगवदभिप्रायमर्जुनो ज्ञात्वा तान्दृष्ट्वा तथैव कृतवानिति सूचनार्थं पार्थ इत्युक्तं पितॄन् पितृकल्पान् पितृव्यान् भूरिश्रवआदीन् अथ तथा पितामहान् भीष्मसोमदत्तादीन् आचार्यान्द्रोणादीन् मातुलान् शल्यशकुन्यादीन् भ्रातॄन् भीमदुर्योधनादीन् पुत्रान् लक्ष्मणाभिमन्युमुखान्पौत्रान् लक्ष्मणादिपुत्रान् सखीनश्वत्थामजयद्रथादीन् वयस्यान् ॥ २६ ॥

**श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।**
**तान्समीक्ष्य स कौन्तेयः सर्वान् बन्धून् व्यवस्थितान्॥२७॥**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।**

**अर्जुन उवाच ।**

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥**

श्वशुरान् द्रुपदादीन् सुहृदः कृतवर्मभगदत्तादीन् अनेन यावन्तः कृतोपकारा मातामहादयश्च ते सर्वे द्रष्टव्याः ततः किं कृतवानित्यपेक्षायामाह तानिति स कौन्तेयोऽर्जुनः बध्नन्ति परस्परं स्नेहपाशैरिति बन्धवस्तान् पित्रादीन्सर्वान्बन्धून् सेनयोर्मध्येऽवस्थितान्समीक्ष्य सम्यग्दृष्ट्वा इदमब्रवीदित्यन्वयः भगवदाज्ञया बन्धून्दृष्ट्वा शोकमोहावर्जुनेन गृहीताविति सूचितं कौन्तेयपदेन मुमुक्षोर्यष्टव्यदेवतापरिशीलनमेव कर्त्तव्यमिति सूचयितुमर्जुनस्य सैनिकपरिशीलनप्रकारमाह अथ भगवदुक्त्यनन्तरं पार्थोऽर्जुनो यत्र

विपरीतनिमित्तदर्शनमप्यवस्थानाशक्तौ हेतुमाह निमित्तानि चेति हे केशव च पुनः निमित्तानि विपरीतान्यनिष्टसूचकानि वामनेत्रस्फुरणादीनि पश्याम्यनुभवाम्यतोऽपि नावस्थातुं शक्नोमीत्यर्थः। तथा चास्मन्निमित्तः स्वजननाशो भविष्यति न तु यथा त्वया केश्यादिमारणेन स्वजनरक्षणं कृतं तथा मज्जनरक्षणमिति सूचनार्थं केशवेति संबोधनं केशिनं वाति हन्तीति व्युत्पत्तेः यद्वा कृष्णेतिपदेन अहमनात्मज्ञत्वेन शोकनिमित्तं क्लेशमनुभवामि त्वं तु सदानन्दरूपत्वाच्छोकासंसर्ग्यतो मामशोकं कुर्वीति ध्वनितं कशिर्भूवाचकः शब्दो णश्च निवृत्तिवाचक इत्यादिस्मृतेः। केशवपदेन च तत्करणसामर्थ्यं सूचितं केशौ ब्रह्मरुद्रौ वात्यनुकम्प्यतया गच्छतीति व्युत्पत्तेरिति बोध्यम्। इदानीं शोकमोहाविष्टचित्तः स्वधर्मे ह्यधर्मतां निष्प्रयोजनतां चावरोपयन्नाह न चेति। च पुनः आहवे युद्धे स्वजनं स्वबन्धुवर्गं हत्वानुपश्चादुत्तरकालेऽपि श्रेयो कल्याणं दृष्टमदृष्टं वा पुरुषार्थं न पश्याम्यतो धर्मनिमित्ताया निष्फलाया बन्धुहिंसाया निवृत्तिरेव युक्तेति भावः। हे कृष्ण युयुत्सुं सेनां सन्नद्धां युयुत्सया समुपस्थितामिमं पुरस्थं स्वजनं पित्रादिकं दृष्ट्वा मदीया इति ज्ञात्वा हन्तुं ममगात्राणि करचरणादीनि शिथिलायन्ते मुखं च शुष्को भवति शरीरे कम्पो भयसंतापाभ्यां रोमोद्गमश्च जायते हस्तात् धनुर्गलति त्वक् चर्म च परितापेन दह्यते मे मनोऽपि च परवशं गच्छति अत एव रथे स्थातुं च न शक्नोमि युद्धप्रवृत्तेरनर्थत्वसूचकानि निमित्तानि च पश्यामि हे केशव यद्यपीदानीमेवमस्तु तथापि पश्चान्नु श्रेयो भविष्यतीत्यत आह नचेति। स्वजनमाहवे युद्धे हत्वा अनुपश्चाद्युद्धानन्तरभावि न किमपि श्रेयश्च पश्यामि एतेषां वधेनानर्थं विना न कमपि पुरुषार्थं पश्यामि इत्यर्थ इत्यन्ये ॥ ३१ ॥

**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च।**
**किन्नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥३२॥**

ननु मा भूददृष्टप्रयोजनं दृष्टप्रयोजनानि तु विजयो राज्यं सुखानि चेत्येवंरूपाणिभविष्यन्तीत्यत आह नेति। हे कृष्ण विजयं संग्रामे उत्कर्षविशेषं न काङ्क्षे न प्रार्थये च पुनः राज्यमाधिपत्यं सुखानि च विषयजन्यहर्षविशेषाणि न प्रार्थये इत्यर्थः। स्वभक्त्यन्तरायात्मकस्य विजयादेः कर्षित्वमेव भक्तस्योपरितवानुग्रहः। यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहमिति स्वोक्तेः। तस्माद्विजयादेर्भगवद्भक्त्यन्तरायत्वादपि तन्न काङ्क्षे इति सूचनार्थं

कृष्णेति पदं ननु भक्तानां विषयविरक्तानां भवतां मास्तु स्वार्थविजयाकाङ्क्षा स्वसंबन्धिनामर्थे तु तदाकाङ्क्षा युक्तेत्याशङ्क्य येषामर्थे विजयादिकापेक्षितं ते त्वत्र मरिष्यन्तीति किमस्माकं तेनेत्याह किमित्यादिसार्धद्वयेन। हे गोविन्द नोऽस्माकं धर्माधर्मविवेकवतां स्वजनहिंसया प्राप्तेन राज्येन किं तज्जन्यभोगैर्वा जीवितेन जीवनसाधनेन विजयेन वा किं न किमपीत्यर्थः। राज्याद्यपेक्षया वने निवसतामस्माकं कन्दमूलादिना जीवनं स्वजीवनरक्षणेन वरं न त्वधर्ममूलकविजयादिना यतः सर्वप्रकारेण स्वबन्धुरक्षणं कर्त्तव्यमिति त्वमेव जगद्गुरुर्गोवर्धनधारणादिना स्वजनरक्षणेन लब्धगोविन्दनाम्ना शंससीति बोधनाय गोविन्देति संबोधनं यथा गोभिः श्रुतिभिः वेदान्तवाक्यैर्विद्यते परमार्थरूपेण लभ्यते लब्धगोविन्दनामा सन् तासां रक्षणमपि त्वमेव करोषि तथा मया स्वजनरक्षणं कर्त्तव्यमिति वा गोशब्दवाच्यानीन्द्रियाण्यधिष्ठानतया नित्यप्राप्तस्त्वमेव ममैहिकफलविरागं जानासीति संबोधनाशय इत्यपरे ॥ ३२ ॥

**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥३३॥**

अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीदिति वचनात्पित्रादिभरणार्थमधर्ममूलकमपि विजयादिकं न दोषायेत्याशङ्क्याधर्ममूलकविजयराज्यादीनामाक्षेपे हेतुमाह येषामिति। येषां स्वजनानामर्थे प्रयोजनाय नोऽस्माकं नोऽस्माभिरिति वा तृतीयार्थे षष्ठी राज्यं भोगसाधनमाकाङ्क्षितमभिलषितं भोगाः सुखसाधनानि सुखानि चाकाङ्क्षितानि ते इमे प्रत्यक्षेणोपलभ्यमानाः प्राणान् प्राणाशां धनानि च धनाशां च त्यक्त्वा युद्धे युद्धनिमित्तमवस्थिता इत्यर्थः। अत्र प्राणधनशब्दौ तदाशालक्षकौ अन्यथा त्यक्त्वेत्यनुपपत्तेः यद्वा त्यक्तुमिति वक्तव्ये त्यक्त्वेत्युक्त्या प्राणादित्यागसाधने युद्धे प्रवृत्ते तत्त्यक्तुमवस्थिता अपि तत्प्रेमाधिक्यात् पलाययिष्यन्तीति शङ्का न कर्त्तव्येति सूचयति एतेन स्वस्य वैराग्येऽपि स्वीयानामर्थे यतनीयमित्यपास्तं तेषां मरणे प्राप्ते तदर्थप्रयत्नानुपपत्तेः ॥ ३३ ॥

**आचार्याः पितरः पुत्रास्तथैव च पितामहाः**
**मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥३४॥**

येषामर्थे राज्याद्यपेक्षितं तेऽत्र नागता इत्याशङ्क्य तान्विशिनष्टि

आचार्या इति के ते इत्याकाङ्क्षायामाहेति वा चकारान्मातामहाः संबन्धिनः विवाहादिसंबन्धवन्तः अन्यत्स्पष्टं प्राग्व्याख्यातं च ॥ ३४ ॥

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।**
**अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ॥ ३५ ॥**

ननु यदि कृपया त्वमेतान्न हंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव अतस्त्वमेवैतान् हत्वा राज्यं भुङ्क्ष्वेत्यत आह एतानिति । हे मधुसूदन त्रैलोक्यराज्यस्यापि हेतोस्तत्प्राप्त्यर्थमप्यस्मान् घ्नतोऽप्येतानाचार्यादीन् हन्तुमिच्छामपि न कुर्यामहं किं पुनर्हन्यां महीमात्रप्राप्त्यर्थं तु न हन्यामिति किमुत वक्तव्यमित्यर्थः । मधुसूदनेत्यनेन भगवतो वैदिकमार्गप्रवर्त्तकत्वं सूचयति ननु स्वराज्यपरिपन्थिनामाततायिनां हननमेव युक्तं जिघांसन्तं जिघांसीयादिति न्यायेन तेषां हनने दोषाभावादित्याशङ्क्याह एतानिति त्रैलोक्यराज्यस्यापि हेतोः घ्नतोऽप्येतानित्यन्वयः । मधुशब्दः कैटभस्याप्युपलक्षणं मधुकैटभयोः सूदनेन त्वयापि पुत्रब्रह्मरक्षणं कृतमिति कथमस्माभिः बन्धुनाशः कर्त्तव्य इति सूचनार्थं मधुसूदनेति नव्याः । पृथिवीप्राप्त्यर्थं हि हननमेतेषामिष्यते न च तत्प्राप्तिरिष्टेति कैमुत्यकन्यायेन दर्शयति अपीति नहि महदपि त्रैलोक्यराज्यं लब्धुं स्वजनहननमिच्छामि पृथ्विप्राप्त्यर्थं पुनः बन्धुवधं नेच्छामीति किंवक्तव्यमित्यर्थ इति प्राञ्चः ॥ ३५ ॥

**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।**
**पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥**
**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥**

ननु बह्वपकर्तुर्धृतराष्ट्रस्य पुत्रान् दुःखदान्निहत्य स्थितानां युष्माकं प्रीतिर्भविष्यतीति चेत्तत्राह निहत्येति हे जनार्दन धार्तराष्ट्रान् दुर्योधनादीन्निहत्य स्थितानां नोऽस्माकं का प्रीतिः किं सुखं स्यान्न किमपीत्यर्थः । अपकर्तर्यपि वृद्धेऽपकारो न कार्य इति धृतराष्ट्रसंबन्धप्रदर्शनाशयः तव तु दुष्टजनहननेन स्वसंबन्धिदेवादिप्रीतिः संपद्यतेऽस्माकं तु सापि नास्ति अस्मत्संबन्धिनाशस्यावश्यंभावादिति सूचनार्थं जनार्दनेत्युक्तम् यद्येते बध्यास्तर्हि त्वमेवैतान् जहि तव प्रलये सर्वजनहिंसकत्वेऽपि सर्वपापास्पर्शित्वादि-

ति सूचनाय जनार्दनेति संबोधनमिति प्राञ्चः । ननु अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः क्षेत्रदारापहारी च षडेते आततायिन इति स्मृत्युक्ता आततायिनो दुर्योधनादयो हन्तव्या एव । नाततायिबधे दोषो हन्तुर्भवति कश्चनेति वचनेन दोषाभावप्रतीतेरित्याशङ्क्याह पापमेवेति। आतताया उक्ताः षड्विधा दोषा येषां सन्ति ते आततायिनस्तानेतानाततायिनोऽपि हत्वा स्थितानस्मान् पापमेवाश्रयेन्न किञ्चिदन्यत् । दृष्टमदृष्टं वा प्रयोजनमित्यर्थः यद्वा पापमाश्रयेदेवेति संबन्धः नाततायिबधे दोषो हन्तुर्भवति कश्चनेति वचनं त्वर्थशास्त्रत्वेन दुर्बलत्वान्न हिंस्यात्सर्वा भूतानीति धर्मशास्त्रेण प्रबलेन बाध्यते अर्थशास्त्रात्तु बलवद्धर्मशास्त्र मिति याज्ञवल्क्योक्तेरिति भावः। अन्ये तु आततायिबधो न दोषायेति यद्यप्यस्ति तथापि स एव पापिष्ठतमो यः कुर्यात्कुलनाशनमिति वचनेनाततायित्वदोषादपि कुलनाशकत्वदोषस्यात्यन्तानर्थत्वबोधनादेतेषां हननेनास्मकं पापं स्यादेवेति भाव इत्याहुः । यद्वा धार्तराष्ट्रान् घ्नतां भवतां प्रीत्यभावेऽपि युष्मान् घ्नतां तेषां प्रीतिरस्त्येवातस्ते युष्मान्हत्वा जयं प्राप्स्यन्तीत्यत आह पापमेवेति अस्मान्हत्वा स्थितानेतानाततायिनो धार्तराष्ट्रान्पूर्वमपि पापिनः सांप्रतमपि पापमेवाश्रयेन्नान्यत् किंचित्सुखमित्यर्थः । तथा चायुध्यतोऽस्मान्हत्वैत एव पापिनो भविष्यन्ति नास्माकं कापि क्षतिः पापासंबन्धात् ॥

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥

इत्यादिना हतस्य श्रेयोविशेषाभिधानाच्चेत्याशयः । एवं हिंसात्मकस्य युद्धस्य निष्फलतामनर्थहेतुतां च न च श्रेयो नु पश्यामीत्यादिनोपपाद्य उपसंहरति तस्मादिति। हे माधव यस्मादेतेषां हननं लोकद्वयेऽपि निष्फलमनर्थकरं च तस्मादेतान्स्वबान्धवान्धार्तराष्ट्रान् हन्तुं नार्हा न योग्या वयम् एतेषां हननस्यान्याय्यत्वादधर्मत्वाच्च । नन्वेतेषां हनने परत्र सुखाभावेऽप्यत्र तु तत् स्यादित्यत्राह स्वजनमिति । स्वजनं हत्वा वयं सुखिनः कथं स्याम न कथमपीत्यर्थः । स्वजनसुखेन सुखार्थस्य राज्यलक्ष्मीपतित्वस्य स्वजननाशे सुखाजनकत्वात् स्वजनं हत्वा कथं सुखिनः स्याम यतस्तवापि लक्ष्मीपतित्वं स्वजनसुखार्थमेवेति सूचनाय माधवेति । ब्रह्मविद्यालक्ष्मीपतित्वात् तत्साधने प्रवर्त्तयितुमर्हसि न त्वस्मिन् क्लेशदे कर्मणीति वा सूचनार्थं माधवेति संबोधनम् अन्ये तु तर्हि त्वया किं निश्चितमित्यशङ्क्याह तस्मादिति यस्माद्धार्तराष्ट्राणां बधेन कुलनाशकत्वदोष एव प्रसज्यते तस्माद् बान्धवान्हन्तुं न यो

ग्या नेच्छाम इत्यर्थः। स्वसुखार्थमेतेषां बधः कर्तव्य एवेत्याशङ्क्याह स्वजनमिति स्वजनसुखेन स्वस्य सुखं स्याद्वयं तु स्वजनं हत्वा कथन्न सुखिनः स्याम न कथमपीत्यर्थ इत्याहुः ॥ ३७ ॥

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥**

ननु स्वजनबधकृतदोषस्योभयेषां समानत्वेऽपि यथा ते तं न पश्यन्ति तथा भवद्भिरपि न द्रष्टव्यमित्याङ्क्याविवेकिविभेदेन परिहरति यद्यपीति। हे जनार्दन लोभोपहतचेतसः तिरस्कृतकर्त्तव्याकर्त्तव्यविवेकज्ञानाः सन्तः एते धार्तराष्ट्राः कुलक्षयकृतं गोत्रबधनिमित्तं दोषं मित्रद्रोहे च विश्वासघातके तज्जन्यं पापं पातकं यद्यपि न पश्यन्ति तथाप्यस्मत्कुक्षयकृद्युद्धरूपात्पापान्निवर्त्तितुं निवृत्त्यर्थं कुलक्षयकृतं दोषं प्रकर्षेण पश्यद्भिरस्माभिर्दोषशब्दितं वस्तु कथं न ज्ञेयं न ज्ञातव्यमिति द्वयोरन्वयः। लुनात्युभयं लोकद्वयमिति लोभः परद्रव्याद्यभिलाषस्तेनोपहतं तिरस्कृतं चेतो विवेकज्ञानं येषां ते तथेत्यर्थः। तस्माद् दोषज्ञानं विना तत्साधने युद्धे प्रवृत्तिपरिहारासम्भवात् तज्ज्ञानमुचितमेव न तु तदज्ञानं तस्य तत्साधने प्रवर्त्तकत्वादित्याशयः। सदैवानिर्लेपस्य तवैव प्रलयादौ जनानामर्दनेन पापासस्पर्शो न त्वन्यस्य जीवस्येति सूचनाय जनार्दनेत्युक्तम् ॥ ३८ ॥

अन्ये तु ननु यद्यप्येते लोभात्प्रवृत्तास्तथापि भवतामपि युद्धे प्रवृत्तिरुचितैव आहूतो न निवर्त्तेत द्यूतादपि रणादपि इति विहितं क्षत्रियत्येस्यादिना युद्धस्य विधानादित्याशङ्क्याह कथमिति। अस्मात्पापाद्बन्धुबधफलकयुद्धरूपादित्यर्थः। अयमर्थः इष्टसाधनताज्ञानं हि प्रवर्त्तकम्। इष्टं च तद्यदनिष्टाननुबन्धि ।

फलतोऽपि च यत्कर्म नानर्थेनानुबन्ध्यते।
केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते॥

इत्युक्तेः ततश्च युद्धस्य शास्त्रविहितत्वेऽप्यनिष्टानुबन्धित्वान्नास्माकं तत्र प्रवृत्तिरुचितेत्याहुः ॥ ३९ ॥

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥**

कुलक्षयकृतो यो दोष उत्पद्यते तमाह कुलक्षय इति। कुलक्षये अत्र कुलपदेन कुलसंबन्धिनः पुरुषा लक्ष्यन्ते कुलधर्मप्रवर्त्तकपुरुषाणां विनाशे सनातनाः चिरन्तनाः कुलधर्माः कुलकर्तृकाः कुलोचिताः धर्माः सन्ध्यावद-नाग्निहोत्रादिरूपाः शास्त्रविहिताः सुखसाधनभूता आचारविशेषाः प्रवर्त-काभावात्प्रकर्षेण नश्यन्ति तत्कर्तृविनाशाद्धर्मे नष्टे स्वरूपेणादर्शनं गते सति कृत्स्नं सर्वमपि कुलम् अधर्मोऽभिभवति तिरस्करोति शिक्षकाभावा-दभितः कुलेऽनाचार एवाभिवर्द्धते अधर्मप्रधानं तत्कुलं भवति निवारकधर्म-स्याभावादित्यर्थः। उतशब्दोऽप्यर्थः ॥ ४० ॥

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४१ ॥**
**सङ्करो नरकायैव कुलघ्नानां कुलस्य च।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥**

ततश्च किं स्यादित्याह अधर्मेति। हे कृष्ण अधर्मेणाभिभवादधर्मबा-हुल्यात् शुद्धवंशोद्भवाः स्त्रियः प्रदुष्यन्ति अस्मदीयः पतिभिर्धर्ममतिक्रम्य कुलक्षयः कृतश्चेदस्माभिरपि व्यभिचारे कृते को दोषः स्यादित्येवं कुतर्क-हताः व्यभिचारिण्यो भवन्ति ततः किं तत्राह तासु स्त्रीषु दुष्टासु हे वार्ष्णे-य वर्णसङ्करो जायते वर्णस्य वर्णान्तरेण मिश्रीकरणं वर्णसङ्करः। सर्वानर्थ मूलभूताधर्मसाधनाद्युद्धादस्मदपकर्षणमेव कर्त्तुमर्हसि नतु तत्र प्रवर्त्तनमिति सूचनार्थं कृष्णेत्युक्तं वृष्णिकुलोद्भवः कुलमर्यादाभिज्ञस्त्वमेतत्कथं न जाना-सि ज्ञात्वा च किमर्थमुपेक्षस इति द्योतनाय वार्ष्णेयेति ॥ ४२ ॥

**दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥४३॥**

वर्णसङ्करस्य दोषपर्यवसायितामाह सङ्कर इति नैतावानेवानर्थः किं तु विशेषोऽस्तीत्याह सङ्कर इतीत्यन्ये सङ्करो जातिसङ्करः कुलघ्नानां कुल-

जातिधर्मव्यवस्थापकपुरुषनाशकानां कुलस्य चाधर्माभिभूतस्य नरकायैव जायते कुलहन्तारः साङ्कर्यसम्पादकाः सङ्कीर्णाः साङ्कर्योत्पन्नाश्च सर्वेऽपि नरके पतन्तीत्यर्थः। न केवलं कुलहन्तॄणां नरकपातोऽपि तु तत्पितॄणामपीत्याह पतन्ति एषां कुलघ्नानां कुलस्य च सङ्कीर्णकानां च ये पितरः स्वर्गस्थाः ते पतन्ति नरकगामिनो भवन्ति हि यस्माल्लुप्ताः पिण्डोदकयोः क्रियाः प्रदानक्रिया येषां तत्कर्तॄणां विशुद्धवंश्यानां पुत्रादीनामभावात्ततश्च प्रेतत्वादनिवृत्तिकारणाभावात्तेषां नरकपतनमेवावश्यमायातमित्यर्थः। इतोऽपि कुलघ्नानामेवानर्थं प्रतिपादयति दोषैरित्यादिना कृत्याकृत्यविवेकमुत्सृज्य कामक्रोधलोभादिभिः कुलधर्मप्रवर्त्तकपुरुषान् ये घ्नन्ति ते कुलघ्नास्तेषां कुलघ्नानामतैर्धर्मनाशाधर्माभिभवादिलक्षणैर्वर्णसङ्करकारकैर्दोषैर्जातिधर्माः क्षत्रियकत्वप्रयुक्ताः कुलधर्माः वंशधर्माः शाश्वताः परम्परयागताः चकारादाश्रमधर्मादयो गृह्यन्ते एते सर्वे उत्साद्यन्ते विनष्टाः क्रियन्ते॥ ४३॥

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम॥ ४४॥**

ततो यद्भवति तदाह उत्सन्नेति हे जनार्दन उत्सन्ना विनष्टा कुलधर्माः येषाम्। उत्सन्ना विध्वंसिताः कुलजात्यादिधर्माः यैरिति वा तेषां विनष्टकुलवर्णाश्रमादिधर्माणां मनुष्याणां नरके नियतं नियमेन वासो यद्वा अनियतं युगमन्वन्तराद्यवधिराहित्यं यथा वासः स्थितिर्भवतीत्यनु वारं वारं व्यासादिभ्यः श्रुतवन्तो वयं नतु तर्केण कल्पयाम इत्यर्थः कुलक्षयहेतुभूतयुद्धकर्त्तॄणामस्माकं नरकपतनध्रौव्यात् तस्मान्निवृत्तिरेव श्रेयसीति नरकात् त्राणार्थिभिर्जनैः प्रार्थ्यमानं त्वामहमपि तत्त्राणाय प्रार्थयामीति द्योतनाय जनार्दनेति संबोधनम्॥ ४४॥

**अहो वत महत्पापं कर्त्तुं व्यवसिता वयम्।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः॥ ४५॥**

राज्यप्राप्तिसुखलोभेन युद्धार्थमत्रागमननिश्चयोऽपि नोचितः किं पुनर्युद्धमित्यभिप्रेत्यात्मानं शोचयन्नाह अहो वतेति। अहो वत कष्टं यत्परमेश्वरस्य तव सन्निधाने वयं महन्महत्तरं वाचा वक्तुमशक्यं पापं कर्त्तुं व्यवसिताः निश्चयं गताः किं तन्महत्पापमित्यत आह यद्राज्यसुखलोभेन राज्य-

प्राप्त्या प्राप्यं यत्सुखं राजार्हं तत्र लोभो लाम्पट्यं तेन दोषेण स्वजनपितृभ्रातृपुत्रादिकं शस्त्रैर्हन्तुमुद्यताः उद्‌तिशयेन यत्नवन्तः सन्तोऽत्रागताः वयमिति यदेतदेव महत्पापमित्यर्थः। यदीदृशी ते बुद्धिः कुतस्तर्ह्यत्र युद्धाभिनिवेशेनागतोऽसीति चेदविचार्यकारितयेत्यवेहि। अन्ये तु पश्यति पुत्रं पश्यति पौत्रम्। अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिप्ररोचनश्रुतिभिर्विषयसुखाशावशो भूत्वा श्रौतादिकर्माणि प्रवृत्तस्य जननमरणप्रवाहसम्पात एव निरन्तरो भवतीति मुमुक्षुणा सन्तसव्यमिति सूचयितुमर्जुनस्य कुलक्षयकृतदोषप्राप्तोऽनर्थ एवं लक्षणः कुलघ्नानां महत्तरमिति निश्चित्य तज्जन्यसन्तापेनोच्यमानमार्त्तवचनप्रकारमाह द्वाभ्याम्। अहो इत्याश्चर्ये वतेति खेदे महन्महत्तरं वाचा वक्तुमप्यशक्यं पापं कर्त्तुं विवेकिनोऽपि वयं व्यवसिताः प्रयतामहे इत्यहो महदाश्चर्यं वत कष्टं चेत्याहुरन्यत्समानम्॥ ४५॥

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः।**
**धार्त्तराष्ट्राः रणे हन्युस्तन्मे क्षेमतरं भवेत्॥ ४६॥**

ननु पापभीत्या युद्धादपरतं त्वां त एव बलाद्धनिष्यन्तीत्यत आह यदीति। शस्त्रपाणयः सन्तो धार्तराष्ट्राः रणे संग्रामे अप्रतीकारं कृतस्य प्रतिक्रिया प्रतिकारस्ताण्डयन्तं प्रति ताडनं तं स्वप्राणरक्षणाय पापभीत्या दयया चानुरक्त्या चाकुर्वाणम्। अत एवाशस्त्रं परित्यक्तायुधं मां यदि हन्युर्निर्दाक्षिण्येन धर्मं त्यक्त्वा हनिष्यन्ति चेत्तर्हि तद्धननं मे मम स्वधर्मनिष्ठस्य क्षेमतरम् अत्यन्तं हितं भवेत् पापानिष्पत्तेरित्यर्थः। तथा च प्राणिहिंसासहितजीवनापेक्षया मरणमेव श्रेष्ठतरमहिंसापरमो धर्म इत्युक्तेरिति भावः। अन्ये तु अप्राप्तप्रापणं योगः क्षेमस्तु स्थितरक्षणमिति न्यायेन स्थितस्य परिपालनं क्षेमस्तस्मादधिकः क्षेमतरः तथा च कुलनाशनदोषतद्धेतुकनरकपातदुष्कीर्त्याद्यनर्थराहित्येन प्राक्कृतपुण्यपुञ्जस्य क्षत्यभाव एवात्र क्षेमतरशब्दार्थस्तस्यैवं भवतीत्यर्थ इत्याहुरन्यत्समानम्॥ ४६॥

**संजय उवाच।**

**एवमुक्त्वार्जुनं संख्ये रथोपस्थ उपाविशत्।**

**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादो नाम प्रथमोऽध्यायः ॥ १ ॥**

एतद्वृत्तान्तं संजयो धृतराष्ट्रं प्रत्यावेदितवानित्याह संजय इति। सोऽर्जुनः पूर्वं शूराणामवलोकनार्थं युद्धार्थं चोत्थितोऽधुना तु परमकृपावेशसमुत्पन्नेन शोकेन सम्यगुद्विग्नं मानसं मनो यस्य सः तादृशः सन् एवमुक्त्वा उक्तेन प्रकारेण श्रीकृष्णं प्रति विज्ञापनं कृत्वा संख्ये रणभूमौ शरेण सहितं चापं धनुरुत्सृज्य त्यक्त्वा रथोपस्थे रथस्योपरि उपाविशत् उपविष्टवानित्यर्थः। अन्ये तु परिक्ष्यलोकान्कर्मवित्तान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिश्रुत्युक्तरीत्या मुमुक्षुः कर्मण्यं फलानां तद्दातृणां च क्लेशाकरत्वानित्यत्वसंसारित्वादिदोषवत्त्वं कर्मकर्तृणां च जननमरणप्रवाहपातानपायित्वं निरन्तरसंसारदुःखप्राप्त्याद्यनर्थपरम्परां च श्रुतिस्मृतियुक्तिभिर्निश्चित्य मोक्षैककामनया स्वयमसतो विरज्य ससाधनं कर्म संन्यस्य मुक्त्यै सद्गुरुमुपसीदेदितीममर्थं सूचयितुमर्जुनस्य सदसद्विचारमसत्प्रवृत्तौ परितापमधर्मप्राप्ते राज्ये तज्जन्यसुखादौ दोषदर्शनेन वैराग्यं च प्रतिपाद्येदानीं हिंसासाधनभूतशस्त्रसंन्यासं युद्धक्रियानिवृत्तिं च प्रतिपादयन्नध्यायमुपसंहरति एवमिति। अर्जुनस्संख्ये कर्त्तव्ये सत्येवं धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेदित्येवं प्रकारकं वचनमुक्त्वा शोकसंविग्नमानसः स्वजनविनाशं निमित्तीकृत्य समुत्पन्नेन शोकेन संविग्नं मानसं यस्य स तथोक्तस्सन् सशरं चापं विसृज्य नाहं योद्धुं शक्ष्यामीति रथोपस्थे रथस्योपर्युपाविशदुपविष्टवानित्यर्थः। एतेन सदसद्विवेकवतो मुमुक्षोरनित्यात्स्वर्गादसतसकाशाद्विरज्य तत्साधनं सर्वं संन्यस्तव्यमिति सूचितं परीक्ष्येत्यादिश्रुतेः। यदहरेव विरजेत्तदहरेव प्रव्रजेदित्यादि श्रुतेश्चेत्याहुः ॥ ४७ ॥

इति श्रीमद्रामप्रीत्यभिलाषिणा जयरामाख्येन विदुषा विरचितायां श्रीभगवद्गीतासारार्थसंग्रहाख्यायां व्याख्यायां प्रथमोऽध्यायः। सटीकग्रन्थसंख्या ॥५३०॥

---

## सञ्जय उवाच ।

**तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

सद्यो मोक्षाधिकारी स भवति खलु यः पापभीरुर्वितृष्णः ।
तादृक् पार्थोऽस्ति यस्मान्निजकुलदलनाद्राज्यभोगान्निवृत्तः ॥
यच्चैवं यादवेशोऽप्यनुपदमकरोद्ब्रह्मविद्योपदेशम् ।
भूभृद्धर्मानुरूपं तदिदमभिहितं त्वादिमाध्यायकृत्यम् ॥

इति प्रथमाध्यायतात्पर्यसंग्रहश्लोकः । अथेदानीं सदसद्विवेकेन तज्जनिततीव्रवैराग्येन मुमुक्षया च संन्यस्तसर्वकर्मणो मोक्षैककामस्याधिकारिणः सदसद्विवेकवैराग्यादिसाधनसम्पत्सिद्धेः साफल्यायाथातो ब्रह्मजिज्ञासेति आत्मा वा अरे द्रष्टव्यः श्रोतव्य इति तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यादिश्रुत्युक्तरीत्या सद्गुरुं श्रोत्रियं ब्रह्मनिष्ठमुपसद्य ब्रह्मविचारः कर्त्तव्य इतीममर्थं सूचयितुं सदसद्विवेकिनोऽर्जुनस्य मोक्षैककामस्य शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नमितीश्वरप्रतिपत्तिः तस्मै ईश्वरेण कृतमात्मानात्मविवेकज्ञानोपदेशप्रकारं च प्रतिपादयितुं द्वितीयोऽध्याय आरभ्यते । तत्रादौ सोऽहं भगवः शोचामि तं मा भगवञ्शोकस्य पारं तारयत्विति श्रवणात्संसारदुःखेन शोचन्तं स्वं शरणं गतं मुमुक्षुमभयवचनपूर्वकमभिमुखीकृत्य गुरुस्तत्त्वं बोधयेदिति सूचयितुं तथा शोचन्तमर्जुनं भगवान् विवेकवचनैर्बोधयामासेति वक्तुं धृतराष्ट्रं प्रति सञ्जय उवाच तमिति । तथोक्तरीत्या मदीया एते भ्रातृपुत्रादयो युधि म्रियन्त इति मरिष्यमाणस्वजनेषु कृपयाविष्टमत एव विषीदन्तमत एवाश्रुपूर्णाकुलेक्षणं तमर्जुनं दृष्ट्वा मधुसूदनः मध्वाख्यमसुरं सूदयति नाशयतीति मधुसूदनः सर्वेषां देहे मधुवदिष्टत्वात् मधुरहङ्कारस्तदप्रकाशनेन सूदयतीति वा सः इयं पृथिवी सर्वेषां भूतानां मध्विति श्रवणात्मधुस्स्वरूपानन्दस्तं स्वापरोक्षवतां सूदयति स्फोरयतीति वा मधुसूदनः श्रीकृष्ण इदं वक्ष्यमाणं वाक्यमुवाच अत्र कृपयाविष्टमित्युक्तिः कृपापदस्य क्षान्त्यादीनामुपलक्षणार्थत्वात् दया सर्वभूतेषु क्षान्तिरनसूयाशौचिनायासो माङ्गल्यमकार्पण्यमस्पृहा चेत्यष्टावात्मगुणा इति गौतमोक्तैरष्टभिरात्मगुणैर्विशिष्टस्यैव मुमुक्षोः सम्यग्ज्ञानं जायते इति सूचयितुं सोऽहं भगवः शोचामि इति श्रवणात्कथं संसारसागरं तरिष्यामीति शो-

चतः परितपत एव गुरुरीश्वरश्च प्रसीदतीति सूचयितुं विषीदन्तमश्रुपूर्णाकुलेक्षणमित्युक्तम् । अनेन गुरुमुपसिषीदिषोर्मुमुक्षोरेतैरुक्तगुणैर्भवितव्यमिति ज्ञापितम् । अन्ये तु वदन्ति एवं रथोपस्थ उपविष्टमर्जुनं भगवान् किमुक्तवानित्यपेक्षायां सञ्जय उवाच तमिति । परेतु अहिंसा परमो धर्मो भिक्षाशनं चेत्येवं बुद्ध्या युद्धनिवृत्तमर्जुनं श्रुत्वा स्वपुत्रराज्यमप्रच्युतं निश्चित्य हृष्टमनसो धृतराष्ट्रस्य हर्षनिमित्तां ततः किं वृत्तमित्याकाङ्क्षां निराचिकीर्षुः सञ्जयस्तं प्रत्युक्तवानित्याह वैशम्पायनः सञ्जय उवाचेत्याहुः । स मधुसूदनस्तमर्जुनमिदं सोपपत्तिकं वक्ष्यमाणं वाक्यं वक्तुं योग्यं वचनमुवाचेत्यन्वयः । तं कीदृशं तथा पूर्वोक्तप्रकारेण कृपया ममैत इति मोहनिमित्तेन स्नेहविशेषेणाविष्टं व्याप्तमर्जुनस्य कर्मत्वं कृपायाश्च कर्तृत्वं वदता तस्याः स्वभावसिद्धत्वं न त्वागन्तुकत्वमिति सूचितम् । अत एव विषीदन्तं स्वबन्धुवियोगाशङ्कानिमित्तश्चित्तव्याकुलीभावो विषादस्तं प्राप्तवन्तं मध्वादिदुष्टसूदनो भगवान्भीमादिद्वारा दुर्योधनादिदुष्टसूदनायोवाचैव नतूपेक्षितवानिति सूचनार्थं मधुसूदन इत्युक्तम् ॥ १ ॥

## श्रीभगवानुवाच ।

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।**
**अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ॥ २ ॥**

किं तद्वाक्यमिति तत्राह द्वाभ्यां श्रीभगवानिति । भगाः ऐश्वर्यधर्मयशः श्रीवैराग्यज्ञानरूपाः समग्राः नित्यं विद्यन्ते यत्र सः यद्वा भूतानामुत्पत्तिविनाशसम्पदा यद्विद्याऽविद्याविषयवेदनं यस्य स भगवानुवाचोक्तवानित्यर्थः । हे अर्जुन इदं स्वधर्माद्वैमुख्यमश्रुपातादिपूर्वकं कश्मलं शिष्टनिन्दितत्वेन मालिन्यं विषमे सङ्कटे समयेऽस्थानेऽनवसरे त्वा त्वां सर्वक्षत्रियश्रेष्ठं कुतो हेतोः समुपस्थितं सम्प्राप्तमत्यन्तमयुक्तं यतोऽनार्यैर्न आर्या अनार्याः दुष्टास्तैर्जुष्टं सेवितमत एव दृष्टादृष्टफलशून्यमित्याह विशेषणद्वयेन अस्वर्ग्यं स्वर्गानर्हं प्रत्यवायजनकत्वात् अकीर्त्तिकरं अयशस्करं च अतस्त्वया न सेव्यं तदिति भावः । परे तु किं मोक्षेच्छातः किं वा स्वर्गेच्छातः यद्वा कीर्तीच्छात इति कुतः शब्देनाक्षिप्यते । हेतुत्रयमपि निषेधति त्रिभिर्विशेषणैरनार्यजुष्टमित्यादिभिर्न आर्यैर्मुमुक्षुभिश्चित्तशुद्धिमिच्छद्भिर्जुष्टं सेवितं शुद्धिकरस्वधर्मविरोधित्वात् । नापि स्वर्गेच्छया सेव्यं स्वर्गहेतुधर्मविरोधि-

त्वात् । नापि कीर्त्तीच्छया सेव्यं शिष्टगर्हितत्वात् तथा च मोक्षस्वर्गकीर्त्ति-कामैर्वर्जनीयं तत्काम एव त्वं सेवसे इत्यहो अनुचितचेष्टितं तवेति भाव इत्याहुः ॥ २ ॥

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**

**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥**

एवं श्रुत्वाप्यधैर्येण व्याकुलमर्जुनं प्रति पुनराह क्लैब्यमिति । हे पार्थ क्लैब्यं कातर्यमधैर्यं मनोबलादिभ्रंशरूपं मा स्म गमः मागाः नैवाङ्गीकुर्वित्यर्थः । यत एतत् क्लैब्यं त्वयि प्रसिद्धप्रतापे साक्षान्महादेवेनापि सह कृतसंग्रामे नोपपद्यते युक्तं न भवति तर्हि किं कर्त्तव्यमिति चेत्तत्राह क्षुद्रमिति । हे परन्तप क्षुद्रं तुच्छत्वसम्पादकत्वात् क्षुद्रं सुनिरसनं वा हृदयस्य मनसो दौर्बल्यं भ्रमणादिरूपमधैर्यं निर्वीर्यत्वफलकं त्यक्त्वा विवेकेन निरस्य उत्तिष्ठ युद्धायोद्युक्तो भवेत्यर्थः । मत्पितृस्वसृपृथातनयत्वेन त्वं क्लैब्यायोग्य इति वा । परं शत्रुं तापयतीति तथाऽनेन शत्रुतापनेन स्वजनहितकर्तृत्वं ध्वन्यते । अन्ये तु इदं श्लोकद्वयमित्थं योजयन्ति तद्यथा । हे अर्जुन शुद्धस्वभाव शत्रुभिः शस्त्रैर्हन्तुं प्रवृत्तिसमये इदं कश्मलं एतान्न हन्तुमिच्छामीत्याद्युक्तलक्षणश्चित्तव्यामोहः कुतः कस्माद्धेतोस्त्वा त्वां समुपस्थितं कालदोषात्कर्मदोषाद्वा कस्मादयं भ्रमः शुद्धस्वभावस्य विवेकिनस्तव प्राप्त इत्यर्थः हे पार्थ अनार्यैरार्यशिक्षावर्जितैः पामरैः सेवितं स्वर्गाप्रापकं दुर्गतिकारणमिह लोकेऽप्यकीर्त्तिकरमिदं क्लैब्यं क्लीबभावं कातर्यं शूराणामनर्हं मा स्म गमः त्वं मा भजस्व राजधर्मज्ञे रणपण्डिते त्वयि वीरतमस्तुत्यस्य तव नैतद्युक्तमित्यर्थः । हे परन्तप शत्रुकर्शन निकृष्टत्वापादकं हृदयदौर्बल्यं मनःकालुष्यमधैर्यमेतत्त्यक्त्वा उत्तिष्ठ युद्धाय सन्नद्धो भवेति ॥ ३ ॥

**अर्जुन उवाच ।**

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।**

**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

नन्वहं न कातरत्वेन युद्धान्निवृत्तोऽस्मि किं तु युद्धस्याधर्मत्वेनान्याय्यत्वादित्यभिप्रेत्यार्जुन उवाच कथमिति । हे मधुसूदन भीष्मं पितामहं

द्रोणं च धनुर्विद्याचार्यं संख्ये रणे इषुभिर्बाणैः प्रतियोत्स्यामि प्रहरिष्यामि कथं न कथमपि यतस्तौ पूजार्हौ पूजायोग्यौ प्रतियोत्स्यामि इति वाचापि वक्तुमनुचितं तौ प्रति युद्धभूमौ शरैः प्राणत्यागफलकं प्रहरणं कथं करिष्यामीत्यर्थः। ननु तयोः पूज्यत्वेऽपि युद्धस्य क्षत्रियधर्मत्वेन विहितत्वात् कर्त्तव्यत्वमस्त्येवेति चेत् गुरुं हुंकृत्य तु कृत्येत्यादिना शब्दमात्रेणापि गुरुद्रोहस्यानिष्टफलत्वप्रदर्शनेन ताभ्यां सह संग्रामस्याधर्मत्वेन निषिद्धत्वात्तन्नास्त्येवेत्यवेहि। मधुसूदनेति संबोधनद्वयं त्वमपि दुष्टानेव तापयसीत्यतो गुरू अदुष्टौ च भीष्मद्रोणौ जहीति प्रेरयितुं नार्हसीति सूचनार्थं मधुसूदनपदेनोक्तार्थलाभेऽपि शोकव्याकुलत्वेन तद्विस्मृत्य पुनररिसूदनेत्युक्तम्॥ नन्वास्तां भ्रात्रादिवधशङ्कावकाशः श्रुतिगर्हितस्य ब्रह्मवधस्य का गतिरित्याशयेनाह कथमिति। भो मधुसूदन केवलं दैत्यनिर्वहण अहं संग्रामे भीष्मं द्रोणं च बाणैः कथं प्रतिपक्षत्वं युद्धं करिष्यामि। हे अरिसूदन भक्तकामादिशत्रुनाशन यतस्तौ आचार्यत्वेन पूज्यौ न तु ब्राह्मणमात्रत्वेनावस्थितौ अत्रार्थे श्रुतिरपि यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदिति। तथान्यापि श्रुतिरस्ति। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनं हिनस्ति स्वां स योनिमृच्छति स पापीयान्भवति यथा श्रेयांसं हिंसित्वेति। यस्मात्क्षत्रिय एव तद्यशो दधाति तस्मात् राजा क्षत्रियः। यद्यपि राजसूयादिनोत्कृष्टो भवति तथापि स्वधर्माचरणेनावसाने ब्राह्मणत्वमेव प्राप्नोति एवं सति उ इति विचार्य यः क्षत्रियः स्वीयं प्राप्तव्यस्थानमेनं ब्राह्मणं घातयति स स्वपितरं हिनस्ति अत एव स पापीयान्भवति किंवत् यथा महानुभावं हिंसित्वेति अत्यर्थः। एवं सति भीष्मद्रोणादीनां वधः कथं कर्त्तुं शक्यत इति भाव इत्यन्ये॥ ४॥

**गुरूनहत्वा हि महानुभान्।**
**श्रेयो भोक्तुं भैक्ष्यमपीह लोके॥**
**हत्वार्थकामांस्तु गुरूनिहैव।**
**भुञ्जीय भोगान् रुधिरप्रदिग्धान्॥ ५॥**

ननु युद्धाकरणे राज्यालाभे उपजीवनार्थं क्षत्रियस्य निषिद्धं भिक्षा-

टनं कर्त्तव्यं भविष्यतीत्याशङ्कामिष्टापत्त्या परिहरति गुरूनिति। हि यस्मात् गुरून्—

> प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा।
> देशभाषादिभिः शिष्यं बोधयेत्स गुरुः स्मृतः॥

इति स्मृत्युक्तान् शास्त्रोपदेष्टॄन् महान् अनुभावः प्रतापो येषां तान् भीष्मद्रोणादीन् यद्वा महानर्गलोऽनुभावो धर्मब्रह्मविषयको बोधो येषां तान् अन्यानपि तत्तुल्यान् जनकादीन् गुरून् हत्वा लोकद्वयविरुद्धं गुरुहननमकृत्वा, इह लोके भैक्ष्यं क्षत्रियस्य निषिद्धमपि भिक्षान्नं भोक्तुं श्रेयः प्रशस्यतरमुचितं गुरुहिंसावर्जनार्थस्य भिक्षाशनस्य प्रत्यवायाजनकत्वात्

> अकृत्वा परसन्तापमगत्वा खलमन्दिरम्।
> अक्लेशयित्वा चात्मानं यदल्पमपि तद्‌ बहु॥

इत्यादिशास्त्रप्रसिद्धिद्योतनार्थो हिशब्दः तथा चाल्पं तुच्छं निषिद्धमपि भिक्षाशनं गुर्वादिहिंसारहितत्वेनास्माकं श्रेयस्करं भविष्यतीत्यर्थ इत्यन्ये। गुर्वहनने नरकाभावमपकीर्त्यभावं च गुणमुक्त्वा तद्धनने दोषमाह हत्वेति। तु पुनर्महानुभवान् गुरून्हत्वार्थकामान्भोगान्। भुज्यन्ते भोगा विषयास्तान् इहैवास्मिन्नेव शरीरे भुञ्जीय भोक्ष्यामि नतु परत्र देवादिदेहे इहापि गुरूणां रुधिरेण प्रकर्षेण लिप्तानिवापकीर्त्तिव्याप्तत्वेनात्यन्तजुगुप्सितानित्यर्थः। यदीहाप्येवं कष्टं परलोके दुःखं कियद्वर्णनीयमिति भावः। यद्वा अर्थान् धर्मादिपुरुषार्थान् शिष्येभ्यः कामयन्ति बोधयन्तीत्यर्थकामाः तान् धर्माद्युपदेष्टॄन् गुरून्हत्वाहमिहैव लोके रक्तधाराप्रसिक्तान् रुधिरमयान् भोगान् विषयान्नारकीयान् भुञ्जीयानुभवेयं नतु नारकीय एव किं तु गुर्वादिवधे जुगुप्सो नरकभोगोऽत्रैव भविष्यत्यतो गुर्वादिहिंसाशून्यं भिक्षाशनं श्रेयस्करं मन्य इत्यर्थः। अपरे तु न त्वेषां गुरुत्वेऽपि युद्धगर्वेणावलिप्तानामन्यायराज्यग्रहणाशिष्यद्रोहाभ्यां कार्याकार्यविवेकशून्यानामुत्पथनिष्ठानां बध एव श्रेयान्।

> गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
> उत्पथं प्रतिपन्नस्य परित्यागो विधीयते॥

इति स्मृतेरित्याशङ्क्याह गुरूनिति। गुरूनहत्वा इह लोके तैर्हृतराज्यानां नो निषिद्धं भैक्ष्यमपि भोक्तुं श्रेयः नतु तद्वधेन राज्यमपि श्रेयस्तद्वधस्य परलोकविरोधित्वादिति धर्मेऽपि युद्धे वृत्तिमात्रफलत्वं मत्वा पाप-

मारोप्य ब्रूते नत्ववलिप्तत्वादिना तेषां गुरुत्वाभावेन तद्वधो न परलोकविरुद्ध इत्याशङ्क्याह महानुभावानिति महाननुभावः श्रुताध्ययनतपआचारादिनिबन्धनः प्रभावो येषां तान् तथा च कालकामादयोऽपि यैर्वशीकृतास्तेषां पुण्यातिशयशालिनां नावलिप्तत्वादिक्षुद्रपाप्मसंश्लेष इत्यर्थः। यद्वा हिमं जाड्यमपहन्तीति हिमहा रविरग्निर्वा तस्येवानुभावः सामर्थ्यं येषां तानित्यर्थः। तथा चातितेजस्वित्वात्ते-षामवलिप्तत्वादिदोषो नास्त्येव।

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्।
तेजीयसां न दोषाय वन्हेः सर्वभुजो यथेत्युक्तः॥

ननु पदार्थलुब्धाः सन्तो युद्धे प्रवृत्तास्तदेषां विक्रीतात्मनां कुतः पूर्वोक्तमाहात्म्यम्। अर्थस्य पुरुषोदास इत्यादिभीष्मोक्तेरित्याशङ्क्याह हत्वेति। तुशब्दोऽप्यर्थे अर्थोभिलाषस्तत्परानर्थकामान् अर्थलुब्धा अपि ते मदपेक्षया गुरवो भवन्त्येवेति पुनर्गुरुग्रहणेनोक्तं तथा च ईदृशानापि गुरून् हत्वा भोगानेव भोक्ष्यामि नतु मोक्षं लभे तद्वधस्य तद्विरुद्धत्वादित्यर्थः। अथवा गुरून्हत्वार्थकामात्मकान्भोगानेव भुञ्जीय नतु धर्ममोक्षावित्यर्थकामपदस्य भोगविशेषणत्वेन व्याख्येयमित्याहुः। अत्रार्थे श्रुतिरपि तस्माद्ब्राह्मणाय नावगुरेत न निहन्यान्न लोहितं कुर्यादेतावता हैनसा भवतीति यस्मान्निषिद्धमस्ति तस्माद् ब्राह्मणाय ब्राह्मणं नावगुरेत क्रोधाविर्भावेन नोद्गिरेत् तथा न निहन्यात् हस्तपादाद्यभिघातं न कुर्यात् तथा न लोहितं शस्त्रादिना रुधिराक्तं न कुर्यात् हि यतः कारणादेतावता दुष्कर्मणा एनसा पातकेन सम्पद्यत इत्यर्थः॥ ५॥

**नचैतद्विद्मः कतरन्नो गरीयो**
**यद्वा जयेम यदि वा नो जयेयुः।**
**यानेव हत्वा न जिजीविषाम**
**स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः॥ ६॥**

नन्वहननेन भिक्षानस्य श्रेयस्त्वे निश्चिते हननहेतोर्युद्धस्य चाधर्मत्वे निश्चिते किमर्थं शोचसीति चेत्तत्राह नचेति। च पुनर्वयम् एतदपि न विद्मो न निश्चयामो नोऽस्माकं भैक्ष्ययुद्धयोर्मध्ये कतरत् गरीयः किं श्रेष्ठं किं भैक्ष्यं श्रेष्ठं हिंसादुष्कीर्त्यादिदोषशून्यत्वादुत युद्धं स्वधर्मत्वादथवोभय

मपि सममित्यर्थः । किञ्चारब्धेऽपि युद्धे इदं न विद्मो यद्वा जयेम वयमेतान् जेष्यामः यदि वास्मानेते जयेयुः जेष्यन्तीति यद्वोभयोः साम्यं स्यादित्यपि न विद्मः इत्यर्थाद्बोध्यम् सत्यपि जये दोष इत्याह यानिति । यान्बन्धून्हत्वा न जिजीविषामो जीवितुमपि नेच्छामस्ते धार्तराष्ट्रा धृतराष्ट्रसबन्धिनो भीष्मद्रोणादयः सर्वेऽपि प्रमुखे सन्मुखेऽवस्थिता इत्यर्थः । तथा च जयपक्षेऽप्यस्माकं युद्धे प्रवृत्तिरनुचितमिति भावः भैक्ष्याद्युद्धस्य श्रेष्ठत्वं न सिध्यतीति वा । ननु ये युध्यन्ते प्रधनेषु शूरास्ते तनुत्यज इत्यादिश्रवणात् क्षत्रियाणां युद्धमेव श्रेयस्करं नतु भिक्षाशनमिति चेत्तत्राह न चेति । ननु जयस्य राज्यसुखहेतुत्वात्पराजयस्य स्वर्गप्रापकत्वात्तत्र संशयो न कर्त्तव्य इति चेत्तथापि सम्प्राप्तोऽप विजयोऽस्माकं दुःखायैव भवति नतु किञ्चिदपि सुखायेत्याह यानिति । प्राणेभ्योऽपि प्रेयसो यान् युधि हत्वा न जीवितुं शक्नुमस्त एव प्रमुखे रणमुखे म्रियामह इति तिष्ठन्त्यतोऽनर्थहेतोर्युद्धाद्भैक्ष्याशनमेव नः श्रेयस्करमिति भाव इत्यन्ये । अथ तेभ्योऽस्माकं जये पराजये वा मरणमेवावशिष्यत इत्यभिप्रेत्याह नचेति । जय पराजयव्यवस्था तु दैवाधीना तथापि यत् यदि वयं जयेम यदि वा तेऽस्मान् जयेयुः अनयोः पक्षयोर्मध्ये कतरद्गरीयः । किं श्रेष्ठं तन्न विजानीमः यतोऽस्माकं पराजये मरणमेवाशिष्टं नतु पलायनमित्यसन्दिग्धं तथाऽस्माकं जयपक्षे सर्वेषामाचार्याणां गोत्रिणां च बधो भवेत्तदनन्तरमस्माभिः किं जीवितव्यं परिशेषाल्लोकशास्त्रगर्हाभयान्मर्त्तव्यमेवावशिष्टमित्यभिप्रेत्याह यानिवेत्यपरे ॥ ६ ॥

**कार्पण्यदोषोपहतस्वभावः**
**पृच्छामि त्वां धर्मसंमूढचेताः ।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे-**
**शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥**

तदेवं पूर्वग्रन्थेन संसारदोषनिरूपणादधिकारिविशेषणानि निरूपितानि तथाहि नच श्रेयो नु पश्यामि हत्वा स्वजनमाहव इत्यत्रान्यच्छ्रेयोऽन्यदुतैव प्रिय इति श्रुत्युक्तं श्रेयो मोक्षाख्यमुपन्यस्तम् अर्थाच्च तदन्यदश्रेय इति नित्यानित्यवस्तुविवेको दर्शितः न काङ्क्षे विजयं कृष्णेत्यत्रैहिकफलविरागः अपि त्रैलोक्यराज्यस्येत्यत्र परलोकफलविरागः किन्नो राज्येनेत्यत्र शमः किं भोगैरिति दमः तन्मे क्षेमतरमित्यत्र तितिक्षा इति प्रथ-

माध्याये संन्यासस्साधनसूचनम्। अस्मिंस्त्वध्याये श्रेयो भोक्तुं भैक्ष्यमपीत्यत्र भिक्षाचर्योपलक्षितः संन्यासो दर्शितः सम्प्रतिगुरूपसत्तिनिरूप्यते विधिवदुपपन्नस्यैव ब्रह्मविद्योपदेशेऽधिकारात् तदेवं भीष्मादिवधसंकटवशादुत्थायाश्च भिक्षाचर्यं चरन्तीति श्रुत्युक्तभिक्षाचर्येऽर्जुनस्याभिलाषं प्रदर्श्य विधिवद्गुरूपसत्तिमपि तत्सङ्कटव्याजेनैव दर्शयति। कार्पण्येति। योऽत्यल्पामपि धनादिक्षतिं न सहते स कृपण इति लोके प्रसिद्धस्तादृशत्वादखिलोऽनात्मविदप्राप्तपरमपुरुषार्थतया कृपणो भवति। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपण इति श्रुतेः। तस्य भावः कार्पण्यं दैन्यम् अनात्माध्यासवत्त्वं तेनैते मदीयास्तेषु हतेषु किं जिवितेनेत्यभिनिवेशेन यो ममतारूपो दोषस्तेन दैन्यरूपेण वा दोषेणोपहतो दूषितः स्वभावोऽन्तःकरणं यस्य सः यतो धर्मसंमूढचेताः धारयतीति धर्मः सर्वाधिष्ठानं ब्रह्म तस्मिन्संमूढमविवेकितां प्राप्तं चेतो यस्य स तथा एवंविधः सन्नहं त्वा त्वां पृच्छामि। किं पृच्छासि तत्राह यच्छ्रेयः स्यान्निश्चितं यत् श्रुत्यादिना श्रेयस्त्वेन परमपुरुषार्थत्वेन निश्चितं स्यात्तन्मे मह्यं ब्रूहि कथय यद्वा निश्चितमैकान्तिकं साधनानन्तरमवश्यभाविनः पुनर्विनाशिनं तु रोगनिवृत्तिव्यभिचारिस्वर्गवद् व्यभिचार्यापेक्षिकं वा यथौषधेन रोगनिवृत्तिर्न जायते अपि जातापि पुनरपि रोगोत्पत्या विनाश्यते एवं यागे कृतेऽपि विघ्नवशात्स्वर्गो न जायते अपि जातोऽपि मत्सरादिना दुःखाक्रान्तो नश्यति चेति नैकान्तिकत्वं पुनर्विनाशशून्यत्वं वा तयोर्न त्वेवं स्यादिति भावः। ननु नापुत्रायाशिष्याय वै पुनरिति निषेधान्न वक्तव्यमिति चेन्नाहमशिष्यः किं तु शिष्यस्तेऽहमतो मां शिष्यं शासनार्हं त्वां प्रपन्नं शरणागतं च शाधि शिक्षय कृपया न त्वशिष्यत्वशङ्कयोपेक्षणीयोऽहमित्यर्थः एतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यादिश्रुत्युक्तगुरूपसत्तिर्दर्शिना एवं स्वबुद्ध्या भिक्षाशनं प्रसस्तं मन्यमानोऽपि दैन्यरूपेण दोषेणाभिभूतः स्वभावः शौर्यादिक्षत्रस्वभावो यस्य सः धर्मे स्वधर्मे संमूढमविवेकं प्राप्तं चेतो यस्य सः एवंविधः सन्नहं त्वां पृच्छामि यद्भैक्ष्यं युद्धं वा निश्चितमव्यभिचारि श्रेयः साधनं तन्मे ब्रूहीति धर्मतत्त्वविषयकोऽपि प्रश्नो बोध्यः। अन्ये तु कथं भवान्पण्डितः सन्नधर्मं धर्ममिवाधर्ममिव धर्मं च मन्यते मूढवदित्याकाङ्क्षायामहमेतद्वयं सूक्ष्मार्थं निर्णेतुं न शक्नोमि यत्कर्त्तव्यं तत्त्वमेवोपदिशेत्याह कार्पण्येति। अविद्याकृतदेहेन्द्रियाद्यनात्मनः स्वरूपामिदमेवाहमि-

ति यो मन्यते स कृपणस्तत्त्वज्ञः यो वा एतदक्षरमित्यादिश्रुत्या कृपणोऽजितेन्द्रिय इति स्मृत्या च प्रसिद्धस्तस्य भावः कार्पण्यमतत्त्वमज्ञानं तदेव तमः प्रधानत्वाद्वस्तुस्वरूपं दूषयत्यावृणोतीति दोषस्तेनोपहतस्तिरोहितः स्वस्य प्रत्यगात्मनो भावोऽविक्रियत्वादिरूपा सत्ता यस्य सोऽविद्या तिरस्कृतात्मस्वरूपो यस्माद्धर्मसंमूढचेताः अविद्यया संसारे पात्यमानः पुमान् धार्यतेऽनेनेति धर्मस्तत्त्वज्ञानं तस्मिन् ज्ञानात्मके धर्मे संमूढमप्रविष्टं चेतो यस्य स तथोक्त एवं लक्षणसंपन्नोऽहं त्वां परमेश्वरं पृच्छामि यत् श्रुतिस्मृतिभिर्महर्षिभिश्च निश्चितं निर्णीतं नियतफलं श्रेयःसाधनं सर्वशोकविध्वंसकं तन्मे ब्रूहि। ननु नापुत्रायेत्यादिश्रुतेः पुत्रशिष्यव्यतिरिक्तायातिरहस्यं न वक्तव्यमित्याशङ्क्याह शिष्य इति। धर्मज्ञानार्थितयाऽहं ते शिष्यभावं गतोऽस्मि त्वां जगद्गुरुं प्रपन्नं शरणागतं मुमुक्षुं मां शाध्यनुगृहाण शोकस्य निश्शेषनिवृत्तिर्यथाभवेत्तथा मां बोधयेत्यर्थ इत्याहुः। अथ व्याकुलचित्तः सन् श्रीकृष्णमेव पृच्छति कार्पण्येति। स्नेहानुबन्धिनां गोत्रिणां जीवरक्षणमेव कार्पण्यं तथा तद्वधे दोषो नरकपातादिरूपस्ताभ्यां तिरस्कृतः स्वभावश्चित्तं यस्य स तथा। अत एव धर्मसंमूढचेताः कार्पण्ये क्षात्रधर्मपरित्याग हिंसायां च श्रौतधर्मपरित्यागः एवमुभयथा धर्मविषये विमूढं चेतो यस्य सः इतः परमुभयधर्मसंरक्षणेन यच्छ्रेय उचितं स्यात्तन्मे निश्चितमसंदिग्धं यथा ब्रूहि यतोऽहं शिष्योऽतस्त्वां प्रपन्नं शरणागतं मां शिक्षय आचार्यवान् पुरुषो वेदेत्यादिश्रुतेरित्यर्थ इत्यपरे ॥ ७ ॥

**नहि प्रपश्यामि ममापनुद्या-**
**द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं**
**राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

ननु विजये प्राप्तभूराज्यस्य मरणे स्वधर्मबलात् प्राप्तदेवाधिपत्यस्य वा तवाज्ञाननिबन्धनशोकापनोदको यः कश्चित्सुलभो भविष्यति किं पर शिष्यत्वेनेति चेत्तत्राह नहीति। जयपक्षे भूमौ असपत्नं न विद्यते सपत्नःशत्रुर्यस्य तत् शत्रुरहितम्। ऋद्धं सस्यादिसंपन्नं राज्यमवाप्य प्राप्य चापरं मरणपक्षे सुराणामप्याधिपत्यं हिरण्यगर्भत्वपर्यन्तमैश्वर्यमवाप्य स्थितस्या-

पि मम यत्कर्म क्रियमाणं श्रेयो वा प्राप्तं सत् मन इन्द्रियाणामुच्छोषणं सर्वदा सन्तापकरं शोकमपनुद्यात् निवारयेत् तन्न पश्यामि हि यस्मात्तस्मात्त्वमेव मां शाधि शोकापनोदनाय शिक्षयेत्यर्थः। तद्यथेह कर्मजितो लोकः क्षीयते इत्यादिश्रुतेः यत्कृतकं तदनित्यमित्यनुमानात् प्रत्यक्षेणाप्यैहिकानां विनाशदर्शनाच्च नैहिक आमुत्रिको वा भोगः शोकनिवर्त्तकः किं तु सत्ताकाले पारतन्त्र्यादिना विनाशकाले च वियोगाच्छोकजनक एवेति तन्निवृत्तये युद्धं न कर्तव्यमिति भावः। एतेनापीहामुत्रभोगविरागो विद्याधिकारिविशेषणत्वेन दर्शितः मया ते किं वक्तव्यं त्वयैव पण्डितेन सूक्ष्मबुद्ध्या युक्त्या च यच्छ्रेयः साधनं तज्ज्ञातव्यमित्यत आह नहीति। इन्द्रियाणां देहेन्द्रियमनोबुद्धीनामत्यन्तसंतापकं मम शोकं यदपनुद्याद् द्रव्यगुणकर्मणां मध्ये विशिष्टं यत्प्राप्तं सन्मामकं दुःखं निवर्त्तयेत्तदहं न प्रपश्यामि तादृशं किञ्चिन्न जानामि ज्ञातश्चेत्कुतोऽयं शोक इति तदज्ञानप्रसिद्धिद्योतनार्थो हिशब्दः। ननु शत्रून्जित्वा राज्यं प्राप्य विशेषविषयभोगेन शोकस्त्यक्तुं शक्यत इत्यत आह अवाप्येति भूमौ निःशात्रवं समग्रं राज्यं सार्वभौमत्वं सुराणामाधिपत्यमिन्द्रत्वं ब्रह्मत्वं वा प्राप्याऽहं शोकं त्यक्तुं न शक्नुयां सार्वभौमत्वादीनां विनाशित्वेन शोकनिवर्त्तकत्वासम्भवादतो विवेकवतो विषयप्राप्तिस्तद्भोगश्च न शोकनिवर्त्तकौ भवतो विनैव ब्रह्मज्ञानं तच्च गुरूपदेशं विना न सिध्यति आचार्यवान् पुरुषो वेदेति श्रवणादतस्तदर्थिना गुरूपसत्तिः कर्त्तव्येति भाव इत्यन्ये ॥ ८ ॥

## सञ्जय उवाच।

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥**

जिताज्ञाननिद्रोऽपि शत्रुतापनोऽपि हृषीकेशनियमितसर्वेन्द्रियोऽर्जुनो ज्ञानं युद्धोपरतिं चाङ्गीकृत्य लोकोद्धारार्थं वेदार्थप्रकाशनाय वेदज्ञं गोविन्दमुक्त्वा तूष्णीं बभूवेत्यभिप्रेत्य तदनन्तरमर्जुनः किं कृतवानित्याकाङ्क्षायां सञ्जय उवाच एवमिति। गुडाकेशो जितनिद्रः परन्तपः शत्रुतापनोऽर्जुनः हृषीकेशं सर्वेन्द्रियप्रवर्त्तकं गां वेदलक्षणां वाणीं विन्दतीति गोविन्दं सर्ववेदोपादानत्वेन सर्वज्ञं भगवन्तमादौ एवं कथं भीष्ममहं संख्य इत्यादिना युद्धायोग्यतामुक्त्वा ततो न योत्स्ये न युद्धं करिष्यामीति युद्धफलाभावं

चोक्त्वा तूष्णीं बभूव। पूर्वं युद्धार्थं कृतबाह्येन्द्रियव्यापारान्निवृत्तो जात इत्यर्थः। स्वभावतो जितनिद्रे शत्रुतापने चार्जुने आगन्तुकमज्ञानं तदतापकत्वं च न स्थिरं भविष्यतीति द्योतनार्थं हशब्दः। स्वभावतो जिताज्ञाननिद्रे तल्लक्षणशत्रुतापने चार्जुने आगन्तुकमज्ञानं तदतापकत्वं च न स्थिरं भविष्यतीति वाह किलेति वार्थः हेति वाक्यालङ्कारे वा सर्वज्ञत्वसर्वशक्तित्वसूचकाभ्यां गोविन्दहृषीकेशपदाभ्यां भगवतोऽर्जुनमोहनिरसनं सुकरमिति सूचितं परन्तपः शत्रुतापनः नामैकदेशेन नामग्रहणं गुडो लगुडो दण्डस्तद्वद्दीर्घा आसमन्तात्समाश्च केशाः शिरोजा यस्य स गुडाकेशोऽर्जुनः गोविन्दं गोभिर्वेदान्तवाक्यैरेव विन्द्यते लभ्यते इति गोविन्दस्तं हृषीकेशं स्वजनहिंसाया अत्यन्तशोकहेतुत्वान्नाहं योत्स्ये युद्धं न करिष्यामीत्येवमुक्त्वा तूष्णीं बभूव ह न पुनः किञ्चिद्बभाष इत्यर्थ इत्यन्ये ॥ ९ ॥

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

एवमर्जुने युद्धान्निवृत्ते भगवान् किंकृतवानित्याकाङ्क्षायां स च नोपेक्षितवानित्याह तमिति। हे भारत हृषीकेशः सर्वान्तर्यामी भगवान्सेनयोरुभयोर्मध्ये युद्धोद्यमेनागत्य विषीदन्तं तद्विरोधिनं विषादं मोहं प्राप्तवन्तं तमर्जुनं प्रहसन्निव मदाज्ञावशवर्त्तिनि त्वय्यहं प्रसन्नोऽस्मीति प्रकटयन्निवेदं वक्ष्यमाणं वचनमुवाचोक्तवानित्यर्थः। यद्वा प्रहसन्निवानुचिताचरणं प्रकाशयन्निवेदमनुचिताचरणप्रकाशकं वचनमुक्तवान्नतूपेक्षितवानित्यर्थः। यदि हि युद्धारम्भात्प्रागेव युद्धमुपेक्षेत तदा नानुचितं कुर्यात् युद्धभूमावागत्य तदुपेक्षणमतीवानुचितमिति सूचनार्थं सेनयोरित्याद्युक्तं तत्प्रकाशनफलं तु विवेकोत्पत्तिद्वारेण द्विविधमोहनिरसनमेव एतच्चाशोच्यानित्यादौ स्पष्टं भविष्यतीत्यर्थः। यद्वा प्रहसन्निव प्रहासगर्भमिव वचनमुवाच। ननु विषादावसरे हासायुक्तत्वेऽपि कथमुक्तं प्रहसन्निवेति चेन्न विषादोत्पत्तेरकारणकत्वेन तदुक्तेर्युक्तत्वात् तद्यथा दीनानाथवध एव विषादोत्पत्तिर्दृश्यते प्रकृते तु भीष्मद्रोणकर्णादयः शौर्येण शक्रमप्यगणयन्तः क्षात्रधर्ममनुसृत्य प्रवृत्ताः नतु मूर्खत्वेनातस्तेषु कथं कृपापात्रत्वं तथा ते मद्बध्या एवेति कुतो ज्ञातं स्वभुजप्रतापविश्वासादुत सहायीभूतास्मत्प्रभावात्। नाद्यः अस्मान्प्रति स्वभुजप्रतापख्यापनस्यानौचित्यात् न द्वितीयः बधस्यास्मन्निमित्तकत्वेन

विषादानुत्पत्तेरित्याशयेनेषद्धास्यमुखीभूत्वा भगवान्प्रोवाचेति भावः । मूढोऽप्यमूढवद्वदतीति प्रहसन्निवेति वा त्वमपि भरतवंशोद्भवत्वाद्भगवद्वाक्यं सावधानतया श्रोतुमर्हसीति सूचयन्प्रज्ञाचक्षुषं संबोधयति भारतेति । तदाश्वासार्थं भरतान्वयेत्येवं संबोध्य भगवान् तमुवाचेत्यन्ये ॥ १० ॥

**श्रीभगवानुवाच ।**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

तदेवमर्जुनः स्वधर्मे युद्धे प्रवृत्तोऽपि गुर्वादिष्वहमेतेषां ममैते इत्येवं भ्रान्तिनिमित्तस्नेहनिमित्ताभ्यां शोकमोहाभ्यां मानसतापविवेकाभावरूपाभ्यामभिभूतविवेकविज्ञानस्तस्मान्निवृत्तः परधर्मे च भैक्ष्यं कर्तुं प्रवृत्तस्तथा च सर्वप्राणिनां शोकमोहाविष्टानां स्वधर्मपरित्यागः निषिद्धाचरणं च स्यात् । स्वधर्मप्रवृत्तानामपि तेषां फलाभिसंधिपूर्वकमेव साहंकारं तदनुष्ठानं भवति तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टसंप्राप्तिलक्षणः संसारो नोपशाम्येदतो धर्मसंमूढचेतसं महति शोकसागरे निमग्नं प्राणिजातमुद्दिधीर्षुः संसारबीजभूतयोः शोकमोहयोर्निष्कामकर्मानुष्ठानचित्तशुद्धिसंन्यासपूर्वकतत्त्वज्ञानादन्यतो निवृत्तिमपश्यन् उपायोपेयभूतं निष्ठाद्वयमुपदिदिक्षुर्भगवान्वासुदेवोऽर्जुनं निमित्तीकृत्याह अशोच्यानित्यादिना । यद्वा अर्जुनस्य स्वधर्मे युद्धे स्वतो जातापि प्रवृत्तिर्द्विविधेन मोहेन तन्निमित्तशोकेन च प्रतिबद्धेति द्विविधो मोहस्तस्य निवर्जनीयः तत्रात्मनि स्वप्रकाशपरमानन्दरूपे निःसंगे स्थूलाद्युपाधित्रयाविवेकेन मिथ्याभूतस्यापि संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभानरूप एको भ्रमोऽपरस्तु स्वधर्मे युद्धे हिंसादि बाहुल्येनाधर्मत्वप्रतिभानरूपस्तत्र प्रथमस्योपाधित्रयविवेकेन शुद्धात्मस्वरूपबोधो निवर्त्तकः द्वितीयस्य तु हिंसादिमत्त्वेऽपि युद्धस्य स्वधर्मत्वेनाधर्मत्वाभावबोधः शोकस्य तु कारणनिवृत्त्यैव निवृत्तेन साधनान्तरापेक्षेत्याभिप्रेत्य क्रमेण भ्रमद्वयमनुवदन्नाह अशोच्यानित्यादिना । न शोच्याः अशोच्या शोकायोग्याः भीष्मद्रोणादयःश्रुतिस्मृत्युक्ताविगीताचारवत्त्वात्परमार्थशुद्धचिन्मात्ररूपेण नित्यत्वाच्च तानशोच्यानन्वशोचोऽनुलक्ष्यीकृत्य शोचितवानसि एते म्रियन्ते मन्निमित्तमहमेतैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेत्येवमर्थकेन दृष्ट्वेमं स्वजनमित्यादिना अशोच्ये शोच्यभ्रमः पश्वादिसाधारणस्तवात्यन्तपण्डितस्यानु-

चित इत्यर्थः। तथा प्रज्ञावतां पण्डितानां वादान् किन्तु राज्येन उत्सन्नकुलधर्माणां कथं भीष्ममहमित्यादीनि वचनानि च भाषसे वदसि तथा चाधर्मे धर्मत्वभ्रान्तिर्धर्मे चाधर्मत्वभ्रान्तिस्तवात्यन्तपण्डितस्यानुचितेत्यर्थः। तदेतदशोच्येषु शोच्यत्वभ्रान्तिरधर्मे धर्मत्वभ्रान्तिर्धर्मे चाधर्मत्वभ्रान्तिश्चेत्येवंरूपं मौढ्यम् एतादृशवचनवक्तृत्वरूपं पाण्डित्यं च विरुद्धमात्मनि दर्शयासि उन्मत्त इवेत्यन्तमनुचितमिति भावः। ननु बन्धुवियोगे शोको नानुचितः वसिष्ठादिभिर्महद्भिरपि कृतत्वादित्याशङ्क्याह गतासूनिति। ये पण्डिताः विचारजन्यात्मतत्त्वज्ञानवन्तस्ते गतासून् गतप्राणान् मृतान् अगतासूनगतप्राणानमृतान्देहान्नानुशोचन्ति अहो कथमेते मृता क्व गताः किं करिष्यन्ति एते च जीवन्तो बन्धुवियोगे कथं जीविष्यन्तीति समाध्यवस्थायां तज्ज्ञानाभावात् व्युत्थानावस्थायां तज्ज्ञानेऽपि मिथ्यात्वनिश्चयादित्यर्थः। तथा चात्मस्वरूपाज्ञाननिबन्धनोऽशोच्ये शोच्यत्वभ्रमस्तत्स्वरूपज्ञानेन तदज्ञाने निवृत्ते कथमवतिष्ठेत कारणनिवृत्त्या कार्यनिवृत्तेरुचितत्वादिति भावः। वसिष्ठादीनां प्रारब्धप्राबल्यात्तथानुकरणं तच्छिष्टाचारतयान्येषामनुष्ठेयतामापादयति। शिष्टैर्धर्मबुद्ध्यानुष्ठीयमानस्यैवाचारत्वेनानुष्ठेयत्वादन्यथा निष्ठीवनादेरप्यनुष्ठानप्रसङ्गादिति बोध्यम्। यस्मादेवं तस्मात्त्वमपि पण्डितो भूत्वा शोकं मा कार्षीरित्यभिप्रायः। अन्ये तु यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे इति पृष्टो भगवान् शोचन्तं तं किमुक्तवानित्याकाङ्क्षायामाह तमिति। हे भारतोभयोः सेनयोर्मध्ये विषीदन्तं मदीया एते म्रियन्त इति शोचन्तमेतान्हत्वा तद्दोषेणाहं नरकं यास्यामीत्यात्मनिनिष्क्रिये निर्विकारे कर्तृत्वादिधर्मशून्य एवानाद्यविद्याऽनात्मतद्धर्मानध्यस्याहं कर्त्ता भोक्तेति विपरीतभावेन मुह्यन्तं च तमर्जुनं दृष्ट्वा परमकृपालुर्भगवान् तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिश्रुतिप्रसिद्धब्रह्मात्मैकत्वज्ञानेन विनायं द्वैतभ्रमप्रवर्त्तकभेदशास्त्रेण बोध्यमानो न भ्रममूलकं शोकसागरं तर्त्तुं शक्नोतीति मत्वा तत्त्वपदार्थशोधनपूर्वकं तज्ज्ञानमुपदिदिक्षुः सन्नादौ त्वम्पदार्थशोधनमवतारयितुं तदीयवृत्तं भवान्पण्डित इति मम बुद्धिरेवं वा तव पाण्डित्यमिति प्रहसन्निवेदं वचनमुक्तवानशोच्यानित्यादि। हेऽर्जुन भीष्मद्रोणादीन् शोकानर्हानेव त्वमन्वशोच एतानुद्दिश्य शोकं कृतवानसि। ननु स्वजनमरणे सर्वेषां शोको जायत एव कथमुच्यतेऽन्वशोचस्त्वमिति। कुतो म्रियमाणानामेतेषामशोच्यत्वमिति चेत्त्वमत्र प्रष्टव्यः किं भीष्मादिशब्दवा-

च्यार्थमुद्दिश्य शोच्यते उत तल्लक्ष्यार्थम्। तत्राद्ये भीष्मादिशब्दवाच्यार्थस्यासद्वृत्तत्वमवेक्ष्य शोच्यते किं वा तन्नाशमुद्दिश्य तत्र नाद्यः महानुभावा इति त्वयैव तन्महत्त्वप्रतिपादनेन सद्वृत्तत्वसूचनात् नापि द्वितीयः मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युनेति दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुर इति च शरीरस्य मृत्युग्रस्तत्वनश्वरत्वश्रवणात् सर्वदा म्रियमाणप्राणिसन्दर्शनाच्च प्रत्यक्षादिप्रमाणैरेव ध्रुवमृत्युकस्य देहादेः शोच्यत्वस्यासम्भवात्। नाप्याद्यद्वितीयः अजो नित्यः शाश्वत इति नित्यो नित्यानामिति च लक्ष्यार्थस्यात्मनो नित्यत्वश्रवणादात्माऽजत्वान्न जायते जननाभावान्न म्रियते मरणाभावान्नित्यो नित्यस्य च तदाप्तस्य शोच्यत्वानुपपत्तेर्न हि बुद्धिमतां नित्यः पदार्थः शोच्यो नाप्यनित्यश्च यत एवं वाच्यार्थस्य लक्ष्यार्थस्य च शोच्यत्वं न संभवति त्वं चाशोच्यानेव शोच्यत्वभ्रान्त्या मूढवदनुशोचसि नैतावन्मात्रमेव करोषि अपि तु प्रज्ञावादांश्च भाषसे सदसत्पदार्थस्वरूपं विविच्य ये प्रकर्षेण जानन्ति ते प्रज्ञाः पण्डिताः तेषां शास्त्रमभिव्याप्ता ये आवादास्तान्प्रज्ञावादान्कुलक्षये प्रणश्यन्तीति उत्सन्नकुलधर्माणामिति कथं भीष्ममहं संख्य इत्यादीनि प्रौढवचनान्यपि वदसि तथा च यदशोच्यशोचनं यच्च शास्त्रार्थप्रकटनं पाण्डित्यं तदेतद् द्वयं तेजस्तिमिरवत्परस्परविरुद्धं नैकत्र स्थातुमर्हत्यतो भवान्मूढ एव नतु पण्डित इति भावः। तर्ह्यत्रसमये पण्डिताः कथं वर्त्तन्ते इत्यत्राह गतासूनिति ये केवलमूढास्ते ममैते पुत्रादयो मृता इति गतासूनेवानुशोचन्ति नत्वगतासून् शास्त्रज्ञास्तु ममैते पुत्रादयो मूढा दुर्भगा दुर्वृत्ता जाता इत्यगतासूनेवानुशोचन्ति नतु गतासून् पण्डितास्तु गतासूनगतासूंश्च पुत्रादीन्नानुशोचन्ति गतासूनामप्युभयेषामविद्याकार्यत्वेन स्वप्नार्थवदसत्वादुभयत्र ब्रह्मैव पश्यन्ति ते एव हि पण्डिता ये त्वसत्त्यक्त्वा सदेव गृह्णन्ति सदा सर्वत्र ब्रह्मदर्शनं हि पाण्डित्यं ब्राह्मणः पाण्डित्यं निर्वद्येति श्रुतेः। अत उक्तलक्षणाभावात्त्वं मूढ एव नतु पण्डित इति भावः इत्याहुः ॥ ११ ॥

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

तदेव भीष्मादीनामशोच्यत्वे नित्यत्वमाचारवत्त्वं च हेतुरिति सूचितं तत्र द्वितीयस्य सिद्धत्वात्प्रकृतेऽनुपयुक्तत्वाच्चातः स्थूलशरीरादात्मानं

विवेकं तु प्रथममेव साधयति न त्विति तुशब्दो देहादिभ्यो व्यतिरेकं सूचयति यथा अहं परमेश्वरः इतः पूर्वं जातु कश्चिदपि नासमिति न अपित्वासमेव नित्यमेवाभूवम्। तथा त्वं नासीरिति न अपि त्वासीरेव। तथेमे नृपा नासन्निति न किन्त्वासन्नेव। एवमात्मा नित्यो भावत्वे सति प्रागभावशून्यत्वाद् व्यतिरेकेण घटवदिति नित्यत्वं दर्शितं तथा सर्वे वयम्। अहं त्वमिमे जनाधिपाश्चातो देहविनाशात्परमुत्तरकाले न भविष्याम इति न किं तु भविष्यध्वंसशून्यत्वाद्व्यतिरेकेण घटवत्परमते ध्वंसवद्वा तस्मादात्मनः कालत्रयेऽपि सत्यत्वेन नित्यत्वाद्देहवैलक्षण्यं सिद्धमिति भावः। स्वस्य मध्ये गणनमात्मैक्याभिप्रायं बहुवचनं देहविशिष्टात्मभेदपरं नतु परमार्थशुद्धात्मभेदपरमिति बोध्यम् एवं भीष्मादीनामशोच्यत्वप्रतिपादनेन भीष्मादिपदलक्ष्यार्थस्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वं च सूचितं तमिममर्थमजानन्तमर्जुनमालक्ष्य परमदयालुर्भगवान् लक्ष्यार्थस्यात्मनो नित्यत्वे त्वात्मा नित्यो भावत्वे सत्यजत्वादित्यजत्वं हेतुः शशविषाणादौ व्यभिचारवारणाय सत्यन्तं घटादौ तद्वारणायाजत्वादित्युक्तं तथा च यस्य कालत्रयेऽपि सत्त्वं न व्यभिचरति स भावो नित्यश्च यथा परमते आकाशादि यस्य व्यभिचरति नासौ भावो न नित्यश्च यथाप्रागभावादीत्यात्मनः कालत्रयेऽपि सत्ताप्रतिपादनद्वारा देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वं च पुनः सूचयितुं तत्त्वंपदार्थयोश्शोधनं शोधितयोरेकत्वं च त्वंपदार्थस्य निःशेषदुःखनिवृत्त्या नित्यानिरतिशयाखण्डानन्दावाप्तये तत्पदार्थस्यापि परोक्षत्वपरिच्छिन्नत्वनिवृत्त्या द्वितीयत्वाखण्डैकरसत्वसिद्धये च प्रतिपादयति नत्विति। अहं तत्पदार्थः परमात्मा सर्वज्ञः सर्वशक्तिः स्वतन्त्रः परमेश्वरः जातु कदाचिन्नासमिति न किन्तु सर्वदासमेवान्यथा सदभावे जगत्सृष्ट्याद्यसंभवः "यतो वा इमानि भूतानि जायन्ते यतो जातानि भुवनानि विश्वा स ईक्षत लोकान्नु सृजा इति। स इमां ल्लोकानसृजन्ते"त्यादिश्रुतिभिर्मत्त एव जगदुत्पत्तिश्रवणात्। "यथा येन जातानि जीवन्ति व्यक्ताव्यक्तं भरते विश्वमीशः स दधार पृथिवीं द्यामुतेमां भीषास्माद्वातः पवते इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ तस्मिंल्लोकाश्रिताः सर्वे" इत्यादिश्रुतिभिर्मत्त एव जगत्स्थितिप्रतिपादनात्। तथा "यत्प्रयन्त्यभिसंविशन्ति अक्षराद्विविधाः सोम्यभावाः प्रजायन्ते तत्रैवापि यन्ति यस्मिन्क्षेत्रे संहरत्येष देव"इत्यादिश्रुतिभिर्मत्त एव जगल्लयश्रवणाच्च। तथा च जगत्सृष्ट्यादेर्मदेककर्तृक-

त्वात्तदुत्पत्तिस्थितिलयादिष्वागच्छत्सु च सत्सु तदधिष्ठातृतया सदाहमासमेवेति निरुक्तश्रुतिबलात् त्रिष्वपि कालेषु मत्सद्भावो निश्चेतव्य इत्यर्थः। एतेन मेघतदागमस्थित्यादीनामाधारतया स्थितस्याकाशस्येव प्रपञ्चतदुत्पत्त्यादीनामधिष्ठानतया स्थितस्य तत्पदार्थस्य परमात्मनः स्वतो निष्कलत्वेन निष्क्रियत्वेन च प्रपञ्चतद्धर्मतत्कर्मलेशासंबन्धशून्यत्वं तद्भिन्नत्वं नित्यत्वं चास्तीति सूचितम्। ननु स्वतन्त्रस्य परमेश्वरस्य तव कालत्रयेऽपि सद्भावोऽस्तु मम तु परतन्त्रस्य मर्त्यस्य नित्यत्वं कथं स्यादित्याशङ्क्याह न त्वमिति। त्वं त्वंपदलक्ष्यार्थश्च जातु कदाचिन्नासीरिति न किन्त्वासीरेव अतीतानागतदेहोत्पत्त्यादिषु जाग्रदादिष्विव त्वमस्येव यथा जाग्रति तिष्ठत एव तव स्वप्नसंबन्धः स्वप्ने तिष्ठत एव सुषुप्तिसंबन्धः सुषुप्तौ तिष्ठत एव जाग्रत्संबन्धस्तथागतदेहेषु तिष्ठत एवैतद्देहसंबन्धः एतद्देहे तिष्ठत एव भाविदेहे संबन्धोऽङ्गीकर्त्तव्योऽन्यथा तु सुखदुःखादिवैचित्र्यासम्भवात्तथाहि कर्मवैचित्र्याद्देव तव सुखादिवैचित्र्यं ततस्तादृग्विधकर्मकर्तुस्तवास्त्येव देहान्तरेषु सद्भावोऽन्यथा तु कृतहानाकृताभ्यागमप्रसङ्गात्। जन्मान्तरकृतं कर्म भुञ्जते जन्तवोऽधुनेति यत्कर्म कुरुते तदभिसम्पद्यते" इत्यादिश्रुतिस्मृतिविरोधप्रसङ्गाच्च प्राप्यन्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति श्रवणात्पूर्वकृतस्याधुना अधुनाकृतस्य कर्मणः फलं भाविजन्मन्यनुभुज्यते यतस्ततो जाग्रदाद्यवस्थास्विव गतदेहेषु भाविदेहेष्वपि सुखादिफलहेतुकर्माधारतया इदानीमिव तव त्रिष्वपि कालेषु सद्भावोऽस्त्येवेत्यर्थः। एतेन त्वंपदार्थस्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वं चास्तीति सूचितं तथेमे जनाधिपाश्च नासन्निति न किन्तु त्वंपदार्थत्वाविशेषात् त्रिष्वपि कालेष्वासन्नेव यथाहं यथा त्वं तथैवैतेऽपि नित्यसिद्धसत्स्वभावा इत्यर्थः। जनाधिपा इति बहुवचनं विद्याकार्यान्तःकरणोपाधिभेदेन नत्वात्मभेदेन तद्भेदे प्रमाणाभावात्। नन्वात्मभेदे प्रमाणाभाव इति यदुक्तं तदयुक्तं तद्भेदबोधकप्रत्यक्षादिप्रमाणाविरोधात्। तथाहि यत्र यत्र प्रत्ययभेदस्तत्र तत्र वस्तुभेद इति व्याप्तेर्घटादौ दर्शनाद्यथा तद्भेदे प्रत्यक्षं मानं तथा प्रति देहमहं प्रत्ययभेदस्य प्रत्यक्षेणोपलभ्यमानत्वादेकत्वे तु त्वमहमयमित्यादिव्यवहारलोपप्रसङ्गाच्चात्मभेदे प्रत्यक्षं प्रमाणं तथात्मभेदाभावे व्यवहारो न सिद्ध्यतीति व्यवहारसिद्ध्यन्यथानुपपत्त्यात्मभेदसिद्धिरित्यर्थापत्तिश्चात्मभेदे मानम्। आत्मा प्रतिव्यक्तिभिन्नो व्यक्तीनां भिन्नत्वाद्गवादिवद्। आत्मा भिन्नः प्रतिव्यक्त्यहंप्रत्यभेदात व्यक्तिप्रत्ययभेदाच्च घटादिवदित्याद्यनुमानं च मानम्

अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरा इति देवादिभेदप्रतिपादकश्रुतिश्च मानं देवदानवगन्धर्वाः यक्षराक्षसकिन्नरा इत्यादिस्मृतिश्च मानम् । यद्यात्मा एक एव स्यात्तर्हि एकस्मिन् दुःखिनि सुखिनि च सर्वेऽपि दुःखिनः सुखिनश्च स्युः देवादिसर्वदेहेष्वात्मैकत्वे सर्वे सर्वज्ञाश्च स्युः विधिनिषेधशास्त्रानर्थक्यं च स्यात् एकस्मिन्बद्धे बद्धाः मुक्ते मुक्ताश्च सर्वे स्युः तस्मादात्मानेकत्वं सर्वं प्रमाणसिद्धं त्वयाप्यङ्गीकर्त्तव्यमिति चेन्न । यत्रयत्राहंप्रत्ययभेदस्तत्रतत्रात्मदेह इति व्याप्तिव्यभिचारात्प्रत्यत्यक्षासिद्धः । तथाहि शिशुः कुमारो युवा वृद्धोऽहमिति शैशवाद्यवस्थाभेदेनाहं प्रत्ययभेदेऽपि तत्तदवस्थावतोऽहं प्रत्ययविषयस्यात्मनो भेदादर्शनान्न प्रत्यक्षं तत्र मानम् । नहि कौमारे शिशुरहमिति प्रत्ययोऽस्ति तद्धेतुशैशवाभावादेवं युवत्वे कुमारोऽहं वृद्धत्वे च युवाहमिति प्रत्ययो न ह्यस्ति तदुत्पादकयुवत्वाद्यभावादतः स्पष्टमेव तत्राहंप्रत्ययभेदस्तथापि शैशवाद्यवस्थावतोऽहं प्रत्ययार्थस्यात्मनो भेदोनास्त्यतः प्रत्यक्षस्य न तत्र मानत्वम् । ननु विशेषणभेदाद्विशिष्टस्यापिभेद इति न्यायेनावस्थाभेदादवस्थावतोऽपि भेदः स्यादिति चेन्न तस्य शिशुत्वाद्यभिमान्यहङ्कारविषयत्वोपपत्त्या नित्यात्मविषयत्वानुपपत्तेरन्यथाबाल्यमारभ्य देहेन्द्रियकृतकार्यस्मरणसम्भवात् । स्मर्यते च "मया बाल्ये कृतं कन्दुकखेलनम्" इति नह्यात्मभेदे एतत्स्मरणं घटते अन्यकृते कर्मण्यन्यस्मृत्यदर्शनाद्यतो बाल्यमारभ्य वृद्धत्वावसानकं कृतकार्यं स्मर्यते अतः प्रत्ययभेदे न प्रत्ययविषयस्य भेद इति प्रत्यक्षमसिद्धम् । एवं व्यक्तिभेदादात्मनोऽपि भेद इत्यनुमानमपि न तत्र मानं स्थूलसूक्ष्मकारणदेहानां जाग्रत्स्वप्नदेहयोश्च भेदे सत्यप्यहंप्रत्ययविषयस्यात्मनो भेदाभावादनुमानासिद्धेः अदितिर्देवा इत्यादिश्रुतिस्त्वात्मोपाधिभेदमनुवदति । नत्वात्मभेदं साधयति सर्वत्र चैतन्यरूपस्यैकत्वादात्मभेदानुपपत्तेरतो देवगन्धर्वमनुष्यादिदेहाः सर्वे जाग्रत्स्वप्नादिदेहवदात्मनो भोगायतनान्येव नत्वात्मभेदद्योतकाः यथा स्थूलादिदेहैरेकस्यैवात्मनो भोगोऽभिधत्ते तथैव देवादिदेहैरप्यतो देवादिदेहा भोगायतनान्येव नत्वात्मभेदहेतवो यतस्तेषु रूपतेजःस्वभावादीनामेव भेदो नतु चेतनस्यात एवात्मविषयकोऽहमस्मीत्यहंप्रत्ययः सदैकरूपोऽतो व्यक्तिभेदप्रतिपादनपरैव श्रुतिर्नत्वात्मभेदप्रतिपादनपरेति सिद्धं तथैव पुराणवचनं च । नाप्यर्थापत्तिरात्मभेदे प्रमाणं यथैकस्मिन्नेव देहे शिरः करः पाद इत्यादिव्यवहारोऽवयवभेदमुपाश्रित्योपपद्यते तथात्मैकत्वे-

ऽपि त्वमहमयमित्यादिव्यवहारो व्यक्तिभेदविषयत्वेनोपपद्यते। नत्वात्मभेदमापेक्षते इत्येवं व्यवहारसिद्धावन्यथानुपपत्तेरसंभवात्। यत्त्वसत्यात्मभेदे सुखदुःखादिव्यवस्था न सिद्ध्यतीति तन्न तस्याः कर्मैकनिबन्धनत्वात्कर्मणां च तत्कर्तृतत्फलभोक्त्रहङ्कारविशिष्टात्मभेदेन भिन्नत्वात्तत्कार्यसुखदुःखादिवैचित्र्यस्यैकस्मिन्नेव देहे कर्मभेदेन सुखदुःखादिवैचित्र्यदर्शनवदात्मैकत्वेऽप्युपपन्नत्वेन सुखदुःखादिव्यवस्थोपपत्तेः। यत्कर्म कुरुते तदभिसम्पद्यते इति। यथाकारि यथाचारि तथा भवतीति श्रवणात्तस्मान्नात्मैकत्वे सुखादिसाङ्कर्यप्रसक्तिः नान्योऽतो विज्ञातेति श्रवणात्सत्यप्यात्मैकत्वे तदाभासानामनेकत्वेन कर्मकर्तृतत्फलभोक्तृणामनेकत्वोपपत्तेश्च यदप्युक्तमात्मैकत्वे सर्वेषामपि सर्वज्ञत्वं स्यादिति तदप्ययुक्तं तथा हि यद्यप्यात्मैव सदा सर्वत्र जानाति तथापि तत्तद्देहे तत्तद्बुद्धिमुपादाय स्वयं जानाति देहभेदाद्बुद्धिभेदस्य नियतत्वात् ज्ञानं तु प्रति देहं भिद्यते ज्ञानं नाम ज्ञायतेऽनेनेति व्युत्पत्त्या बुद्धिवृत्तिः सा च चक्षुरिव परिच्छिन्ना स्वसंबद्धवस्तुमात्रप्रकाशिनी तस्याः परिच्छिन्नत्वात्सर्वपदार्थैः संबन्धो न घटते यदि सर्वपदार्थैः सबन्धः स्यात्तदा सर्वे सर्वज्ञाः स्युस्तदभावान्न सर्वेषां सार्वज्ञं सिध्यति यथा विभोरप्याकाशस्य शब्दोत्पत्तिहेतोः सर्वत्र भेरिपणवादिभिः संयोगे सत्यपि यत्र भेर्यादिस्ताड्यते तत्रैव शब्दोत्पत्तिर्नतु सर्वत्र तथैकवात्मनो विभोरपि यत्र बुद्धिवृत्तेरर्थसंबन्धस्तत्रैव ज्ञानोत्पत्तिर्नान्यत्र ततो बुद्धिवृत्तीनामनेकत्वादव्यापकत्वाच्च न सर्वेषां सार्वज्ञप्रसक्तिरिति सिद्धम्। अत एव जीवानां सर्वज्ञत्वाभावात्किञ्चिज्ज्ञं प्रति प्रवृत्तिनिवृत्तिहेतुत्वाद्विधिनिषेधशास्त्राणां सार्थक्यमुपपद्यते अत एव च वेदान्तश्रवणादिजन्यज्ञानेन यः प्रत्यगभिन्नं परं ब्रह्म स्वात्मना विजानाति तस्यैव मुक्तिर्नेतरस्य तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामिति श्रवणात्। तस्मादात्मैकवादेनैवोक्तदोषाणामवसरः प्रत्युतात्मनामनेकत्वं पूर्णत्वं चाङ्गीकर्त्तुस्तव पक्षे एवोक्तदोषाः प्रसज्यन्ते तथा हि आत्मनामनेकत्वे विभुत्वे चाङ्गीकृते सत्यन्येषामन्योऽन्यमनोबुद्ध्यादिभिः संयोगस्य सम्भवात् तस्य चादृष्टादिद्वारा सुखादिहेतुत्वात्सुखदुःखबन्धमोक्षादीनां साङ्कर्यं प्रसज्यते नैकः एष एव दोषोऽपि तु विभुत्वद्यसिद्धिश्च। तथा हि यद्यद्वस्तु स्वेतरभेदवत्तत्तत्परिच्छिन्नमिति व्याप्तेर्घटादौ दर्शनादात्मनाप्यनेकत्वे सत्यन्योऽन्यसत्ताभिरन्योन्यभेदवत्वेन परिच्छिन्नत्वात् पूर्णत्वे न सिध्यति पूर्णत्वे त्वङ्गी-

क्रियमाणेऽनेकत्वं च न सिद्ध्यति पूर्णत्वानेकत्वयोः परस्परविरोधादात्मनां पूर्णत्वमनेकत्वं च ब्रह्मणापि निर्वोढुं न शक्यते । तस्माद् भवताप्यात्मैकत्वमेवाङ्गीकर्त्तव्यम् । किञ्च परिच्छिन्नाश्चिद् रूपाश्चानेके चात्मान इति यः पक्षः केषांचित्सोऽपि न सिद्ध्यति बहुश्रुतिस्मृतियुक्तिविरोधात् । तथाहि आकाशवत्सर्वगतश्च नित्यः एकस्तथा सर्वभूतान्तरात्मा एको देवः सर्वभूतेषु गूढः एकस्सन्बहुधा विचचार एक एव हि भूतात्मा निरपेक्ष एक एव साक्षी एकस्तेनेदं पूर्णं पुरुषेण सर्वमित्यादिश्रुतिभिर्नित्यः सर्वगतस्थाणुः नित्यः सर्वगतोऽप्यात्मा कूटस्थो दोषवर्जितः एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपत इत्यादिस्मृतिभिः आत्मा सर्वदेहेष्वेक एव पूर्णत्वाद् घटादिष्वाकाशवदात्मा एक एव निष्कलत्वात्सर्वप्रकाशकत्वात्सर्वसाक्षित्वात्सर्वत्राहंप्रत्ययार्थत्वाच्चेत्यादियुक्तिभिश्चात्मनः पूर्णत्वावधारणादेक एवात्मेति सिद्धान्तः यतोऽहं त्वं चेमे जनाधिपाश्च पूर्वोक्तरीत्या भूतभविष्यद्वर्त्तमानकालेषु क्वचिदपि न भविष्याम इति न किन्तु भविष्याम एव त्रिष्वपि कालेषु सत्तावन्त एवास्मस्ततोऽहं त्वं चेमे सर्वे वयं प्रपञ्चतदभिमान्यादिसर्वदृश्यकल्पनाधिष्ठानभूतं निष्फलं निष्क्रियं शान्तमनन्तं नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्दाद्वयं परब्रह्मैवास्मः भोक्ता भोज्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतत् ब्रह्मैवेदं सर्वमिति च श्रवणत्त्वां च मां चैतांश्च सर्वान्परं ब्रह्मैवेति विजानीहि इति भाव इत्यन्ये । ननु शोकः किं जीवनिमित्तको देहनिमित्तको वा नाद्यस्तेषां नित्यत्वात् । नापरः तेषां पुरोवर्तमानत्वादित्याभिप्रेत्याद्यं निरसन्नशोच्यत्वे हेतुमाह नत्विति यथाहमीश्वरो जातु कदाचित्स्वेच्छाधृतविग्रहस्याविर्भावे तिरोभावे वा पूर्वं नासमिति न किन्त्वासमेवानादित्वात् नच त्वं नासीः किन्त्वासीरेव इमे राजानो नासन्निति न किन्त्वासन्नेव मदंशत्वात् तथा अतः परमग्रे वयं सर्वे प्राङ्निरूपिता नैव भविष्याम इति न किन्तु भविष्याम एव । ननु जीवनिरूपणे गमनागमनरहितस्येश्वरस्याहमिति कथं प्रसङ्ग इति चेत्परमार्थतो विचार्यमाणे जीवोऽपि मदंशत्वान्नित्योऽनादिश्चेत्यभिप्रेत्येत्यवेहि । एवं ज्ञात्वा पण्डिता नानुशोचन्तीत्यर्थ इत्यपरे ॥ १२ ॥

एवं तत्त्वंपदार्थयोः श्रुतिस्मृतियुक्तिभिः शोधितयोर्द्वयोरेकत्वे प्रतिपादितेऽपि त्वंपदार्थस्यात्मनो विधातत्कार्यकोटिभिस्तिरोहितत्वादिति सूक्ष्मत्वाद्दुर्विज्ञेयत्वाच्च मन्दप्रज्ञस्य मुमुक्षोर्न यावदप्रतिबद्धा परोक्षज्ञानं तावदावृत्तिरसकृदुपदेशादिति न्यायेन पुनः पुनः त्वंपदार्थशोधनमेव सम्यक्

कर्तव्यमिति सूचयितुमुत्तरग्रन्थमारभ्यते तत्र पूर्वं त्वंपदार्थस्यात्मनः कालत्रयेऽपि सद्भावसाधनेऽप्येतद्देहनाशानन्तरं सत्ता न दृश्यते कथं तत्र सद्भाव इति शङ्कावन्तमर्जुनमालक्ष्य देहान्तरेऽप्यात्मनः सत्तां दृष्टान्तं प्रत्यक्षानुमानाभ्यामवबोधयितुमाह देहिन इति ।

**देहिनोऽस्मिन्यथादेहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

अस्मिन्देहे त्वविक्रियात्मनैवैकरूपेणाहमहामिति सर्वदातिष्ठत एव देहिनः देह एवात्मोपलम्भादात्मा देहीत्युच्यते। तस्य देहिनो देहोपाधिमत आत्मनः कौमारं कुमारस्येदं कौमारं वपुरिति शेषः यून इदं यौवनं वपुः जरा जरोपलक्षितं जीर्णं वपुश्च यथा येन प्रकारेण याति कौमारं जहतः सत एव यौवनं जहतः सत एव जीर्णं वपुरन्वागच्छति तथैवैतत्स्थूलं जहतः सत एव देहान्तरमन्योदेहश्चायात्यविनश्यत एवात्मनः जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति श्रुतेः किंच जाग्रत्स्वप्नदेहयोः सुषुप्तौ नाशे सत्यात्मसद्भावो न ज्ञायते तथापि सुषुप्तोत्थितः स्वयं योऽहं स्वप्नमद्राक्षं यश्च सुखमस्वाप्सं सोऽहमीदानीं जागर्मीति स्वप्रत्यभिज्ञाबलेन जाग्रत्स्वप्नसुषुप्तिष्वात्मनः सत्वं नित्यत्वं च यथा जानाति तथैतद्देहनाशानन्तरमप्यात्मनस्सत्वं नित्यत्वं च विज्ञाय धीरो विद्वान्नात्मतत्वज्ञस्य आत्मनो नित्यात्वविषये न मुह्यति बालो गतजन्मन्यन्नाद्याहारवाम्भवितुमर्हति इदानीं स्वयमुपदेशमन्तरेणैवस्तन्याहारेप्रवृत्तात्वाद्यन्नैवं तन्नैवं यथा प्रतिमादि आत्मा देहान्तरेष्वागच्छत्सु तिष्ठति नित्यत्वाद्यथा च कौमारादिदेहेषु प्राप्तेषु सत्सु तिष्ठति तथेत्युक्तप्रत्यक्षश्रत्यनुमानैरात्मनो जन्मान्तरेषु सद्भावो विज्ञायते तेन हेतुना नित्यत्वमेव निश्चित्यात्मास्ति वा नवेति पण्डितो न भ्रमतीत्यर्थ इत्येके। एवं शोकस्य जीवनिमित्तकत्वं निरस्य देहनिमित्तकत्वंनिवारयेति देहिन इति देहिनो देहाभिमानिनो जीवस्य कौमारयौवनजरारूपावस्थात्रयस्यानुभवो दृष्टः यथाहं कौमारदशायां नग्नो बालिशेषु क्रीडितवान् स एवाहं यौवने सभ्य वमुपागतोऽस्मि पुनः स एवाहं सम्प्रति दन्ताद्युपप्लवने स्थविरत्वे प्राप्तोऽस्मीति प्रत्ययोऽस्ति यथा च तस्य पूर्वावस्थातिक्रमे उत्तरावस्थाप्राप्तौ न पित्रादीनां शोको भवति तथैव देहान्तरप्राप्तावशिक्षितस्यापि बालस्य पूर्वावस्थातिक्रमे उत्तरावस्थाप्राप्तौ न पित्रादीनां शोकोभवति तथैव देहान्तरप्राप्तावशिक्षितस्यापि बालस्य पूर्वं संस्कारवत्वात् स्तनग्रहणरोदनादिषु

प्रवृत्तिदर्शनाद्गतवर्त्तमानानागतसर्वदेहेषु सद्भावेन नित्यत्वमेवेत्येवमनुभूय धीरस्तत्र विषये न मुह्यतीत्यर्थ इत्यपरे । ननु जातो देवदत्तो मृतो देवदत्त इति जन्मविनासप्रतीतेरात्मनः कथं जन्मविनासशून्यत्वेन नित्यत्वं कथं वा स्थूलो गौरोऽहं गच्छामि चेत्यादिप्रत्यक्षविरोधाद्देहवैलक्षण्यमित्याशङ्क्य सदृष्टान्तेनोभयं साधयति देहिन इति । देहाः सर्वे भूतभविष्यद्वर्त्तमाना अस्य सन्तीति देही तस्य देहिनः एकस्यैव सतोऽस्मिन् वर्त्तमाने देहे शरीरे यथा येन प्रकारेण कौमारं बाल्यावस्था यौवनं मध्यमावस्था जरा जीर्णावस्थेत्यवस्थात्रयं परस्परविरुद्धदेहनिबन्धनमेव न तु स्वतः तद्भेदेऽप्यात्मभेदाभावाद् । अन्यथा पुरा वाहं बाल्ये पितरावन्वभूवं स एवाहं वार्द्धके प्रणप्तृननुभवामि इत्यैक्यप्रत्यभिज्ञाविरोधात् अन्यनिष्ठसंस्कारस्यान्यत्रानुसन्धानाजनकत्वाच्च । किञ्च यदि देह एवात्मा भवेत्तदा कौमारादिभेदेन देहे भिद्यमाने प्रतिसन्धानं न स्यात् स्थूलोऽहमित्यादिप्रतीतिस्तु तत्तादात्म्याध्यासनिबन्धनत्वादिदं रजतमित्यादिवद्भ्रान्तिरेवेति द्रष्टव्यम् ।

तथा तेनैव प्रकारेण वर्त्तमानदेहादन्यो देहो देहान्तरं तस्य प्राप्तिर्जन्मविनासरहितस्यैवात्मनो लिङ्गदेहनिबन्धना भवति न तु तावतात्मनो भेदः संभवति जातमात्रस्य हर्षशोकभयादिसम्प्रतिपत्तेस्तस्याश्चेष्टानिष्टज्ञानं विनासम्भवात्तस्य च जन्मान्तरसंस्कारं विनाऽनिर्वाहाज्जन्मान्तरसंस्कारस्य चात्मभेदे असम्भवादेवमात्मभेदपक्षे स्तन्यपानादौ प्रवृत्तिरपि न स्यात्तस्या-पीष्टसाधनताज्ञानजन्यत्वात्तस्य च जन्मान्तरसंस्कारं विनोत्पत्तेरसम्भवात् । तथा च पूर्वपरदेहयोरात्मैक्यसिद्धिः अन्यथा कृतनासाकृताभ्यागमप्रसङ्गोऽपि स्यात् । तस्मादुत्पत्तिविनासप्रतीतेर्देहनिबन्धनत्वादात्मनो नित्यत्वं देहभेदेऽपि भेदाभावात्तद्वैलक्षण्यं च सिद्धमिति भाव इत्यन्ये ॥ १३ ॥

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनो नित्यं तांस्तितिक्षस्व भारत ॥ १४ ॥**

नन्वात्मनः श्रुत्यादिप्रमितिनित्यत्वेन तदुत्पत्तिविनाशप्रयुक्तशोकमोहाभावेऽपि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहः सुखवियोगदुःखसंयोगनिमित्तश्च शोको दृश्यते इत्येतौ नानुचितावित्यर्जुनाभिप्रायमाशङ्क्य लिङ्गशरीरादात्मनो विवेकायाह मात्रा इति । मीयन्ते ज्ञायन्ते आभिर्विष-

याः शब्दादय इति मात्रा श्रोत्रादीन्द्रियाणि तासां स्पर्शाः शब्दादिभिः संबन्धाः तद्विषयाकारान्तःकरणपरिणामो वा। यद्वा स्पृशन्ते इति स्पर्शाः शब्दादिविषयाः मात्राश्चस्पर्शाश्च मात्रास्पर्शास्ते शीतोष्णसुखदुःखदाः शीतम् उष्णं च दत्वा सुखं दुःखं च प्रयच्छन्त्यर्थाज्जीवात्मनो नतु शुद्धात्मनस्तस्य निर्गुणत्वान्निर्विकारत्वाच्च ननु शितोष्णप्रदत्वे सुखदुःखप्रदत्वस्य सिद्धत्वात्किमिति शीतोष्णयोः सुखदुःखाभ्यां पृथग्ग्रहणं किमिति च विषयेभ्यः पृथक्कथनमिति चेत् शीतं कदाचित्सुखं कदाचिद्दुखं तथोष्णमप्यनियतरूपं सुखदुःखे तु नियतरूपेऽतस्ताभ्यां शीतोष्णयोः पृथक्कथनं तु तदन्तरभूतयोरेव तयोः सुखदुःखहेत्वोरानुकूल्यप्रातिकूल्ययोरुपलक्षणार्थम्। अध्यात्मं ही शीतमुष्णं वानुकूल प्रतिकूलं वा सम्पाद्य बाह्या विषयाः सुखादि जनयन्तीत्यवेहि। ननु विषयेन्द्रियसबन्धस्यात्मनि सदा सत्त्वात्तत्प्रयुक्तशीतादेरपि तथात्वात्तन्निमित्तौ हर्षविषादौ तथैव तस्मिन्नापन्नावित्याशङ्क्याह आगमायायिन उत्पत्तिविनाशशीला अत एवानित्या अस्थिराः अतस्तान् तु जन्यान् शीतोष्णादीन् तितिक्षस्व प्रसहस्व तेषु हर्षविषादं मा कार्षीरित्यर्थः। कौन्तेय भारतेति संबोधनाभ्यामुभयकुलशुद्धस्यैव विद्याधिकारित्वमिति सूचितम्।

अत्र भगवता तितिक्षुः समाहितो भूत्वेति श्रुत्युक्तं तितिक्षुत्वमधिकारिशेषणमुपदिष्टमिति ज्ञेयम्। अन्ये तु यद्यपि प्रत्यक्षानुमानश्रुतिस्मृतिभिस्त्वंपदलक्ष्यार्थ आत्मा नित्य एवेति विजानामि तथापि भीष्मादिशब्दवाच्यार्थानां देहेन्द्रियादीनां म्रियमाणानां वियोगजं दुःखं म सोढुं शक्यते इत्याशयवन्तमर्जुनमालक्ष्य ब्रह्मविद्भिरनात्मविषयकसुखदुःखाद्यनुसंधानं न कर्त्तव्यं किं तु देहान्तरानुत्पत्तये प्रारब्धबलात्प्राप्तमप्याध्यात्मिकादि त्रिविधं दुःखं सोढ्वा तीव्रमुमुक्षया सदा ब्रह्मानुसंधानमेव कर्त्तव्यमित्याभिप्रेत्याह मात्रेति। चक्षुरादिज्ञानेन्द्रियैः सामान्येन मीयन्ते ज्ञायन्त इति मात्राः ज्ञानकर्मोभयेन्द्रियैः स्पृश्यन्ते ग्राह्यन्त इति स्पर्शाः शब्दादिभोग्यपदार्थाः स्वयं शीतोष्णसुखदुःखदाः शीतोष्णवत्सुखदुःखदाः शीतोष्णावनुकूलौ प्रतिकूलौ च सन्तौ यथासुखं दुःखं च दँदँते तथैव शब्दादयोप्यनुकूलाः प्रातिकूलाश्च सन्तः सुखं दुःखं च ददते इत्यर्थः यद्वा शब्दादयोऽनुकूलं प्रतिकूलं वा शीतमुष्णं वा वाप्यध्यात्ममुत्पाद्य तद्द्वारा साक्षाद्वा सुखं दुःखं च ददत इत्यर्थः। ननु विषयेन्द्रियसंयोगस्य नित्यत्वात्तन्निमित्तकसुखदुःखयोरपि नित्यत्वे सत्यात्मविदस्तदनुसंबन्धवर्जितं ब्रह्मानुसंधानं

पुरोहिता ऊचुः ।

दीर्घायुरप्रतिहतो बलवीर्यसमन्वितः ।
पुत्र पुत्र धनैश्वर्यैर्युक्तो वत्स भवोत्तमः ॥

पराशर उवाच ।

इत्युक्तास्ते ततो गत्वा यथा वृत्तं पुरोहिताः ।
दैत्यराजाय सकलमाचख्युर्वै महामुने ॥
हिरण्यकशिपुः श्रुत्वा तां कृत्यां वितथीकृताम् ।
आहूय पुत्रं पप्रच्छ प्रभावस्यास्य कारणम् ॥

हिरण्यकशिपुरुवाच ।

प्रह्लाद सुप्रभावोऽसि किमेतत् ते विचेष्टितम् ।
एतन्मन्त्रादिजनितमुताहो सहजं तव ॥

पराशर उवाच ।

एवं पृष्टस्तदा पित्रा प्रह्लादोऽसुरबालकः ।
प्रणिपत्य पितुः पादाविदं वचनमब्रवीत् ॥
न मन्त्रादिकृतस्तात न च नैसर्गिको मम ।
प्रभाव एष सामान्यो यस्य यस्याच्युतो हृदि ॥
अन्येषां यो न पापानि चिन्तयेदात्मनो यथा ।
तस्य पापागमस्तात हेत्वभावान्न विद्यते ॥
कर्मणा मनसा वाचा परपीडां करोति यः ।
तद्बीजं तस्य फलति प्रभूतं तस्य वाऽशुभम् ॥
सोऽहं न पापमिच्छामि न करोमि वदामि न ।
चिन्तयन् सर्वभूतस्थमात्मन्यपि च केशवम् ॥
शारीरं मानसं दुःखं दैवं भूतं भवत् तथा ।
सर्वत्र शुभचित्तस्य तस्य मे जायते कुतः ॥

एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।
कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम् ॥

पराशर उवाच ।

इति श्रुत्वा स दैत्येन्द्रः प्रासादशिखरस्थितः ।
क्रोधान्धकारितमुखः प्राह दैत्येन्द्रकिङ्करान् ॥

हिरण्यकशिपुरुवाच ।

दुरात्मा क्षिप्यतामस्मात् प्रासादाच्छतयोजनात् ।
गिरिपृष्ठे पतत्वस्मिन् छिन्नभिन्नाङ्गसन्ततिः ॥

पराशर उवाच ।

ततस्तं चिक्षिपुः सर्वे बालं दैतेयकिङ्कराः ।
पपात सोऽप्यधः क्षिप्तो हृदयेनोद्वहन् हरिम् ॥
पतमानं जगद्धात्री जगद्धातरि केशवे ।
भक्तियुक्तं दधारैनमुपसङ्गम्य मेदिनी ॥
ततो विलोक्य तं स्वस्थमविशीर्णास्थिपञ्जरम् ।
हिरण्यकशिपुः प्राह शम्बरं मायिनां वरम् ॥
नास्माभिः शक्यते हन्तुमयं दुर्वृत्तबालकः ।
जायं वेत्ति भवांस्तस्मान्माययैनं निषूदय ॥

शम्बर उवाच ।

सूदयाम्येष दैत्येन्द्र पश्य मायाबलं मम ।
सहस्रमात्रं मायानां पश्य कोटीशतं तथा ॥

पराशर उवाच ।

ततः स सृजते मायाः प्रह्लादे शम्बरः सुते ।
विनाशमिच्छन् दुर्बुद्धिः सर्वत्र समदर्शिनि ॥
समाहितमना भूत्वा शम्बरोऽपि विमत्सरः ।

मैत्रेय सोऽपि प्रह्लादः सस्मार मधुसूदनम्॥
ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम्।
आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम्॥
तेन मायासहस्रं तु शम्बरस्याशुगामिना।
बालस्य रक्षता देहमेकैकं तेन सूदितम्॥
सन्तोषकं ततो वायुं दैत्येन्द्र इदमब्रवीत्।
शीघ्रमेष समादेशात् दुरात्मा नीयतां क्षयम्॥
तथेत्युक्तस्ततोऽप्येनं विवेश पवनो लघु।
शीतोऽतिरूक्षः शोषाय तद्देहस्यातिदुःसहः॥
तेनाविष्टमथात्मानं स बुद्ध्वा दैत्यबालकः।
हृदयेन महात्मानं दधार धरणीधरम्॥
हृदयस्थस्ततस्तस्य तं वायुमतिशोषणम्।
पपौ जनार्दनः क्रुद्धः स ययौ पवनः क्षयम्॥
क्षीणासु सर्वमायासु पवने संक्षयं गते।
जगाम सोऽपि भवनं गुरोरेव महामतिः॥
अहन्यहन्यथाचार्यो नीतिं राज्यफलप्रदाम्।
ग्राहयामास तं बालं राज्ञामुशनसा कृताम्॥
गृहीतनीतिशास्त्रं तं विनीतं स यदा गुरुः।
मेने तदैनं तत्पित्रे कथयामास शिक्षितम्॥

आचार्य उवाच।

गृहीतनीतिशास्त्रस्ते पुत्रो दैत्यपते कृतः।
प्रह्लादस्तत्त्वतो वेत्ति भार्गवेण यथेरितम्॥

हिरण्यकशिपुरुवाच।

मित्रेषु वर्तेत कथमरिवर्गेषु भूपतिः।

प्रह्लाद त्रिषु लोकेषु मध्यस्थेषु कथं चरेत्॥
कथं मन्त्रिषु सर्वेषु बाह्येष्वाभ्यन्तरेषु च।
चरेषु चौरवर्गेषु शङ्कितेष्वितरेषु च॥
कृत्याकृत्यविधानं च दुर्गाटविकसाधनम्
प्रह्लाद कथ्यतां सम्यक् तथा कण्टकशोधनम्॥
एतच्चान्यच्च सकलमधीतं भवता यथा।
तथा मे कथ्यतां ज्ञातुं तवेच्छामि मनोगतम्॥

पराशर उवाच।

प्रणिपत्य ततः पादौ पितुः प्रश्रयभूषणः।
प्रह्लादः प्राह दैत्येन्द्रं कृताञ्जलिपुटः स्थितः॥

प्रह्लाद उवाच।

ममोपदिष्टं सकलं गुरुणा नात्र संशयः।
गृहीतं च मया किन्तु न सदेतन्मतं मम॥
साम चोपप्रदानं च भेददण्डौ तथा परे।
उपायाः कथिता ह्येते मित्रादीनां तु साधने॥
तानेवाहं न पश्यामि मित्रादींस्तात मा क्रुधः।
साध्याभावे महाबाहो साधनैः किं प्रयोजनम्॥
सर्वभूतात्मके तात जगन्नाथे जगन्मये।
परमात्मनि गोविन्दे मित्रामित्रकथा कुतः॥
त्वय्यस्ति भगवान् विष्णुर्मयि चान्यत्र चास्ति सः।
यतस्ततोऽयं मित्रं मे शत्रुश्चेति पृथक् कुतः॥
तदेभिरलमत्यर्थं दुष्टारम्भोक्तिविस्तरैः।
अविद्यान्तर्गतैर्यत्नः कर्तव्यस्तात शोभने॥
विद्याबुद्धिरविद्यायामज्ञानात् तात जायते।

बालोऽग्निं किं न खद्योतमसुरेश्वर जायते ॥
तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म सा विद्या शिल्पनैपुणम् ॥
तदेतदवगम्याहमसारं सारमुत्तमम् ।
निशामय महाभाग प्रणिपत्य ब्रवीमि यत् ॥
न चिन्तयति को राज्यं को धनं नाभिवाञ्छति ।
तथापि भाव्यमेवैतदुभयं प्राप्यते नरैः ॥
सर्व एव महाभाग महत्त्वं प्रति कोद्यमः ।
तथापि पुंसां भाग्यानि नोद्यमा भूतिहेतवः ॥
जडानामविवेकानामशूराणामपि प्रभो ।
भाग्यभोज्यानि राज्यानि सन्त्यनीतिमतामपि ॥
तस्मात् यतेत पुण्येषु यदीच्छेन्महतीं श्रियम् ।
यतितव्यं समत्वेन निर्वाणमपि चेच्छता ॥
देवा मनुष्याः पशवः पक्षिवृक्षसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिवास्थितम् ॥
एतत् विजानता सर्वं जगत् स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ॥
एवं ज्ञाते स भगवाननादिः पुरुषोत्तमः ।
प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंचयः ॥

पराशर उवाच ।

एतत् श्रुत्वा तु कोपेन समुत्थाय वरासनात् ।
हिरण्यकशिपुः पुत्रं पदा वक्षस्यताडयत् ॥
उवाच च स कोपेन सामर्षः प्रज्वलन्निव ।
निष्पिष्य पाणिना पाणिं हन्तुकामो जगद्यथा ॥

हिरण्यकशिपुरुवाच ।

हे विप्रचित् ते हे राहो हेऽचलेऽत्र महार्णवे ।
नागपाशैर्दृढैर्बध्वा क्षिप्यतां मा विलम्ब्यताम् ॥
अन्यथा सकला लोकास्तथा दैतेयदानवाः
अनुयास्यन्ति मूढस्य मतमस्य दुरात्मनः ॥
बहुशो वारितोऽस्माभिरयं पापस्तथापरैः ।
स्तुतिं करोति दुष्टानां वध एवोपकारकः ॥

पराशर उवाच ।

ततस्ते सत्वरा दैत्या बध्वा तं नागबन्धनैः ।
भर्तुराज्ञां पुरस्कृत्य चिक्षिपुर्लवणार्णवे ॥
ततश्चचाल चलता प्रह्लादेन महार्णवः ।
उद्वेलोऽभूत् परं क्षोभमुपेत्य च समन्ततः ॥
भूर्लोकमखिलं दृष्ट्वा प्लाव्यमानं महाम्भसा ।
हिरण्यकशिपुर्दैत्यानिदमाह महामते ॥

हिरण्यकशिपुरुवाच ।

दैतेयाः सकलैः शैलैरत्रैव वरुणालये ।
निश्छिद्रैः सर्वतः सर्वैश्चीयतामेष दुर्मतिः ॥
नाग्निर्दहति नैवायं शस्त्रैश्छिन्नो न चोरगैः ।
क्षयं नीतो न वातेन न विषेण न कृत्यया ॥
न मायाभिर्न वै चोच्चैः पातितो न च दिग्गजैः ।
बालोऽतिदुष्टचित्तोऽयं नानेनार्थोऽस्ति जीवता ॥
तदेष तोयमध्ये तु समाक्रान्तो महीधरैः ।
तिष्ठत्वब्दसहस्रान्तं प्राणान् हास्यति दुर्मतिः ।

त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च याजकाः।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्॥
रूपं महत्तेऽच्युत यत्र विश्वं ततश्च सूक्ष्मं जगदेतदीश।
रूपाणि सूक्ष्माणि च भूतभेदास्ते स्वन्तरात्माख्यमतीव सूक्ष्मम्॥
तस्माच्च सूक्ष्मादिविशेषणानामगोचरे यत् परमार्थरूपम्।
किमप्यचिन्त्यं तव रूपमस्ति तस्मै नमस्ते पुरुषोत्तमाय॥
सर्वभूतेषु सर्वात्मन् या शक्तिरपरा तव।
गुणाश्रया नमस्तस्मै शाश्वताय सुरेश्वर॥
यातीतगोचरा वाचां मनसां चाविशेषणा।
ज्ञानज्ञानिपरिच्छेद्या तां वन्दे चेश्वरीं पराम्॥
ॐ नमो वासुदेवाय तस्मै भगवते सदा।
व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः॥
नमस्तस्मै नमस्तस्मै नमस्तस्मै महात्मने।
नाम रूपं न यस्यैको योऽस्तित्वेनोपलभ्यते॥
यस्यावतारक्रूपाणि समर्चन्ति दिवौकसः।
अपश्यन्तः परं रूपं नमस्तस्मै परात्मने॥
योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभे।
तत्सर्वं साक्षिणं विष्णुं नमस्ये परमेश्वरम्॥
नमोऽस्तु विष्णवे तस्मै यस्याभिन्नमिदं जगत्।
ध्येयः स जगतामाद्यः प्रसीदतु स मेऽव्ययः॥
यत्रोतमेतत् प्रोतञ्च विश्वमव्ययमक्षयम्।
आधारभूतः सर्वस्य प्रसीदतु स मे हरिः॥
ॐ नमो विष्णवे तस्मै नमस्तस्मै पुनः पुनः।
यत्र सर्वं यतः सर्वं यः सर्वः सर्वसंश्रयः॥

सर्वगत्वादनन्तस्य स एवाहमयं स्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥
अहमेवाक्षयो नित्यः परमात्मात्मसंश्रयः ।
ब्रह्मसंज्ञोऽहमेवाग्रे तथान्ते च पुनः पुमान् ॥

पराशर उवाच ।

एवं सञ्चिन्तयन् विष्णुमभेदेनात्मनो द्विज ।
तन्मयत्वमवाप्याग्र्यं मेने चात्मानमच्युतम् ॥
विसस्मार तथात्मानं नान्यत् किञ्चिदजानत ।
अहमेवाव्ययोऽनन्तः परमात्मेत्यचिन्तयत् ॥
तस्य तद्भावनायोगात् क्षीणपापस्य वै क्रमात् ।
शुद्धेऽन्तःकरणे विष्णुस्तस्थौ ज्ञानमयोऽच्युतः ॥
योगप्रभावात् प्रह्लादे जाते विष्णुमयेऽसुरे ।
चलत्युरगबन्धैस्तैर्मैत्रेय त्रुटितं क्षणात् ॥
भ्रान्तग्राहगणः सोर्मिर्ययौ क्षोभं महार्णवः ।
चचाल च मही सर्वा सशैलवनकानना ॥
स च तं शैलसङ्घातं दैत्यैर्न्यस्तमथोपरि ।
प्रक्षिप्य सलिलात् तस्मान्निश्चक्राम महामतिः ॥
स दृष्ट्वा च जगद्भूयो गगनाद्युपलक्षणम् ।
प्रह्लादोऽस्मीति सस्मार पुनरात्मानमात्मना ॥
तुष्टाव च पुनर्धीमाननादिं पुरुषोत्तमम् ।
एकाग्रमतिरव्यग्रो यतवाग् यतमानसः ॥

प्रह्लाद उवाच ।

ॐ नमः परमार्थार्थ स्थूलसूक्ष्मक्षराक्षर ।
व्यक्ताव्यक्तकलातीत सकलेश निरञ्जन ॥

गुणाञ्जन गुणाधार निर्गुणात्मन् गुणस्थित ।
मूर्तामूर्त्त महामूर्त्ते सूक्ष्ममूर्त्ते स्फुटास्फुटे ॥
करालरूप सौम्यात्मन् विद्याविद्यामयाच्युत ।
सदसद्रूप सद्भाव सदसद्भाव भावन ॥
नित्यानित्यप्रपञ्चात्मन् निष्प्रपञ्चखिलाखिल ।
एकानेक नमस्तुभ्यं वासुदेवादिकारण ॥
यः स्थूलसूक्ष्माप्रकटप्रकाशो यः सर्वभूतो न च सर्वभूतः ।
विश्वं यतश्चैतदविश्वहेतोर्नमोऽस्तु तस्मै पुरुषोत्तमाय ॥

पराशर उवाच ।

तस्य तच्चेतसो देवः स्तुतिमित्थं प्रकुर्वतः ।
आविर्बभूव भगवान् पीताम्बरधरो हरिः ॥
ससंभ्रमस्तमालोक्य समुत्थायाकुलाक्षरम् ।
नमोऽस्तु विष्णवेत्येतद्व्याजहारासकृद्द्विज ॥

प्रह्लाद उवाच ।

देव प्रपन्नार्त्तिहर प्रसीद कुरु केशव ।
अवलोकनदानेन भूयो मां पावयाऽव्यय ॥

श्रीभगवानुवाच ।

कुर्वतस्ते प्रसन्नोऽहं भक्तिरव्यभिचारिणी ।
यथाभिलषितो मत्तः प्रह्लाद व्रियतां वरः ॥

प्रह्लाद उवाच ।

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वच्युता भक्तिरच्युताऽस्तु सदा त्वयि ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥

श्रीभगवानुवाच ।

मयि भक्तिस्तथास्त्येवं भूयोऽप्येवं भविष्यति ।
वरश्च मत्तः प्रह्लाद व्रियतां यस्तवेप्सितः ॥

प्रह्लाद उवाच ।

मयि द्वेषानुबन्धोऽभूत् संस्तुतावुद्यते तव ।
मत्पितुस्तत्कृतं पापं देव तस्य प्रणश्यतु ॥
शस्त्राणि पातितान्यङ्गे क्षिप्तो यच्चाग्निसंहतौ ।
दंशितश्चोरगैर्दत्तं यद्विषं मम भोजने ॥
बद्धा समुद्रे प्रक्षिप्तो यच्चितोऽस्मि शिलोच्चयैः ।
अन्यानि वाऽप्यसाधूनि यानि यानि कृतानि मे ॥
त्वयि भक्तिमतो द्वेषादघं तत्संभवं च यत् ।
त्वत्प्रभावात् प्रभो सद्यस्तेन मुच्यतु मत्पिता ॥

भगवानुवाच ।

प्रह्लाद सर्वमेतत्ते मत्प्रसादाद्भविष्यति ।
अन्यच्च ते वरं दद्मि व्रीयतां मेऽसुरात्मज ॥

प्रह्लाद उवाच ।

कृतकृत्योऽस्मि भगवन् वरेणानेन यस्त्वयि ।
भवित्री त्वत्प्रसादेन भक्तिरव्यभिचारिणी ॥
धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिता त्वयि ॥

भगवानुवाच ।

यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ।
तथा त्वं मत्प्रसादेन निर्वाणं समवाप्स्यसि ॥

पराशर उवाच ।

इत्युक्त्वाऽन्तर्दधे विष्णुस्तस्य मैत्रेय पश्यतः ।
स चापि पुनरागत्य ववन्दे चरणौ पितुः ॥
तं पिता मूर्द्धन्युपाघ्राय परिष्वज्य च पीडितम् ।
जीवसीत्याह वत्सेति बाष्पार्द्रनयनो द्विज ॥
प्रीतिमांश्चाभवत्तस्मिन्ननुतापी महासुरः ।
गुरोः पित्रोश्चकारैवं शुश्रूषां सर्वधर्मवित् ॥
धर्मात्मा सत्यशौचादिगुणानामाकरः परः ।
उपमानमशेषाणां साधूनां यः सदाऽभवत् ॥
पितर्युपरतिं नीते नरसिंहस्वरूपिणा ।
विष्णुना सोऽपि दैत्यानां मैत्रेयाभूत् पतिस्ततः ॥
ततो राज्यद्युतिं प्राप्य कर्मशुद्धिकरीं द्विज ।
पुत्रपौत्रांश्च सुबहूनवाप्यैश्वर्यमेव च ॥
क्षीणाधिकारः स यदा पुण्यपापविवर्जितः ।
तदाऽसौ भगवद्ध्यानात् परं निर्वाणमाप्तवान् ॥
एवं प्रभावो दैत्योऽसौ मैत्रेयासीन्महामतिः ।
प्रह्लादो भगवद्भक्तो यत्त्वं मामनुपृच्छसि ॥
यस्त्वेतच्चरितं तस्य प्रह्लादस्य महात्मनः ।
शृणोति तस्य पापानि सद्यो गच्छन्ति संचयम् ॥
अहोरात्रकृतं पापं प्रह्लादचरितं नरः ।
शृण्वन् पठंश्च मैत्रेय व्यपोहति न संशयः ॥
पौर्णमास्याममावास्यामष्टम्यामथवा पठन् ।
द्वादश्यां वै तदाप्नोति गोप्रदानफलं द्विज ॥
प्रह्लादं सकलापत्सु यथा रक्षितवान् हरिः ।

तथा रक्षति यस्तस्य शृणोति चरितं सदा ॥

इति श्रीविष्णुपुराणोक्तं प्रह्लादचरितम् ॥

इति श्रीभक्तिसागरे प्रह्लादचरितनिरूपणं नाम तृतीयस्तरङ्गः ॥

जनमेजय उवाच ।

सभायां वसतोस्तत्र निहत्यारीन् महात्मनोः ।
केशवार्जुनयोः का नु कथा समभवद्द्विज ॥

वैशम्पायन उवाच ॥

कृष्णेन सहितः पार्थः स्वराज्यं प्राप्य केवलम् ।
तस्यां सभायां दिव्यायां विजहार मुदा युतः ॥
ततः कञ्चित् सभोद्देशं स्वर्गोद्देशसमं नृप ।
यदृच्छया च तौ मुदितौ जग्मतुः स्वजनावृतौ ॥
ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽर्जुनः ।
निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत् ॥
विदितं ते महाबाहो संग्रामे समुपस्थिते ।
माहात्म्यं देवकीमातः तच्च ते रूपमैश्वरम् ॥
यत्तु तद्भवता प्रोक्तं पुरा केशव सौहृदात् ।
तत्सर्वं पुरुषव्याघ्र नष्टं मे भ्रष्टचेतसः ॥
तन्मे कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः ।
भवांश्च द्वारकां गन्ता न चिरादिव माधव ॥

वैशम्पायन उवाच ।

एवमुक्तस्ततः कृष्णः फाल्गुनं प्रत्यभाषत ।
परिष्वज्य महातेजा वचनं वदतां वर ॥

वासुदेव उवाच ।

श्रावितस्त्वं मया पूर्वं ज्ञापितश्च सनातनः ।

स्वधर्मरूपिणं पार्थ सर्वलोकांश्च शाश्वतान् ॥
अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम् ।
न च सा ऽद्य पुनर्भूयः स्मृतिर्मे संभविष्यति ॥
नूनमश्रद्दधानो ऽसि दुर्मेधा ह्यसि पाण्डव ।
न च शक्यः पुनर्वक्तुमशेषेण धनञ्जय ॥
स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने ।
न शक्यस्तन्मया भूयस्तथा वक्तुमशेषतः ॥
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया ।
इतिहासन्तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् ॥
यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि ।
शृणु धर्मविदां श्रेष्ठ गदितं सर्वमेव मे ॥
आगच्छद्ब्राह्मणः कश्चित् स्वर्गलोकादरिन्दम ।
ब्रह्मलोकाद्दुर्धर्षः सो ऽस्माभिः पूजितो ऽभवत् ॥
अस्माभिः परिपृष्टश्च यदा ऽऽह भरतर्षभ ।
दिव्येन विधिना पार्थ तच्छृणुष्वाविचारयन् ॥

ब्राह्मण उवाच ।

मोक्षधर्मं समाश्रित्य कृष्ण यन्मामपृच्छथाः ।
भूतानामनुकम्पार्थं यन्मोहच्छेदनं प्रभो ॥
तत्ते ऽहं संप्रवक्ष्यामि यथावन्मधुसूदन ।
शृणुष्वावहितो भूत्वा गदतो मम माधव ॥
कश्चिद्विप्रस्तपोयुक्तः काश्यपो धर्मवित्तमः ।
आससाद द्विजः कञ्चिद्धर्माणामागतं गतम् ॥
गतागतं सुबहुशो ज्ञानविज्ञानपारगम् ।
लोकतत्त्वार्थकुशलं ज्ञातारं सुखदुःखयोः ॥

जातीमरणतत्त्वज्ञं कोविदं पुण्यपापयोः।
द्रष्टारमुच्चनीचानां कर्मभिर्देहिनां गतिम्॥
चरन्तं मुक्तवत्सिद्धं प्रशान्तं संयतेन्द्रियम्।
दीप्यमानं श्रिया ब्राह्म्या क्रममाणं च सर्वशः॥
अन्तर्द्धानगतिज्ञञ्च श्रुत्वा तत्त्वेन काश्यपः।
तथैवान्तर्हितैः सिद्धैर्यान्तं चक्रधरैः सह॥
सम्भाषमाणमेकान्ते समासीनं च तैः सह।
यदृच्छया च गच्छन्तमसक्तं पवनं यथा॥
तं समासाद्य मेधावी स तदा द्विजसत्तम।
चरणौ धर्मकामोऽस्य तपस्वी सुसमाहितः॥
प्रतिपेदे यथान्यायं भक्त्या परमया युतः।
विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजोत्तमम्॥
विस्मितः परिचारेण महता पर्यतोषयत्।
उपपन्नश्च तत्सर्वं श्रुतिचारित्रसंयुतः॥
भावेन तोषयच्चैनं गुरुवृत्त्या परन्तप।
तस्मै तुष्टः स शिष्याय प्रसन्नो वाक्यमब्रवीत्॥
सिद्धिं परामभिप्रेक्ष्य शृणु मत्तो जनार्दन।
विविधैः कर्मभिस्तात पुण्यैर्योगैश्च केवलैः॥
गच्छन्तीह गतीर्मर्त्या देवलोके च संस्थितिम्।
न क्वचित् सुखमत्यन्तं न क्वचिच्छाश्वता गतिः॥
स्थानाच्च महतो भ्रंशो दुःखं लब्ध्वा पुनः पुनः।
अशुभा गतयः प्राप्ताः कष्टा याः पापसेवनात्॥
काममन्युपरीतेन तृष्णया मोहितेन च।
पुनः पुनश्च मरणं जन्म चैव पुनः पुनः॥

आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
भ्रातरो विविधा दृष्टाः पितरश्च पृथग्विधाः ॥
सुखानि च विचित्राणि दुःखानि च मया ऽनघ ।
प्रियैर्विवासो बहुभिः संवासश्च प्रियैः सह ॥
धननाशश्च संप्राप्तो लब्ध्वा दुःखेन तद्धनम् ।
अपमानाः सुकष्टाश्च राजतः स्वजनात्तथा ।
शारीरा मानसाश्चापि वेदना भृशदारुणाः ।
प्राप्ता विमाननाश्चोग्राः वधबन्धाश्च दारुणाः ॥
पतनं निरये चैव यातनाश्च युगक्षये ।
जरारोगाश्च सततं व्यसनानि च भूरिशः ।
लोके ऽस्मिन्ननु भूतानि द्वन्द्वजानि भृशं मया ।
ततः कदाचिन्निर्वेदान्निराकाराश्रितेन च ॥
लोकतन्त्रं परित्यक्तं दुःखार्तेन भृशं मया ।
ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ॥
न हि पुनरिहागन्ता लोकानालोकयाम्यहम् ।
आ सिद्धेरा प्रजासर्गादात्मनोऽथ गतिः शुभा ॥
उपलब्धा द्विजश्रेष्ठ तथेयं बुद्धिरुत्तमा ।
इतः परं गमिष्यामि ततः परतरं ततः ॥
ब्रह्मणः पदमव्यग्रं मा ते ऽभूदत्र संशयः ।
नाऽहं पुनरिहागन्ता मर्त्यलोकं परन्तप ॥
प्रीतो ऽस्मि ते महाप्राज्ञ ब्रूहि किं करवाणि ते ।
यदीप्सुरुपपन्नस्त्वं तस्य कालो ऽयमागतः ।
अभिजाने च तदहं यदर्थं मामुपागतः ॥
अचिरात्तु गमिष्यामि येनाहं त्वामचूचुदम् ।

भृशं प्रीतोऽस्मि भवतश्चारित्रेण विचक्षण ॥
परिपृच्छस्व कल्याणं भाषेयं यत्र चेप्सितम्।
बहु मन्ये च ते बुद्धिं भृशं संपूजयामि च ॥
येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप।

वासुदेव उवाच।

ततस्तस्योपसंगृह्य पादौ प्रश्नान् सुदुर्वचान्।
पप्रच्छ तांश्च सर्वान् स प्राह धर्मभृतां वरः ॥

काश्यप उवाच।

कथं शरीरं च्यवते कथं चैवोपजायते।
कथं कष्टाच्च संसारात् संसरन् परिमुच्यते ॥
आत्मा च प्रकृतिं मुक्त्वा तच्छरीरं विमुञ्चति।
शरीरं तद्विनिर्मुक्तः कथमन्यत् प्रपद्यते ॥
कथं शुभाशुभे चायं कर्मणी कुरुते नरः।
उपभुङ्क्ते क्व वा कर्म विदेहस्यावतिष्ठते ॥

ब्राह्मण उवाच।

एवं सञ्चोदितः सिद्धः प्रश्नांस्तान् प्रत्यभाषत।
आनुपूर्व्येण वार्ष्णेय तन्मे निगदतः शृणु ॥

सिद्ध उवाच।

आयुःकीर्त्तिकराणीह यानि कृत्यानि सेवते।
बुद्धिर्व्यावर्त्तते चास्य विनाशे प्रत्युपस्थिते ॥
सत्त्वं बलं च कालं च विदित्वा चात्मनस्तथा।
अतिवेलमुपाश्नाति तैर्विरुद्धान्यनात्मवान् ॥
यदा ऽयमतिकष्टानि सर्वाण्युपनिषेवते।
अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन ॥

दुष्टान्नामिषपानं वा यदन्योन्यविरोधि वा।
गुरु वापि समं भुङ्क्ते नातिजीर्णोऽपि वा पुनः॥
व्यायाममतिमात्रं वा व्यपायं चोपसेवते।
सततं कर्मलोभाद्वा प्राप्तवेगं विधारयेत्॥
न वातिभुक्तमन्नं वा यदि स्वप्नं च जायते।
अपक्वान्नागते काले स्वयं दोषात् प्रकोपयेत्॥
स्वदोषकोपनाद्रोगं लभते मरणान्तिकम्।
अथ चेद्बन्धनादीनि परीतानि व्यवस्यति॥
तस्य तैः कारणैर्जन्तोः शरीराच्च्यवते यथा।
जीवितं प्रोच्यमानं तद्यथावदुपधारय॥
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः।
शरीरमनुपर्य्येति सर्वान् प्राणान् रुणद्धि वै॥
अत्यर्थबलवानूष्मा शरीरे परिकोपितः॥
भिनत्ति जीवस्थानानि मर्माणि विद्धि तत्वतः।
ततः सवेदनः सद्यो जीवः प्रच्यवति स्वयम्॥
शरीराच्च्यवते जन्तुः छिद्यमानेषु मर्मसु॥
वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम।
जातीमरणसंविग्नाः सततं सर्वजन्तवः॥
दृश्यन्ते सन्त्यजन्तश्च शरीराणि द्विजर्षभ।
गर्भसंक्रमणे चापि मर्मणामभिसर्पणे॥
तादृशीमेव लभते वेदनां मानवः पुनः।
भिन्नसन्धिरथाक्लेदमद्भिः संलीयते नरः॥
यथा यं च सुभूतेषु संश्रितत्वं नियच्छति।
शैत्यात् प्रकुपितः काये तीव्रवायुसमीरितः॥

यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः।
स गर्भादूर्द्धगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणम्॥
शरीरं च जहात्येव निरुच्छ्वासश्च दृश्यते।
स निरूष्मा निरुच्छ्वासो निःश्रीको हतचेतनः॥
ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते नरः।
स्रोतोभिर्यैर्विजानाति इन्द्रियार्थान् शरीरभृत्॥
तैरेव हि खं जानाति प्राणानाहारसम्भवान्।
तत्रैव कुरुते काये यः स जीवः सनातनः॥
तेषां यद्यद्भवेद्युक्तं सन्निपाते क्वचित् क्वचित्।
तत्तत् कर्म विजानीहि शास्त्रदृष्टं हि तत्तथा॥
तेषु कर्मसु भिन्नेषु ततः स समुदीरयन्।
आविश्य हृदयं जन्तोः स त्वं चाशु रुणद्धि वै॥
ततः सचेतनो जन्तुर्नाभिजानाति किञ्चन।
तमसा संवृतज्ञानः संवृतेष्वेव मर्मसु॥
स जीवो निरधिष्ठानश्च्यवते मातरिश्वना।
ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम्॥
निष्क्रामत् कम्पयत्याशु तच्छरीरमचेतनम्।
स जीवः प्रच्युतः कायात् कर्मभिः स्वैः समावृतः॥
अभितः स्वैः शुभैः पुण्यैः पापैर्वाऽप्युपपद्यते।
ब्राह्मणा ज्ञानसम्पन्ना यथावच्छ्रुतनिश्चयाः॥
इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः।
यथाऽन्धकारे खद्योतं नीयमानं ततस्ततः॥
चक्षुष्मन्तः प्रपश्यन्ति तथा तं ज्ञानचक्षुषः।
पश्यन्त्येवंविधाः सिद्धाः जीवं दिव्येन चक्षुषा॥

च्यवन्तं जायमानं वा योनिं चानुप्रवेशितम्।
तस्य स्थानानि दृष्टानि त्रिविधानीह शास्त्रतः॥
कर्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः।
ततः शुभाशुभं कृत्वा लभन्ते सर्वदेहिनः॥
इहैवोच्चावचान् भोगान् प्राप्नुवन्ति स्वकर्मभिः।
इहैवाशुभकर्माणः कर्मभिर्निरयङ्गताः॥
अवाग्गतिरियं कष्टा यत्र पच्यन्ति मानवाः।
तस्मात् सुदुर्लभो मोक्षो रक्ष्यश्चात्मा ततो भृशम्॥
ऊर्द्धन्तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः।
कीर्त्यमानानि तानीह तत्त्वतः सन्निबोध मे॥
तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुद्ध्येथाः कर्मनिश्चयम्।
तारारूपाणि सर्वाणि यच्चैतच्चन्द्रमण्डलम्॥
यच्च विभ्राजते लोके विभास्वत्सूर्यमण्डलम्।
स्थानान्येतानि जानीत नराणां पुण्यकर्मणाम्॥
कर्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः।
तत्रापि च विशेषोऽस्ति दिवि नीचोच्चमध्यमः॥
न तत्राप्यस्ति सन्तोषो दृष्ट्वा दीप्ततरां श्रियम्।
इत्येता गतयः सर्वाः पृथक ते समुदीरिताः॥
उपपत्तिं तु वक्ष्यामि गर्भस्याहमतः परम्।
यथा तन्मे निगदतः शृणुष्वावहितो द्विज॥

ब्राह्मण उवाच।

शुभानामशुभानां च नेह नाशोऽस्ति कर्मणाम्।
प्राप्य प्राप्य तु पच्यन्ते क्षेत्रे क्षेत्रे तथा तथा॥
यथा प्रसूयमानस्तु फली दद्यात् फलं बहु।

तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम् ॥
पुरोधाय मनो ह्रीदं कर्मण्यात्मा प्रवर्त्तते ।
यथा कर्मसमाधिस्थः काममन्युसमावृतः ॥
नरो गर्भं प्रविशति तच्चापि शृणु चोत्तरम् ।
शुक्रशोणितसंसृष्टं स्त्रीणां गर्भाशयागतम् ॥
क्षेत्रं गर्भजमाप्नोति शुभं वा यदि वा ऽशुभम् ।
सौक्ष्म्याद्व्यक्तभावाच्च न च क्वचन सज्जति ॥
संप्राप्य ब्रह्मणः कायं तस्मात्तद् ब्रह्म शाश्वतम् ।
तद्बीजं सर्वभूतानां तेन जीवन्ति जन्तवः ॥
स जीवः सर्वगात्राणि गर्भस्याविश्य भागशः ।
ददाति चेतसा सद्यः प्राणस्थानेष्ववस्थितः ॥
ततः स्पन्दयते ऽङ्गानि स गर्भश्चेतसान्वितः ।
यथा हि लोहविस्यन्दो निषिक्तो बिम्बविग्रहम् ।
उपैति तद्विजानीहि गर्भे जीवप्रवेशनम् ।
लोहपिण्डं यथा वह्निः प्रविश्य ह्यभितापयेत् ॥
तथा त्वमपि जानीहि गर्भे जीवोपपादनम् ।
यथा च दीपः शरणे दीप्यमानः प्रकाशते ॥
एवमेव शरीराणि प्रकाशयति चेतना ।
यद्यच्च कुरुते कर्म शुभं वा यदि वाऽशुभम् ॥
पूर्वं देहकृतं सर्वमवश्यमुपभुज्यते ।
ततस्तत् क्षीयते चैव पुनश्चान्यत् प्रचीयते ॥
यावन्तं मोक्षयोगस्थं धर्मं नैवावबुध्यते ।
तत्र धर्मं प्रवक्ष्यामि सुखी भवति येन वै ॥
अवर्तमानो जातीषु तथा यो ऽन्यां सुसत्तम ।

दानं व्रतं ब्रह्मचर्यं यथोक्तं व्रतधारणम् ॥
दमः प्रशान्तता चैव भूतानां चानुकम्पनम् ।
संयमश्चानृशंस्यञ्च परस्वादानवर्जनात् ॥
व्यलीकानामकरणं भूतानां चेतसा भुवि ।
मातापित्रोश्च शुश्रूषा देवतातिथिपूजनम् ॥
गुरुपूजा घृणाशौचं नित्यं चेन्द्रियसंयमः ।
प्रवर्त्तनं शुभानां च तत् सतां वृत्तमुच्यते ॥
अतो धर्मः प्रभवति यः प्रजा पाति शाश्वतीः ।
एवं सत्सु सदा पश्येत्तथाऽप्येषा ध्रुवा स्थितिः ॥
आचारो धर्ममाचष्टे यस्मिन् सन्तो व्यवस्थिताः ।
तेषु तत्कर्म निःक्षिप्तं यः स धर्मः सनातनः ॥
यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् ।
अतो नियम्यते लोकः प्रच्यवन् धर्मकर्मसु ॥
यस्तु योगी च मुक्तश्च स एतेभ्यो विशिष्यते ।
वर्तमानस्य धर्मेण शुभं यत्र यथा तथा ॥
संसारतारणं ह्यस्य कालेन महता भवेत् ।
एवं पूर्वकृतं कर्म नित्यं जन्तुः प्रवर्तते ॥
सर्वतः कारणं येन निकृतोऽयमिहागतः ।
शरीरग्रहणं वास्य केन पूर्वं प्रकल्पितम् ॥
इत्येवं संशयं लोके तच्च वक्ष्याम्यसंशयम् ।
शरीरमात्मनः कृत्वा सर्वलोकपितामहः ॥
त्रैलोक्यमसृजद् ब्रह्मा कृत्स्नं स्थावरजङ्गमम् ।
ततः प्रधानमसृजत् प्रकृतिं स्वशरीरिणाम् ॥
यया सर्वमिदं प्राप्तं यां लोके परमां विदुः ।

इदं तदक्षरमित्युक्तं परं त्वमृतमक्षरम् ॥
रसानां मिथुनं सर्वमेकैकस्य पृथक् पृथक् ।
असृजत् सर्वभूतानि पूर्वं सृष्टः प्रजापतिः ॥
स्थावराणि च भूतानि इत्येषा पौर्विकी श्रुतिः ।
तस्य कालपरीमाणमकरोत् स पितामहः ॥
भूतेषु परिवृत्तिं च पुनरावृत्तिमेव च ।
यथाऽत्र कश्चिन्मेधावी दृष्टात्मा पूर्वजन्मनि ॥
तत् प्रवक्ष्यामि यत् सर्वं यथावदुपपद्यते ।
सुखदुःखे सदा सम्यगनित्ये यः प्रपश्यति ॥
कायं वा मेध्यसंघातं विनाशं कर्मसंहिताम् ।
यच्च किंचित् सुखं तच्च सर्वं दुःखमिति स्मरन् ॥
संसारसागरं घोरं तरिष्यति सुदुस्तरम् ।
जातीमरणयोगैश्च समाविष्टः प्रधानवित् ॥
चेतनावांस्तु चैतन्यं सर्वभूतेषु पश्यति ।
निर्विद्यते ततः कृत्स्नं मार्गमाणाः परं पदम् ॥
तस्योपदेशं वक्ष्यामि याथातथ्येन सत्तम ।
प्रोच्यमानं मया विप्र निबोधेहमशेषतः ॥

ब्राह्मण उवाच ।

यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन् ।
पूर्वं पूर्वं परित्यज्य स तीर्णो बन्धनाद्भवेत् ॥
सर्वमित्रः सर्वसहः शमे रक्तो जितेन्द्रियः ।
व्यपेतभयमन्युश्च आत्मवान् मुच्यते नरः ॥
आत्मवत् सर्वभूतेषु यश्चरेन्नियतः शुचिः ।
अमानी निरभिमानः सर्वतो मुक्त एव सः ॥

जीवितं मरणं चोभे सुखदुःखे तथैव च ।
लाभालाभे प्रिये द्वेष्ये यः समः स च मुच्यते ॥
न कस्यचित् स्पृहते न विजानाति किंचन ।
निर्द्वन्द्वो वीतरागात्मा सर्वथा मुक्त एव सः ॥
अनमित्रोऽथ निर्बन्धुरनपत्यश्च यः क्वचित् ।
त्यक्तधर्मार्थकामांश्च निराकाङ्क्षी स उच्यते ॥
अकर्मवान् विकाङ्क्षश्च पश्येज्जगदशाश्वतम् ।
अश्वत्थमनसं मूढं जन्ममृत्युजरायुतम् ॥
वैराग्ययुक्तः सततमायत्यामनवेक्षकम् ।
आत्मबन्धविनिर्मोक्षमकरोदचिरादिव ॥
सुखक्षरं सुखस्पर्शमशब्दमपरिग्रहम् ।
पुरुषं ह्यनभिज्ञेयं दृष्ट्वात्मानं विमुच्यते ॥
पञ्चभूतगुणैर्हीनममूर्तिमदहेतुकम् ।
अगुणं गुणभोक्तारं यः पश्यति स पश्यति ॥
विहाय सर्वसंकल्पान् बुद्ध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवाऽनलः ॥
विमुक्तः सर्वसंस्कारैस्ततो ब्रह्म सनातनम् ।
परमाप्नोति संशान्तमचलं नित्यमक्षयम् ॥
अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम् ।
युञ्जन्तः सिद्धिमात्मानं यथा पश्यन्ति योगिनः ॥
तस्योपदेशं वक्ष्यामि यथावत्तं निबोध मे ।
यैर्द्वारैश्चारयेन्नित्यं पश्यन्नात्मानमात्मनि ॥
इन्द्रियाणि च संहृत्य मन आत्मनि धारयेत् ।
पूर्वं तप्त्वा तपस्तीव्रं मोक्षयोगं समाचरेत् ॥

तपस्वी संततं युक्तो योगशास्त्रं समाचरेत्।
मनीषी मनसा विप्रः पश्यन्नात्मानमात्मनि॥
संयतः सततं युक्तमात्मवान् विजितेन्द्रियः।
तथाऽयमात्मनात्मानं साधु युक्तः प्रपश्यति॥
इषीकां च यथा मुञ्जात् कश्चिन्निष्कृष्य दर्शयेत्।
योगी निष्कृष्य चात्मानं तथा पश्यति देहतः॥
युञ्जन् शरीरं तस्यायमिषीकामात्मनिश्चिताम्।
एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम्।
यदा हि युक्तमात्मानं सम्यक् पश्यति देहभृत्।
न तस्येहेश्वरः कश्चित्त्रैलोक्यस्यापि यः प्रभुः॥
अन्या अन्याश्च तनवो यथेष्टं प्रतिपद्यते।
सम्यग् भुक्त्वा स आत्मानमात्मन्येव प्रतिष्ठते॥
विनिवृत्य न शोचन्ति न हृष्यन्ति कदा चन।
देवानामपि देवत्वं मुक्तः कारयते वशी॥
ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम्।
विनश्यत्स्वपि लोकेषु न भयं तस्य जायते॥
क्लिश्यमानेषु भूतेषु न संक्लिश्यति केनचित्।
दुःखशोकमयैर्घोरैः संगस्नेहसमुद्भवैः॥
न चाल्यते च युक्तात्मा निस्पृहः शान्तमानसः।
नैनं शस्त्राणि छिन्दन्ति न मृत्युश्चास्य विद्यते।
नातः सुखतरं किञ्चिल्लोके क्वचन दृश्यते।
सम्यक् त्यक्त्वा स आत्मानमात्मन्येव प्रशाम्यति
तदैव चैनं स्पृहते साक्षादपि शतक्रतुः।
योगमेकान्तशीलस्तु यथा विन्दति तच्छृणु॥

इष्टपूर्बादि सचिन्त्य यस्यां स निवसेत् पुरि ।
पुरस्याभ्यन्तरे तस्य मनश्चायं न बाह्यतः ॥
पुरस्याभ्यन्तरे तिष्ठन् तस्मिन्नावसथे वसेत् ।
तस्मिन्नावसथे चायं स बाह्याभ्यन्तरे मनः ॥
अचिन्त्यावसथं चैनं यस्मिन् काले ऽवतिष्ठते ।
तस्मिन् काले मनश्चायं न कश्चन न बाह्यतः ॥
सन्नियम्येन्द्रियग्रामं निर्घोषे निर्जने शुभे ।
कायमभ्यन्तरं कृत्स्नमेकाग्रः परिचिन्तयेत् ॥
दन्तांस्तालु च जिह्वां च गलं ग्रीवां तथैव च ।
हृदयं चिन्तयेच्चापि तथा हृदयबन्धनम् ॥
इत्युक्तः स मया शिष्यो मेधावी मधुसूदन ।
पप्रच्छ पुनरेवेमं मोक्षधर्मं सुदुर्वचम् ॥
भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते ।
कथं न सत्वं व्रजति शोणितत्वं कथं पुनः ॥
तथा मांसञ्च मेदश्च स्नायून्यस्थीनि पोषति ।
कथमेतानि सर्वाणि शरीराणि शरीरिणाम् ॥
वर्द्धते वर्धमानस्य वर्द्धते च कथं बलम् ।
निरोजसां निर्गमनं मलानां च पृथक् पृथक् ॥
कुतश्चायं प्रश्वसिति उच्छ्वसित्यपि वा पुनः ।
कथं देशमधिष्ठाय तिष्ठत्यात्मानमात्मनि ॥
जीवः कथं प्रवहति चेष्टमानः कलेवरम् ।
किं वर्णः कीदृशं चैव निवेशयति वै पुनः ॥
याथातथ्येन भगवन् वक्तुमर्हसि मेऽनघ ।
इति संपरिपृष्टोऽहं तेन विप्रेण माधव ॥

प्रत्यब्रवं महाबाहो यथाश्रुतमरिन्दम।
यथा स्वकोष्ठे प्रक्षिप्य कोष्ठं भाण्डमना भवेत्॥
तथा स्वकाये प्रक्षिप्य मनोद्वारैरनिश्चलैः।
आत्मानं तत्र मार्गेत प्रमादं परिवर्जयेत्॥
एवं स ततमुद्युक्तः प्रीतात्मा न चिरादिव।
आसादयति तद् ब्रह्म यद्दृष्ट्वा स्यात् प्रधानवित्॥
न त्वसौ चक्षुषा ग्राह्यो न च सर्वैरपीन्द्रियैः।
मनसैव प्रदीपेन महदात्मा सुदृश्यते॥
सर्वतः पाणिपादन्तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥
जीवो निष्क्रान्तमात्मानं शरीरात् संप्रपश्यति।
स तमुत्सृज्य देहं स्वं धारयन् ब्रह्म केवलम्॥
आत्मानमालोकयति मनसा प्रहसन्निव।
इदं सर्वं रहस्यन्ते मया प्रोक्तं द्विजोत्तम॥
आपृच्छे साधयिष्यामि गच्छ विप्र यथासुखम्।
इत्युक्तः स तदा कृष्ण मया शिष्यो महातपाः॥
आगच्छच्च यथाकामं ब्राह्मणः शंसितव्रतः।

वासुदेव उवाच।

इत्युक्त्वा स तदा वाक्यं मां पार्थ द्विजपुङ्गवः।
मोक्षं धर्माश्रितं सम्यक् तत्रैवान्तरधीयत॥
कच्चिदेतत्त्वया पार्थ श्रुतमेकान्तचेतसा।
तदापि हि रथस्थस्त्वं श्रुतवानेतदेव ह॥
नैतत् पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः।
नरेणाकृतसंज्ञेन विशुद्धेनान्तरात्मना॥

स्वरहस्यमिदं प्रोक्तं देवानां भरतर्षभ।
कच्चिन्नैवं श्रुतं पार्थ मनुष्येणेह कर्हिचित्॥
न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ।
नैतदन्यैः सुविज्ञेयं व्यामिश्रेणान्तरात्मना॥
क्रियावद्भिर्हि कौन्तेय देवलोकसमावृतः।
न चैतदिष्टं देवानां मर्त्यलोकनिवर्त्तनम्॥
परा हि सा गतिः पार्थ यत्तद् ब्रह्म सनातनम्।
तत्रामृतत्वं प्राप्नोति त्यक्त्वा दुःखं सदा सुखी॥
इमं धर्मं समास्थाय येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥
किं पुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः।
स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणाः॥
हेतुमच्चैतदुद्दिष्ट उपायश्चास्य साधने।
सिद्धेः फलञ्च मोक्षश्च दुःखस्य च विनिर्णयः॥
नातः परं सुखं त्वन्यत्किंचिद् स्याद्भरतर्षभ।
बुद्धिमान् श्रद्दधानश्च पराक्रान्तश्च पाण्डव॥
परित्यजति यो मर्त्यो लोकतन्त्रमसारवत्।
एतैरुपायैः स क्षिप्रं परां गतिमवाप्नुयात्॥
एतावदेव वक्तव्यं नातो भूयोस्ति किंचन।
महाभारते अनुगीताख्यानम्॥

ब्राह्मण उवाच।

भूयो वैरिपरो लोके तव चैव गुणाः कृताः।
दर्पः स्तम्भोऽभिमानश्च त्रयस्ते सात्त्विका गुणाः॥
एताविज्ञस्य धृतिमान् बाणसङ्घैरतन्द्रितः।

जित्वा परानुत्सहते प्रशान्तात्मा जितेन्द्रियः ॥
अत्र गाथाः कीर्त्तयन्ति पुरा कल्पविदो जनाः।
अम्बरीषेण या गीता राज्ञा राज्यं प्रशासता ॥
समुत्तीर्णेषु दुष्टेषु वध्यमानेषु सर्वशः।
जग्राह तपसा राज्यमम्बरीष इति श्रुतिः।
स निगृह्य महादोषान् साधून् समभिपूज्य च ॥
जगाम महतीं सिद्धिं गाथां चेमां जगाद ह।
भूयिष्टं मे जिता दोषा निहताः सर्वशत्रवः ॥
एको दोषो ऽवशिष्टस्तु मन्ये च न जितो मया।
येन प्रयुक्तो जन्तुरयं तृष्णामेवाधिगच्छति ॥
तृष्णार्त्त इव निम्नानि परिधावति नित्यदा।
अकार्यमपि येनेह प्रयुक्तः सेवते नरः ॥
तल्लोभमसिभिस्तीक्ष्णैर्निकृन्तत निकृन्तत।
लोभाद्धि जायते तृष्णा ततश्चित्तं प्रसज्यते ॥
स लिप्समानो लभते भूयिष्ठं राजसान् गुणान्।
सत्वैर्गुणैः संश्रितदेहबन्धनः स जायते कर्मणि चेष्टते तथा ॥
तेजःक्षये भिन्नविकीर्णदेहः पुनर्मृत्युं गच्छति जन्ममिश्रे।
तस्मादेनं सम्यगवेक्ष्य मोहं निगृह्य लोभं धृतिमति राज्यमिच्छेत् ॥
एतद्राज्यं नान्यदस्तीति विद्याद्यस्तं न राजा विदितो ममैकः।
इति राज्ञाऽम्बरीषेण गीता गाथा महात्मना।
अधिराज्यं पुरस्कृत्य लोभमेकं निकृन्तत ॥

ब्राह्मण उवाच।

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
ब्राह्मणस्य च संवादं जनकस्य च भामिनि ॥

ब्राह्मणं जनको राजा क्रान्तं कस्मिंश्चिदागसि ।
विषये मे न वस्तव्यमिति शिष्ट्यर्थमब्रवीत् ॥
इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमम् ।
आचक्ष्व विषयान् राजन् यान् यांस्तव वशे स्थितान् ॥
अन्यस्य विषये राजन् वस्तुमिच्छाम्यहं प्रभो ॥
वचस्ते कर्त्तुमिच्छामि यथाशास्त्रं महीपते ।
इत्युक्तस्तु ततो राजा ब्राह्मणेन यशस्विना ॥
मुहुरुष्णं च निःश्वस्य न स तं प्रत्यभाषत ।
तमासीनं ध्यायमानं राजानममितौजसम् ॥
कश्मलं सहसागच्छद्भानुमन्तमिव ग्रहः ।
समाश्वास्य ततो राजा विगते कश्मले तदा ॥
ततो मुहूर्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ।

जनक उवाच ।

पितृपैतामहे राज्ये वश्ये जनपदे सति ।
विषयं नाधिगच्छामि विचिन्वन् पृथिवीमिमाम् ॥
नाध्यगच्छं यदा पृथ्वां मिथिला मार्गिता मया ।
नाध्यगच्छं तथा तस्यां स्वप्रजा मार्गिता मया ॥
नाध्यगच्छं यदा तासु ततो मे कश्मलोऽभवत् ।
ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता ॥
तथा न विषयं मन्ये सर्वो वा विषयो मम ।
आत्मापि चायं न मम सर्वा वा पृथिवी मम ॥
यथा मम तथान्येषामिति मन्ये द्विजोत्तम ।
उष्यतां तावदुत्साहं भुज्यतां तावदिष्यते ॥

ब्राह्मण उवाच ।

पितृपैतामहे राज्ये वश्ये जनपदे सति ।
ब्रूहि कां मतिमास्थाय ममत्वं वर्जितं त्वया ॥

कां वै बुद्धिं विनिश्चित्य सर्वो वै विषयस्तव।

जनक उवाच।

अन्तवन्त इहारम्भा विदिताः सर्वकर्मसु।
नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत्॥
एवं बुद्धिं विनिश्चित्य ममत्वं वर्जितं मया।
शृणु बुद्धिं तु यां ज्ञात्वा सर्वत्र विषयो मम॥
नाहमात्मार्थमिच्छामि रसानास्ये विवर्त्ततः।
आपो मे निर्जितास्तस्माद्वशे तिष्ठन्ति नित्यशः॥
नाहमात्मार्थमिच्छामि रूपं ज्योतिस्तु चक्षुषी।
तस्मान्मे निर्जितं ज्योतिर्वशे तिष्ठति नित्यशः॥
नाहमात्मार्थमिच्छामि स्पर्शांस्त्वचि गतानपि।
वायुर्मे निर्जितस्तस्माद्वशे तिष्ठति नित्यशः॥
नाहमात्मार्थमिच्छामि मनोज्ञं च मनोन्तरे।
मनोऽपि निर्जितं तस्माद्वशे तिष्ठति नित्यशः॥
देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह।
इत्यर्थं सर्व एवेमे समारम्भा भवन्ति वै॥
ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत्।
त्वज्जिज्ञासार्थमद्येह विद्धि मां तमागतम्॥
त्वमस्य ब्रह्मभावस्य बुद्धिं तस्यानिवर्त्तिनः।
स त्वं मेने निरुद्धस्य चक्रस्यैकः प्रवर्तकः॥
नाहमस्मि यथा मां त्वमीक्षसे चक्षुषाऽनघ।
मया व्याप्तमिदं सर्वं यत्किञ्चिज्जगतीगतम्॥
ये केचिज्जन्तवो लोके जङ्गमाः स्थावराश्च ह।
तेषामन्तर्गतं विद्धि दारूणामिव पावकम्॥

राज्यं पृथिव्यां सर्वस्यां अथवा यत्र विष्टपम् ।
तत्तद्बुद्धिरियं वेत्ति बुद्धिरेव धनं मतम् ॥
एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः ।
गृहेषु वनवासेषु गुरुवासेषु भिक्षुषु ॥
लिङ्गैर्बहुभिरव्यग्रैरेका बुद्धिरुपास्यते ।
नानालिङ्गाश्रमस्थानं येषां बुद्धिः शमात्मिका ॥
ते भावमेकमायान्ति सरितः सागरं यथा ।
बुद्ध्याऽयं गम्यते मार्गः शरीरेणावगम्यते ॥
आद्यं भवन्ति कर्माणि शरीरं कर्मबन्धनम् ।
तस्मान्मे सुभगे नास्ति परलोककृतं भयम् ॥
तद्भावभावनिरता ममैवात्मानमेष्यसि ।

ब्राह्मण उवाच ।

नेदमल्पात्मना शक्यं वेदितुं नाकृतात्मना ।
बहु चाल्पं च संक्षिप्तं विस्तृतं च मनो मम ॥
उपायं तु मम ब्रूहि येनैषा लभ्यते गतिः ।

ब्राह्मण उवाच ।

अरणीं ब्राह्मणं विद्धि गुरुरस्योत्तराऽरणिः ।
तपः श्रुते हि मथिते ज्ञानाग्निर्जायते ततः ॥

ब्राह्मण उवाच ।

यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञ इति संज्ञितम् ।
ग्रहीतुं येन तच्छक्यं लक्षणं तस्य तत् क्व नु ॥

ब्राह्मण उवाच ।

अलिङ्गो निर्गुणश्चैव कारणं नास्य विद्यते ।
उपायं तु प्रवक्ष्यामि येन गृह्येत वा न वा ॥

सम्यगप्युपविष्टश्च प्रवरैर्न स लभ्यते ।
कर्मभुक् बुद्धिपूर्वत्वात् ज्ञानलिङ्गैरधिष्ठितः ॥
इदं कार्यमिदं नेति न मोक्षेषूपदिश्यते ।
यावन्त इह शक्येरन् तावतो वा प्रकल्पयेत् ॥
व्यक्तानव्यक्तरूपांश्च शतशोऽथ सहस्रशः ।
सत्वान्नानात्वयुक्तांश्च धर्मान् प्रत्यक्षहेतुकान् ॥
यतः परं न विद्येत तदभ्यासं भविष्यति ।

श्रीभगवानुवाच ।

ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञ संशये ।
क्षेत्रज्ञादेव परतः क्षेत्रज्ञोऽन्यः प्रवर्त्तते ॥

अर्जुन उवाच ।

क्व नु सा ब्राह्मणी कृष्ण क्वासौ ब्राह्मणर्षभः ।
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ॥

श्रीभगवानुवाच ।

मनो मे ब्राह्मणं विद्धि बुद्धिर्मे ब्राह्मणीं विदुः ।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनञ्जय ॥

इति श्रीभक्तिसागरे ब्राह्मणगीतानिरूपणं नाम चतुर्थस्तरङ्गः ।

अर्जुन उवाच ।

ब्रह्म यत्परमं प्रोक्तं तन्मे व्याख्यातुमर्हसि ।
भवतो हि प्रसादेन सुसूक्ष्मे रमते मतिः ॥

श्रीभगवानुवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥
कश्चिद् ब्राह्मणमासीनमाचार्यं संशितव्रतम् ।

शिष्यः पप्रच्छ मेधावी श्रेयः किञ्चित् परन्तप ॥
भगवन्तं प्रपन्नोऽहं निःश्रेयसपरायणः ।
याचे त्वां शिरसा विप्र यद् ब्रूयां तद्विचक्ष्व ह ॥
तमेवं वादिनं प्राज्ञं शिष्यं गुरुरुवाच ह ।
कथयस्व प्रवक्ष्यामि यत्र ते संशयो द्विज ॥
इत्युक्तस्तु कुरुश्रेष्ठ गुरुणा गुरुवत्सलः ।
प्राञ्जलिः परिपप्रच्छ तच्छृणुष्व महामते ॥
कुतश्चाहं कुतश्च त्वं तत्सत्यं ब्रूहि यत् परम् ।
कुतो जातानि भूतानि चराणि स्थावराणि च ॥
केन जीवन्ति जातानि तेषामायुः किमात्मकम् ।
किं सत्यं किं तपो विप्र के गुणाः सद्भिरीरिताः ॥
के पन्थानः शिवाः सन्ति सुकृतं किं च दुष्कृतम् ।
एतन्मे भगवन् प्रश्नान् याथातथ्येन सत्तम ॥
वक्तुमर्हसि विप्रर्षे यथावदिह तत्वतः ।
तस्मै संप्रतिपन्नाय यथावत् परिपृच्छते ॥
शिष्याय गुणयुक्ताय शान्ताय प्रियवादिने ।
छायाभूताय दान्ताय यतये ब्रह्मचारिणे ॥
तत्प्रश्नानब्रवीत् पार्थ मेधावी सुदृढव्रतः ।
गुरुः कुरुकुलश्रेष्ठ सम्यक् सर्वानरिन्दम ॥

गुरुरुवाच ।

ब्रह्मप्रोक्तमिमं धर्ममृषिप्रवरसेवितम् ।
वेदविद्यासमावाप्यं तत्वभूतार्थसाधनम् ॥
भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम् ।
सिद्धसङ्घपरिज्ञातं पुरा कल्पसनातनम् ॥

प्रवक्ष्येऽहं यथा प्राज्ञ पदमुत्तममद्य ते ।
बुद्धा यदिह संसिद्धा भवन्तीह मनीषिणः ॥
उपागम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम् ।
बृहस्पतिर्भरद्वाजो गौतमो भार्गवस्तथा ॥
वसिष्ठः काश्यपश्चैव विश्वामित्रोऽत्रिरेव च ।
मार्गान् सर्वान् परिक्रम्य परिक्रान्ताः स्वकर्मभिः ॥
ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः ।
ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषाः ॥
तं प्रणम्य महात्मानं सुखासीनं महर्षयः
पप्रच्छुर्विनयोपेता निःश्रेयसमिदं परम् ॥
कथं कर्म कृतं साधु कथं मुच्येत किल्बिषात् ।
के नो मार्गाः शिवाश्च स्युः किं सत्यं किं च दुष्कृतम् ॥
केनोभौ कर्मपन्थानौ महत्त्वं केन विन्दति ।
प्रलयं वापवर्गञ्च भूतानां प्रभवाव्ययौ ॥
इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु शिष्य यथागमम् ॥

ब्रह्मोवाच ।

सत्याद्भूतानि जातानि चराणि स्थावराणि च ।
तपसा तानि जीवन्ति इति तद्वित्त सुव्रताः ॥
स्वां योनिं पुनरायान्ति वर्तते स्वेन कर्मणा ।
सत्यं च गुणसंयुक्तं नियुतं यं च लक्षणम् ॥
ब्रह्म सत्यं तपः सत्यं सत्यं वै च प्रजापतिः ।
सत्याद्भूतानि जातानि भूतं सत्यमयं महत् ॥
तस्मात् सत्याद्धि श्रेयो नित्यं योगपरायणः ।

अतीतक्रोधसन्तापा नियता धर्मसेतवः ॥
अन्योन्यनियतान् देषात् धर्मसेतुनिवर्त्तकान् ।
तानहं सम्प्रवक्ष्यामि शाश्वतान् लोकभावनान् ॥
चातुर्वैद्यं तथा वर्णान् चतुरश्चाश्रमान् पृथक् ।
धर्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः ॥
पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः ।
नियतं ब्रह्मभावाय यान्तं पूर्वमहर्षिभिः ॥
गदतस्तु ममाद्येह पन्थानं दुर्विदं परम् ।
निबोधत महाभाग निखिलेन परं पदम् ॥
ब्रह्मचारिकमेवाहुराश्रमं प्रथमं पदम् ।
द्वितीयं चैव गार्हस्थ्यं वानप्रस्थमतः परम् ॥
ततः परन्तु विज्ञेयमध्यात्मं परमं पदम् ।
ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः ॥
नोपैति यावदध्यात्मं तावदेतं न पश्यति ।
तस्योपायं प्रवक्ष्यामि पुरस्तात्तन्निबोधत ॥
फलमूलानि विभुजां मुनीनां वसतां वने ।
वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते ॥
सर्वेषामेव वर्णानां गार्हस्थ्यं वै विधीयते ।
नैष्ठिकोऽपि यतिर्वापि विरक्तो ब्रह्मदर्शने ॥
श्रद्धालक्षणमित्येवं धर्मधीराः प्रचक्षते ।
इत्येते देवयानां वः पन्थानः परिकीर्त्तिताः ॥
सद्भिः प्रवर्त्तिता धीरै ऋषिभिः धर्मसेतवः ।
एतेषां पृथगध्यास्ते ये धर्मं संशितव्रताः ॥
कालात् पश्यन्ति भूतानां सतां हि प्रभवाव्ययौ

अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना ॥
त्रिमयस्थानि सर्वाणि वर्तमानानि भागशः ।
महानात्मा तथा व्यक्तमहंकारस्तथैव च ॥
इन्द्रियाणि दशैकञ्च महाभूतानि पञ्च च ।
विशेषाः पञ्च भूतानामित्येषा वैदिकी श्रुतिः ॥
चतुर्विंशतिरेषा वै तत्त्वानां संप्रकीर्तिता ।
तत्त्वानामथ यो वेद सर्वेषां प्रभवाव्ययौ ॥
स धीरः सर्वभूतेषु न मोहमधिगच्छति ।
तत्त्वानि यो वेदयते यथा तथा गुणांश्च सर्वानखिलांश्च देवताः ।
विधूय पाप्मा हि विमुच्य बन्धनं स सर्वलोकान् सुमनाः समश्नुते ॥

ब्रह्मोवाच ।

तदव्यक्तमनुद्दिष्टं सर्वव्यापि स्थिरं ध्रुवम् ।
नवद्वारं पुरं विद्यात्त्रिगुणं पञ्चधातुकम् ॥
एकादशपरिक्षेपं मनो व्याकरणात्मकम् ।
बुद्धिस्वामिकमित्येतत् परमेकादशं भवेत् ॥
वर्णकस्त्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनः पुनः ।
अन्योन्यमिथुनाः सर्वे तथान्योन्योपजीविनः ।
अन्योन्यं चाश्रयाश्चैव ततोऽन्योन्यानुवर्त्तिनः ।
अन्योन्यव्यतिषिक्ताश्च त्रिगुणाः पञ्च धातवः ॥
तमसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः ।
रजसश्चापि सत्त्वं स्यात् सत्त्वस्य मिथुनं तमः ॥
नियम्यते रजो यत्र सत्त्वं तत्र प्रवर्त्तते ।
नियम्यते यदा सत्त्वं तमस्तत्र प्रवर्त्तते ॥
नैशात्मकं तमो विद्यात्त्रिगुणं मोहसंश्रितम् ।

अधर्मलक्षणं चैव नियतं पापकर्मसु ॥
प्रवृत्त्यात्मकमेवाभूद्रजः पर्यायकारणम् ।
प्रवृत्तं सर्वभूतेषु पश्यन्नुत्पत्तिलक्षणम् ॥
एतेषां गुणतत्त्वं हि वक्ष्यते हेत्वहेतुभिः ।
समासव्यासयुक्तानि तत्त्वतस्तानि वित्त मे ॥
संमोहो ज्ञानतस्त्यागः कर्मणामविनिर्णयः ।
स्वप्नः स्तम्भो भयं लोभः शोकः सुकृतदूषणम् ॥
अस्मृतिश्च विशोकश्च नास्तिक्यं भिन्नवृत्तता ।
निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता ॥
अकृते कृतमानित्वमज्ञाने ज्ञानमानिता ।
अमैत्रो विकृतो भावः अश्रद्धा गूढभावना ॥
अनार्जवमसंज्ञत्वं कर्म पापमचेतना ।
गुरुत्वमन्नभावत्वमसितत्वमवाग्गतिः ॥
सर्वं एते गुणा विप्रास्तामसाः संप्रकीर्तिताः ।
ये चान्ये नियता भावा लोकेऽस्मिन् गूढ संज्ञिताः ॥
तत्र तत्र नियम्यन्ते सर्वे ते तामसा गुणाः ।
परिवादकथा नित्यं वेदब्राह्मणनिन्दिता ॥
अत्यागश्चाभिमानश्च मोहो मन्युस्तथाक्षमा ।
मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते ॥
वृथारम्भाश्च ये केचिद् वृथा दानानि यानि च ।
वृथा भक्षणमित्येतत्तामसं वृत्तमिष्यते ॥
अतिवादोऽतितिक्षा च मात्सर्यमतिमानिता ।
अश्रद्दधानता चैव तामसं वृत्तमिष्यते ॥
एवंविधाश्च ये केचिल्लोकेऽस्मिन् पापकर्मणः ।

मनुष्या भिन्नमर्यादाः एवं ते तामसा जनाः॥
तेषां योनिं तु वक्ष्यामि नियतं पापकर्मणाम्।
अवाङ्निरयभावा ये तिर्यङ्निरयगामिनः॥
स्थावराणि च भूतानि पशवो वाहनानि च।
क्रव्यादा दन्दशूकाश्च कृमिकीटविहङ्गमाः॥
अण्डजा जन्तवो ये तु एवं चापि चतुष्पदाः।
उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः॥
मग्नास्तमसि दुर्वृत्ताः स्वकर्मकृतलक्षणाः।
अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः॥
तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम्।
यथा ते सुकृतान् लोकान् लभन्ते पुण्यकर्मणाम्॥
अन्यथा प्रतिपन्नास्तु विवृद्धा ये स्वकर्मसु।
स्वकर्मनिरतानां च ब्राह्मणानां शुभैषिणाम्॥
संस्कारेणोर्ध्वमायान्ति यतमानाः सलोकताम्।
स्वर्गं गच्छन्ति देवानां इत्येषा वैदिकी श्रुतिः॥
अन्यथा प्रतिपन्नास्तु विवृद्धाः स्वेषु कर्मसु।
पुनरावृत्तिधर्माणस्ते भवन्तीह मानुषाः॥
पापयोनिसमापन्नाश्चाण्डाला मूकचूचुकाः।
वर्णान् पर्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम्॥
शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः।
स्रोतोमध्यमनुप्राप्य वर्त्तन्ते तामसा गुणाः॥
अभिषङ्गस्तु कामेन महामोह इति स्मृतः।
ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः॥
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।

मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते ॥
भावतो गुणतश्चैव योनितश्चैव तत्वतः ।
सर्वमेतत्तमो विप्राः कीर्त्तयन्तो यथाविधि ॥
को न्वेतद्बुध्यते साधु को न्वेतत् साधु पश्यति ।
अतत्वे तत्वदर्शी यस्तमसस्तत्वलक्षणम् ॥
ततो गुणा वो बहवः प्रकीर्तिता यथावदुक्तश्च तमः परावरम् ।
नरो हि यो वेद गुणानिमान् सदा स तामसैः सर्वगुणैर्विमुच्यते ॥

ब्रह्मोवाच ।

रजो ऽहं संप्रवक्ष्यामि याथातथ्येन सत्तमाः ।
निबोधत महाभाग गुणवृत्तं च सर्वशः ॥
सन्तापो दर्पमायासः सुखदुःखे हिमातपौ ।
ऐश्वर्य्यं निग्रहः सिद्धिर्हेतुवादो रतिः क्षुधा ॥
बलं शौर्यं मदो रोषो व्यायामकलहावपि ।
ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनम् ॥
वधबन्धपरिक्लेशाः क्रयो विक्रय एव च ।
निकृतिः छिन्धि भिन्धीति परमर्मावकर्त्तनम् ॥
उग्रताडनमाक्रोशपरिवित्तानुरागता ।
लोकचिन्ता विचिन्ता च मत्सरः परिभाषणम् ॥
मृषाचोद्यमृषावादो विकल्पपरिभाषणम् ।
निन्दा स्तुतिः प्रशंसा च प्रतापः परिदर्पणम् ॥
परिचर्या च शुश्रूषा सेव तृष्णा व्यपाश्रयः ।
मूढोऽनयः प्रवादश्च परितापः प्रतिग्रहः ॥
संस्कारा ये च लोकेऽस्मिन् प्रवर्त्तन्ते पृथक् पृथक् ।
नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च ॥

सन्तापः प्रत्ययश्चैव व्रतानि नियमाश्च ये ।
प्रदानमाशीर्युक्तं च सततं मे भवत्विति ॥
स्वधाकारो नमस्कारः स्वाहाकारो वषट्क्रिया ॥
याजनाध्ययने चोभे तथैवाहुः प्रतिग्रहम् ।
प्रतिग्रहमिदं मे स्यात् स्नेहो गुणसमुद्भवः ॥
अभिद्रोहस्तथा मानो निकृतिर्मानमेव च ।
स्तेयं हिंसा परीवादः परितापः प्रजागरः ॥
दम्भो दर्पोऽभिमानश्च भक्तिः प्रीतिः प्रमोदनम् ।
द्यूतं च जनवादश्च सम्बन्धाः स्त्रीकृताश्च ये ॥
नृत्तवादित्रगीतानि प्रसङ्गा ये च केचन ।
सर्वे एते गुणा विप्र राजसाः संप्रकीर्त्तिताः ॥
भूतभव्यभविष्याणां भूतानां भुवि भावनात् ।
त्रिवर्गनिरता नित्यं धर्मोऽर्थः काम एव च ॥
कामवृत्ताः प्रमोदन्ते सर्वकामसमृद्धिभिः ।
अर्वाक्स्रोतस इत्येव ते जना रजसा वृताः ॥
अस्मिंल्लोके प्रमोदन्ते जायमानाः पुनः पुनः ।
प्रेत्यभाविकमिच्छन्ति ऐहलौकिकमेव च ॥
नरो हि यो वेद सदा गुणानिमान्
स राजसैः सर्वगुणैर्विमुच्यते ॥

ब्रह्मोवाच ।

अतः परं प्रवक्ष्यामि तृतीयं गुणमुत्तमम् ।
सर्वभूतहितं लोके सतां धर्ममनिन्दितम् ॥
आनन्दः प्रीतिरुद्रेकः प्राकाश्यं सुखमेव च ।
अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता ॥

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
अक्रोधश्चानसूया च शौर्यं राज्यं पराक्रमः ॥
मुधाज्ञानं मुधावृत्तं मुधासेवा मुधाऽश्रयः ।
एवं यो नित्यमुक्तः स्यात् सोऽमुत्रानन्त्यमश्नुते ॥
निर्ममो निरहङ्कारो निराशीः सर्वतः समः ।
अकामहत इत्येषः सतां धर्मः सनातनः ॥
विश्रम्भो ह्रीस्तितिक्षा च त्यागः शौचमतन्द्रिता ।
आनृशंस्यमसंमोहो दया दानेष्वपैशुनम् ॥
हर्षस्तुष्टिर्विस्मयश्च विनयः साधुवृत्तता ।
शान्तिः कर्मविशुद्धिश्च शुभा बुद्धिर्विमोचनम् ॥
उपेक्षा ब्रह्मचर्यं च परित्यागश्च सर्वशः ।
निर्ममत्वमनाशीस्त्वमपरिक्रीतकर्मता ॥
मुधासनं मुधा यज्ञो मुधाऽधीतं मुधाव्रतम् ।
मुधा प्रतिग्रहश्चैव मुधा धर्मो मुधा तपः ॥
एवंविधास्तु ये केचिल्लोकेऽस्मिन् सत्वसंश्रयाः ।
ब्राह्मणा ब्रह्मयोनिस्थास्ते धीराः साधुदर्शिनः ॥
हित्वा पापानि स सर्वाणि निःशोको ह्यजरामरः ।
दिव्यं प्राप्यन्तु ये धीराः कुर्वते वै ततस्ततः ॥
ईशित्वं च वशित्वं च प्राकाम्यं मानसस्य ते ।
विकुर्वन्तो महात्मानो देवास्त्रिदिवगा इव ॥
ऊर्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः ।
विकुर्वते प्रकृत्या वै दिवं प्राप्तास्ततस्ततः ॥
यद्यदिच्छन्ति तत्सर्वं भजन्ते विभजन्ति च ।
इत्येतत् सात्विकं वृत्तं कथितं वो द्विजर्षभाः ॥

एतद्धिताय विधिवल्लभ्यते यद्यदिच्छति।
प्रकीर्त्तिताः सत्वगुणा विशेषतो यथावदुक्तं गुणवृत्तमेव तत् ॥
नरस्तु यो वेद सदागुणानिमान् गुणान् स भुङ्क्ते न गुणैस्तु भुज्यते।

ब्रह्मोवाच।

नेह शक्या मया वक्तुं पृथक्त्वेनेह सर्वशः।
अविच्छिन्ना निवर्त्तन्ते रजः सत्वं तमः सदा ॥
अन्योन्यमनुषज्यन्ते त्वन्योन्यस्यानुजीविनः।
अन्योन्यस्याश्रयाः सर्वे तथान्योन्यानुवर्त्तिनः ॥
न हि सत्वात् परो भावः कश्चिदन्यो विधीयते।
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ॥
जघन्यगुणयुक्तास्तु यान्त्यधस्तामसा जनाः।
तमः शूद्रे रजः चत्रे ब्राह्मणे सत्वमुत्तमम् ॥
इत्येते त्रिषु वर्णेषु प्रवर्त्तन्ते गुणास्त्रयः।
दूरादपि दृश्यन्ते संहिताः संचचारिणः ॥
तमः सत्त्वं रजश्चैव पृथक्त्वं नानुशुश्रुमः।
त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्त्तते ॥
त्रिधा लोकास्त्रिधा वेदास्त्रिधा वेद्यास्त्रिधा गतिः।
भूतं भव्यं भविष्यच्च धर्मार्थः काम एव च ॥
प्राणापानावुदानश्चाप्येत एव गुणास्त्रयः।
यत्किंचिदिह लोकेऽस्मिन् सर्वमेष्वेव तु त्रिषु ॥
त्रयो गुणाः प्रवर्त्तन्ते अव्यक्ता नित्यमेव तु।
सत्वं रजस्तमश्चैव गुणसर्गः सनातनः ॥
तदव्यक्तं शिवं नित्यमजं योनिः सनातनम्।
प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाव्ययौ ॥

अनुद्रिक्तमनूनं वाप्यकम्प्यमचलं ध्रुवम् ।
सदसच्चैव तन्नित्यमव्यक्तं त्रिगुणं स्मृतम् ॥
ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ।
अव्यक्तनामानि गुणांश्च तत्त्वतो यो वेद सर्वाा हि गतीश्च केवलाः ।
विमुच्य देहं प्रविभागतत्त्ववित् स मुच्यते सर्वगुणैरनामयः ॥

ब्रह्मोवाच ।

अव्यक्तात् पूर्वमुत्पन्नो महानात्मा प्रजापतिः ।
आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते ॥
महानात्मा विभुर्विष्णुः प्रभुः शंभुश्च वीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च संवित् ख्यातिर्धृतिः स्मृतिः ॥
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते ।
तज्ज्ञानात् ब्राह्मणो विद्वान् न च मोहं निगच्छति ॥
सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वं व्याप्य च तिष्ठति ॥
ज्ञानवन्तश्च ये केचिदलुब्धजितमन्यवः ।
प्रसन्नमनसो धीरा निर्ममा निरहंकृताः ॥
विमुक्ताः सर्व एवैते महत्त्वमुपयान्ति वै ।
आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम् ॥
स धीरः सर्वलोकेषु तमोहमधिगच्छति ।
विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः ॥
एवं हि यो वेद गुणाश्रयं प्रभुं नरः पुराणं परमं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ॥

ब्रह्मोवाच ।

यदुत्पन्नो महान् पूर्वमहङ्कारः स उच्यते ।
अहमित्येव संभूतो द्वितीयः सर्ग उच्यते ॥

स तद् ब्रह्म शुभं याति यस्माद्भूतं न विद्यते ।
एकादश च यान्याहुरिन्द्रियाणि विशेषतः ॥
अहङ्कारप्रसूतानि तानि वक्ष्याम्यहं द्विजाः ।
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ॥
पादौ पायुरुपस्थं च हस्तौ वाग्दशमी भवेत् ।
इन्द्रियग्राम इत्येष मन एकादशं भवेत् ॥
एनं ग्रामं त्यजेत् पूर्वं ततो ब्रह्म प्रकाशते ।
बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्मेन्द्रियाणि च ॥
श्रोत्रादीनि च पञ्चाहुर्बुद्धियुक्तानि तत्त्वतः ।
अवशेषाणि चान्यानि कर्मयुक्तानि तानि तु ॥
उभयत्र मनो ज्ञेयं बुद्धिश्च द्वादशी भवेत् ।
इत्युक्तानीन्द्रियाणीमान्येकादश मया क्रमात् ॥
मन्यन्ते कृतमित्येव विदित्वेमानि पण्डिताः ।
त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते ॥
स्थलमापस्तथाकाशं जन्म चापि चतुर्विधम् ।
अण्डजोद्भिज्जसंस्वेदजरायुजमथापि वा ॥
चतुर्धा जन्म इत्येतद्भूतग्रामस्य वक्ष्यते ।
धर्मकामाश्च राजानो ब्राह्मणा धर्मलक्षणाः ॥
तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे ।
राज्ञां हि विषये येषामवसीदन्ति साधवः ॥
भीतास्ते स्वगुणैः सर्वे प्रेत्याऽवाङ्मार्गगामिनः ।
राज्ञां तु विषये येषां साधवः परिरक्षिताः ।
तस्मिंल्लोके प्रमोदन्ते प्रेत्य चानन्त्यमेव हि ॥
आप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः ।

अहिंसालक्षणो धर्मो हिंसा चाधर्मलक्षणा ॥
प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः।
स्वरव्यञ्जनसंस्कारा भारती सत्यलक्षणा ॥
मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वया।
मनसा चिन्तमानोऽर्थान् बुद्धिश्चैव व्यवस्यति ॥
बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः।
लक्षणं महतो ध्यानमव्यक्तं साम्यलक्षणम् ॥
प्रवृत्तलक्षणो योगो ज्ञानं संन्यासलक्षणम्।
तस्माद् ज्ञानं पुरस्कृत्य संन्यासमिह बुद्धिमान् ॥
संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम्।
अतीतद्वन्द्वमभ्येति तमो जन्मजरातिगम् ॥
मनसस्तु गुणश्चिन्ता प्रज्ञया स तु गृह्यते।
हृदिस्थश्चेतनाधातुर्मनो ज्ञाने विधीयते ॥
बुद्धिरव्यवसायेन ध्यानेन च महांस्तथा।
निश्चित्य ग्रहणं नित्यमव्यक्तं नात्र संशयः ॥
अलिङ्गग्रहणे नित्यः क्षेत्रज्ञो निर्गुणात्मकः।
तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ॥
अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवोऽव्ययः।
सदा पश्याम्यहं लीनं विसृजामि शृणोमि च ॥
पुरुषस्तद्विजानीते तस्माद् क्षेत्रज्ञ उच्यते।
गुणवृत्तं तथा सर्वं क्षेत्रज्ञः परिपश्यति।
आदिमध्यावसानान्तं सृज्यमानमचेतनम् ॥
न गुणा विदुरात्मानं सृज्यमानं पुनः पुनः।
न सत्वं वेत्ति वै किंचित् क्षेत्रज्ञस्त्वेव वेत्ति हि ॥

गुणानां गुणभूतानां यत्परं परतो महत् ।
तस्माद् गुणांश्च तत्वं च परित्यज्येह तत्ववित् ॥
क्षीणदोषो गुणान् हित्वा क्षेत्रज्ञं प्रविशत्यथम् ।
निर्द्वन्द्वो निःसंस्कारो निःस्वाहाकार एव च ॥
अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विभुः ।
कालचक्रप्रवृत्तिं च निवृत्तिश्चैव तत्वतः ॥
ज्ञात्वा वेदपरो नित्यं न स भूतेषु मुह्यति ।
विमुक्तः सर्वसंक्लेशैः सर्वद्वन्द्वातिगो मुनिः ॥
विमुक्तिः सर्वपापेभ्यः प्राप्नोति परमाङ्गतिम् ।
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ॥
चत्वारश्चाश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः ।
यः कश्चिदिह लोके वाप्याश्रमः संप्रकीर्त्तितः ॥
तस्यान्तगमनं श्रेयः कीर्तिरेषा सनातनी ।
संस्कारैः संस्कृतः पूर्वं यथावच्च कृतव्रतः ॥
जातो गुणविशिष्टायां समावर्त्तेत वेदवित् ।
स्वदारनिरतो दान्तो शिष्टाचारो जितेन्द्रियः ॥
पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेत ह ।
देवतातिथिशिष्टाशी निरतो वेदकर्मसु ॥
इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि ।
अधीत्याध्यापनं कुर्यात्तथा यजनयाजने ॥
दानं प्रतिग्रहं चैतां षड्गुणां वृत्तिमाश्रयेत् ।
त्रीणि कर्माणि यानीह ब्राह्मणानां तु जीविका ॥
याजनाध्यापने चोभे शुद्धश्चापि प्रतिग्रहः ।
अवशेषाणि चान्यानि त्रीणि कर्माणि यानि तु ॥
दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु ।

तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु कर्मकृत् ॥
दान्तो युक्तः क्षमायुक्तः सर्वभूतसमो मुनिः ।
एवं युक्तो जयेत् स्वर्गं गृहस्थः शंसितव्रतः ॥
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽपि वा पुनः ।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् ॥
अभयं सर्वभूतेभ्यो दत्त्वा वै धर्ममाचरेत् ।
यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकः ॥
धर्मलब्धं तथाश्नीयान्न काममनुवर्त्तयेत् ।
ग्रासादाच्छादनादन्यं न गृह्णीयात् कथंचन ॥
नाददीत परस्वानि न गृह्णीयादयाचितम् ।
न शिल्पिजीविकां जीवेद्विरामं कामयेत वा ॥
कृत्वा मौनं चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ।
वृत्ते शरावसम्पाते भैक्ष्यं लिप्सेत मोक्षवित् ॥
लाभे तु न च हृष्येत नालाभे विमना भवेत् ।
अतिपूजितलाभाद्धि विजिगुप्सेत पण्डितः ॥
भुक्तान्यम्लानि तिक्तानि कषायकटुकानि च ।
नास्वादयेत भुञ्जानो रसांश्च मधुरांस्तथा ॥
असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित् ।
शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ॥
प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ।
ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ॥
सञ्चयांश्च न कुर्वीत स्नेहभावं विवर्जयेत् ।
इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ॥
क्षीणेन्द्रियमनोबुद्धिर्निरीहेत जितेन्द्रियः ।

निर्द्वन्द्वो निर्नमस्कारो निःस्वाहाकार एव च ॥
निर्ममो निरहङ्कारो निर्योगक्षेम एव च ।
निश्चितः सर्वभूतेषु निरासङ्गो निराश्रमः ॥
सर्वज्ञः सर्वतो मुक्तो मुच्यते नात्र संशयः ।
निश्चिन्त्य मध्यमं नित्यं हृदिस्थमपि सर्वदा ॥
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ।
विमुक्तः सर्वसङ्गेभ्यो वायुराकाशगो यथा ॥
क्षीणकोशो निरातङ्कः प्राप्नोति परमाङ्गतिम् ।
छित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम् ॥
उभे सत्यानृते त्यक्त्वा मुच्यते नात्र संशयः ।
आहुरेके महात्मानो ये ज्ञानेषु प्रतिष्ठिताः ॥
क्षेत्रज्ञं सत्वयोरैक्यमित्येतन्नोपपद्यते ।
पृथग्भूतं ततो नित्यमित्येतदविचारितम् ॥
विषयो विषयित्वं च सम्बन्धत्वमिहोच्यते ।
विषयी पुरुषो नित्यं सत्वं च विषयः स्मृतः ॥
मशकोदुम्बुरेत्वैक्यं पृथक्त्वमपि दृश्यते ।
मत्स्यो यथान्यः स्यादप्सु सम्प्रयोगस्तथानयोः ॥
सम्बन्धस्तोयबिन्दूनां पर्णैः कोकनदस्य च ।
भुज्यमानं न जानीते नित्यं सत्वमचेतनम् ॥
ज्ञातैव तु विजानाति यो भुङ्क्ते यच्च भुज्यते ।
अनित्यद्वन्द्वसंयुक्तं सत्वमाहुर्गुणात्मकम् ॥
निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ।
समासज्ञानतत्वेन यदा सर्वत्र दृश्यते ॥
सर्वैरपि गुणैर्विद्वान् व्यतिषक्तो न लिप्यते ।

यथा द्रव्यं च कर्त्ता च संयोगो ह्यनयोस्तथा ॥
यथा प्रदीपमादाय कश्चित्तमसि गच्छति ।
तथा सत्वप्रदीपेन गच्छन्ति परमर्षयः ॥
यावद्द्रव्यगुणस्तावत् सत्वतः संप्रकाशते ।
क्षीणद्रव्यगुणं ज्योतिरन्तर्ध्यानं न गच्छति ॥
व्यक्तः सत्वगुणस्त्वेवं पुरुषोऽव्यक्त उच्यते ।
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः ॥
सहस्रेणापि दुर्मेधा निवृत्तिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान् सुखमेधते ॥
एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ॥
यथा च दीर्घमध्वानं पद्भ्यामेव प्रपद्यते ।
अदृष्टपूर्वं सहसा तत्वदर्शनवर्जितः ॥
तथैव च तदध्वानं रथेनेहाशुगामिना ।
यायादश्वप्रयुक्तेन तथा बुद्धिमतां गतिः ॥
एवं गच्छति मेधावी तत्वतो मोक्षधर्मवित् ।
समाज्ञाय महाबुद्धे उत्तरादुत्तरोत्तरम् ॥
यथा महार्णवं घोरमप्लवः संप्रगाहते ।
बाहुभ्यामेव संमोहाद्धधमृच्छत्यसंशयम् ॥
नौकया च विगाहज्ञो विभागज्ञस्त्वरित्रया ।
अक्लान्तः सलिलङ्गाहेत् क्षिप्रं स तरति ध्रुवम् ॥
तीर्णो गच्छेत् परं पारं नावमुत्सृज्य निर्ममः ।
तथा कर्मसु विज्ञेयं फलं भवति वा न वा ॥
पुरुषस्यात्मनि श्रेयः शुभाशुभनिदर्शनः ।

यथा कर्म कृतं लोके तथा तदुपपद्यते ॥
भूतानामथ पञ्चानामथैषामीश्वरं मनः।
नियमे च विसर्गे च भूतानां मन एव वा ॥
अधिष्ठाता मनो नित्यं भूतानां महतां तथा।
बुद्धिमैश्वर्यमाचष्टे क्षेत्रज्ञः सर्व उच्यते ॥
इन्द्रियाणि मनो युक्तः सदश्वानिव सारथिः।
इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञो हि युनक्ति वै ॥
महाभूतसमायुक्तं बुद्धिः संयमनं रथम्।
यमारुह्य स भूतात्मा समन्तात् परिधावति ॥
इन्द्रियग्रामसंयुक्तो मनः सारथिरेव च।
मनः संयमने नित्यं महाब्रह्ममयो रथः ॥
एवं यो वेत्ति विद्वान् वै सदा ब्रह्ममयं रथम्।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्।
ममेति तु भवेन्मृत्युर्न ममेति च शाश्वतम् ॥
कर्म केचित् प्रशंसन्ति कर्मबुद्धिरता नराः।
ये तु बुद्धा महात्मानो न प्रशंसन्ति कर्म ते।
कर्मणा जायते जन्तुर्मूर्त्तिमत् षोडशात्मकः ॥
पुरुषं सृजतेऽविद्या त्वग्राह्यमविनाशिनम्।
तस्मात् कर्मसु निःस्नेहा ये केचित् पारदर्शिनः ॥
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः।
समेन सर्वभूतेन निस्पृहेण निरामिषा ॥
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना।
एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः ॥

एवं ज्ञात्वा यतः क्षिप्रं ततः सिद्धिमवाप्स्यथ ।

गुरुरुवाच ।

इत्युक्ता गुरुणा तेन मुनयो ब्रह्मणा तथा ।
कृतवन्तो महात्मानस्तथा लोकानवाप्नुवन् ॥
त्वमप्येवं महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचारशुद्धात्मा ततः सिद्धिमवाप्स्यसि ॥

श्रीभगवानुवाच ।

इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम् ।
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान् ॥
कृतकृत्यश्च सहसा शिष्यः कुरुकुलोद्वह ।
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति ॥
त्वमप्येतन्महाभाग यथोक्तं ब्रह्मणो वचः ।
सम्यगाचारशुद्धात्मा ततो मोक्षमवाप्स्यसि ॥

अर्जुन उवाच ।

को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन
ज्ञातव्यं चेन्मयैतद्वै तन्ममाचक्ष्व वै विभो ॥

श्रीभगवानुवाच ।

अहङ्गुरुर्महाभाग मनः शिष्यं च विद्धि मे ।
त्वत्प्रीत्या गुह्यमेतच्च कथितं वै धनञ्जय ॥
मयि चेदस्ति वै भक्तिर्नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा तु सम्यगाचर सुव्रत ॥
ततस्त्वं सम्यगाचारो धर्मेऽस्मिन् कुरुनन्दन ।
सर्वपापविशुद्धात्मा मोक्षमाप्स्यसि केवलम् ॥

पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तत्त्वं महाभाग तस्मादत्र मनः कुरु ॥

इति श्रीभक्तिसागरे अनुगीताख्यानं नाम पञ्चमस्तरङ्गः ।

युधिष्ठिर उवाच ।

धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव ॥

भीष्म उवाच ।

सर्वत्र विहितो धर्मः स्वर्गः सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥
यस्मिन् यस्मिंस्तु विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥
यथा यथा च पर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥
एवं व्यवसिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः ॥

युधिष्ठिर उवाच ।

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा सेनजितं विप्रः कश्चिदेत्याब्रवीत् सुहृत् ॥
पुत्रशोकाभिसन्तप्तं राजानं शोकविह्वलम् ।
विषण्णमनसं दृष्ट्वा विप्रो वचनमब्रवीत् ॥

किन्तु खल्वसि मूढस्त्वं शोच्यः किमनुशोचसि।
यदा त्वामपि शोचन्तः शोच्या यास्यन्ति तां गतिम्॥
त्वञ्चैवाहञ्च ये चान्ये त्वामुपासन्ति पार्थिव।
सर्वे तत्र गमिष्यामो यत एवागता वयम्॥

सेनजिदुवाच।

का बुद्धिः किं तपो विप्र कः समाधिस्तपोधन।
किं ज्ञानं किं श्रुतं चैव यत् प्राप्य न विसीदति॥

ब्राह्मण उवाच।

पश्यन्तमवसीदन्तं सुखदुःखविपर्य्यये।
आत्मानमनुशोचामि यो ममैष हृदि स्थितः।
पश्य भूतानि दुःखेन व्यतिषक्तानि सर्वतः॥
उत्तमाधममध्यानि तेषु तेष्विह कर्मसु॥
मोहजालेन बद्धानि दृष्ट्वा तानि ममाभवन्।
आत्मापि चायं न मम सर्वा वा पृथिवी मम॥
यथा मम तथान्येषामिति चिन्त्य न मे व्यथा।
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे॥
यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः॥
एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा।
तेषां स्नेहो न कर्तव्यो विप्रयोगो ध्रुवो हि तैः॥
अदर्शनादापतितः पुनश्चादर्शनं गतः।
न त्वसौ वेद न त्वं तं कः सन् किमनुशोचति।
तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम्।
सुखात् सञ्जायते दुःखं दुःखमेवं पुनः पुनः॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
सुखदुःखे मनुष्याणां चक्रवत् परिवर्त्तते॥
सुखी त्वं दुःखमापन्नः पुनरापत्स्यसे सुखम्॥
न नित्यं लभते दुःखं न नित्यं लभते सुखम्।
शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरम्॥
यद्यच्छरीरेण करोति कर्म तेनैव देही समुपाश्नुते तत्
जीवितं च शरीरं च जात्यैव सह जायते॥
उभे सह विवर्द्धेते उभे सह विनश्यतः।
नालं सुखाय सुहृदो नालं दुःखाय शत्रवः॥
न च प्रज्ञालमर्थानां न सुखानामलं धनम्।
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये॥
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः।
बुद्धिमन्तं च शूरं च मूढं भीरुं जडं कविम्॥
दुर्बलं बलवन्तञ्च भागिनं भजते सुखम्।
ये च मूढतमा लोके ये च बुद्धेः परङ्गताः॥
ते नराः सुखमेधन्ते क्लिश्यत्यन्तरितो जनः।
शोकस्थानसहस्राणि भयस्थानशतानि च॥
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्।
यन्निमित्तं भवेच्छोकस्तापो वा दुःखमेव वा॥
आयासो वा यतो मूलमेकाङ्गमपि तत्त्यजेत्।
यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्॥
तृष्णाक्षयसुखस्यैते कलां नार्हन्ति षोडशीम्।
पूर्वकृतं कर्म शुभं वा यदि वाशुभम्॥
प्राज्ञं मूढं तथा शूरं भजते यादृशं कृतम्।

किञ्चिदेव ममत्वेन यदा भवति कल्पितम् ॥
तदेव परितापार्थं सर्वं संपद्यते तथा।
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ॥
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा।
यदा न कुरुते धीरः सर्वभूतेषु पापकम् ॥
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा।
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्।
अत्र पिङ्गलया गीता गाथाः शृणुम पार्थिव ॥
यथा सा कृच्छ्रकालेऽपि लेभे धर्मं सनातनम्।
सङ्केते पिङ्गला वेश्या कान्ते नासीद्विना कृता ॥
अथ कृच्छ्रगता शान्तां बुद्धिमास्थाय यत्तदा।

पिङ्गलोवाच।

उन्मत्ताऽहमनुन्मत्तं कान्तमन्ववसच्चिरम्।
अन्तिके रमणं शान्तं नैनमध्यगमं पुरा ॥
एकस्थूलं नवद्वारमपिधास्याम्यगारकम्।
या हि कान्तमिहायान्तमयं कान्तेति मंस्यते ॥
अकामाः कामरूपेण धूर्ता नरकरूपिणः।
न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धाऽस्मि जागृमि ॥
अनर्थो हि भवेदर्थो दैवात् पूर्वं कृतेन च।
संबुद्धाऽहं निराकारा नाहमद्याजितेन्द्रिया ॥
सुखं निराशः स्वपिति नैराश्यं परमं सुखम्।
आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ॥

भीष्म उवाच ।

एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः सुभाषितैः ।
पर्यवस्थापितो राजा सेनजिन्मुमुदे सुखी ॥
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ।
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् ॥
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ।
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ॥
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा ऽकृतम् ।
को हि जानाति कस्याद्य मृत्युकालो भविष्यति ॥
युवैव धर्मशीलः स्यादनित्यं खलु जीवितम् ।
कृते धर्मे भवेत्कीर्त्तिरिह प्रेत्य च वै सुखम् ॥
सञ्चिन्वानकमेवैकं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।
एवमीहासुखासक्तं कृतान्तः कुरुते वशे ॥
अमृतञ्चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।
मृत्युरापद्यते मोहात् सत्येनापद्यतेऽमृतम् ॥
यस्य वाङ्मनसी स्यातां सम्यक् प्रणिहिते सदा ।
तपस्त्यागश्च योगश्च स वै धर्ममवाप्नुयात् ॥
नास्ति विद्यासमो बन्धुर्नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥
अकिञ्चनः सुखं शेते समुत्तिष्ठति चैव हि ।
आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् ॥
अकिञ्चनस्य शुद्धस्य उपपन्नस्य सर्वशः ।

अवेक्षमाणस्त्रींल्लोकान्न तुल्यमिह लक्षये ॥
आकिञ्चन्यञ्च राज्यञ्च तुलया समतोलयम्।
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम् ॥
आकिञ्चन्ये च राज्ये च विशेषः सुमहानयम्।
नित्योद्विग्नो हि धनवान् मृत्योरास्यगतो यथा ॥
नैवास्याग्निर्न वाऽऽदित्यो न मृत्युर्न च दस्यवः।
प्रभवन्ति धनत्यागाद्विमुक्तस्य निराशिषः ॥
तं वै सदा कामचरमनुपस्तीर्णशायिनम्।
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥
धनवान् क्रोधलोभाभ्यामाविष्टो नष्टचेतनः।
तिर्यगक्षः शुष्कमुखः पापको भ्रुकुटीमुखः ॥
निर्दशन्नधरोष्ठञ्च क्रुद्धो दारुणभाषिता।
कस्तमिच्छेत् परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥
श्रियो ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम्।
सा तस्य चित्तं हरति शारदाभ्रमिवानिलः ॥
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः।
इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रमाद्यति ॥
सम्प्रसक्तमना भोगान् विसृज्य पितृसञ्चितान्।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥
तमतिक्रान्तमर्यादमाददानं ततस्ततः।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥
एवमेतानि दुःखानि तानीमानीह मानवम्।
विविधान्युपपद्यन्ते गात्रसंस्पर्शजान्यपि ॥
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत्।

नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ॥
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भवेत् ।
इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ॥
शम्याकेन पुरा मह्यं तस्मात्त्यागः परो मतः ।

भीष्म उवाच ।

सर्वसाम्यमनायासः सत्यवाक्यञ्च भारत ।
निर्वेदश्चाविधित्सा च यस्य स्यात् स सुखी नरः ॥
एतान्येव पदान्याहुः यं च वृद्धाः प्रशान्तये ।
एष स्वर्गश्च धर्मश्च सुखञ्चानुत्तमं मतम् ॥
तस्मान्निर्वेदमेवेह गन्तव्यं सुखमिच्छता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥
अहो सम्यक् शुकेनोक्तं सर्वतः परिमुच्यता ।
प्रतिष्ठता महारण्यं जनकस्य निवेशनात् ॥
यः कामानाप्नुयात् सर्वान् यश्चैतान् केवलांस्त्यजेत् ।
प्रापणात् सर्वकामानां परित्यागो विशिष्यते ।
नान्तं सर्वविधित्सानां गतपूर्वोऽस्ति कश्चन ॥
शरीरे जीविते चैव तृष्णा मन्दस्य जायते ।
किन्त्वेवं जातु पुरुषः परेषां प्रेष्यतामियात् ॥
न पूर्वे नापरे जातु कामानामन्तमाप्नुवन् ।
धनमस्येति पुरुषं यूनो निघ्नन्ति दस्यवः ॥
क्लिश्यन्ति विविधैर्दण्डैर्नित्यमुद्वेजयन्ति च ।

भीष्म उवाच ।

अत्राऽप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं विदेहराजेन जनकेन महात्मना ॥

अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चित् प्रदह्यति ॥
पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने ।
इषुकारः कुमारी च षडेते गुरवो मम ॥
सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः ।
आमिषस्य परित्यागात् कुररः सुखमेधते ॥
गृहारम्भोऽतिदुःखाय न सुखाय कदाचन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥
सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः ।
अद्रोहेणैव भूतानां सारङ्गा इव पक्षिणः ॥
इषुकारो नरः कश्चिदिषावाहितमानसः ।
समीपे नापि गच्छन्तं राजानं नाववुद्धवान् ॥
बहूनां कलहो नित्यं द्वयोर्वार्त्ता भवेदपि ।
एकाकी विचरिष्यामि कुमारी शङ्खको यथा ॥

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥
व्रजन्तं ब्राह्मणं कंचित्कल्पवित्तमनामयम् ।
पप्रच्छ राजा प्रह्लादो बुद्धिमान् बुद्धिसम्मतम् ॥

प्रह्लाद उवाच ।

स्वस्थः शक्तो मृदुर्दान्तो निर्विधित्सोऽनसूयकः ।
सतां बहुमतो लोके प्राज्ञश्चरसि बालवत् ॥
नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि ।
नित्यतृप्त इव ब्रह्मन् न किंचिदवमन्यसे ॥

इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ।
का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा कुरुते मुने ॥
क्षिप्रमाचक्ष्व मे ब्रह्मन् श्रेयो यदिह मन्यसे ।
अनुयुक्तः स मेधावी लोकधर्मविधानवित् ॥
उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ।
पश्यन् प्रह्लादभूतानामुत्पत्तिमनिमित्ततः ॥
ह्रासं वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे ।
स्वभावादेव संदृश्य वर्तमानाः प्रवृत्तयः ॥
स्वभावनिरताः सर्वाः परितुष्ये न केनचित् ।
पश्य प्रह्लादसंयोगान् विप्रयोगपरायणान् ॥
सञ्चयांश्च विनाशान्तान् न क्वचिद्विदधे मनः ।
अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः ॥
उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते ।
जलजानामपि ह्यन्तं पर्यायेनोपलक्षये ॥
महतामपि कायानां सूक्ष्माणां च महोदधौ ।
जङ्गमस्थावराणां च भूतानामसुराधिप ॥
पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः ।
अन्तरिक्षचराणां च दानवोत्तमपक्षिणाम् ॥
उत्तिष्ठते यथाकालं मृत्युर्बलवतामपि ।
दिवि सञ्चरमाणानि ह्रस्वानि च महान्ति च ॥
ज्योतींष्यपि यथाकालं पतमानानि लक्षये ।
इति भूतानि संपश्यन्ननुषक्तानि मृत्युना ॥
सर्वसामान्यगो विद्वान् कृतकृत्यः सुखं स्वपे ।
सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया ॥

शये पुनरभुञ्जानो दिवसानि बहून्यपि ।
आश्रयत्यपि मामन्नं पुनर्बहुगुणं बहु ॥
पुनरल्पं पुनः स्तोकं पुनर्नैवोपपद्यते ।
कणान् कदाचित् खादामि पिण्याकमपि च ग्रसे ॥
भक्षये शालिमांसानि भक्ष्यांश्चोच्चावचान् पुनः ।
शये कदाचित् पर्यङ्के भूमावपि पुनः शये ॥
प्रासादे वाऽपि मे शय्या कदाचिदुपपद्यते ।
धारयामि च चीराणि शाणक्षौमाजिनानि च ॥
महार्हाणि च वासांसि धारयाम्यहमेकदा ।
कदाचित् पतितं धर्मं उपभोग्यं यदृच्छया ॥
प्रत्याचक्षे नवाप्येनमनुरुन्धे सुदुर्लभम् ।
अनियतशयनाशनः प्रकृत्या दमनियमव्रतसत्यशौचयुक्तः ।
अपगतफलसंचयः प्रहृष्टो व्रतमिदमाजगरं शुचिश्चरामि ॥

भीष्म उवाच ।

अजगरचरितं व्रतं महात्मा य इह नरोऽनुचरेद्विनीतरागः ।
अपगतभयलोभमोहमन्युः स खलु सुखी विचरेदिमं विहारम् ॥

प्रह्लादाजगरसंवादः ।

भीष्म उवाच ।

प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञालाभः परो मतः ।
प्रज्ञा निःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम् ॥
प्रज्ञया प्रापितोऽर्थोऽभूद्बलिरैश्वर्यसंक्षये ।
प्रह्लादो नमुचिर्मङ्किः तस्याः किं विद्यते परम् ॥
आत्मनानर्थयुक्तेन पापे निवसते मनः ।
स्वकर्म-कलुषं कृत्वा कृच्छ्रलोके विधीयते ॥

दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकारिणः ॥
उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ॥
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ।
सुशीघ्रमपि धावन्तं विधानमनुधावति ॥
शेते सह शयानेन येन येन यथा कृतम् ।
उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।
करोति कुर्वतः कर्म छायेवानुविधीयते ॥
येन येन यथा यद्यत् पुरा कर्म समीहितम् ।
तत्तदेव नरो भुङ्क्ते नित्यं विहितकर्मणा ॥
स्वकर्मफलनिक्षेपं विधानपरिरक्षितम् ।
भूतग्राममिमं कालः समन्तात् परिकर्षति ॥
अनोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥
सम्मानश्चावमानश्च लाभालाभौ क्षयोदयौ ।
प्रवृत्तावनुवर्तन्ते विधानान्ते पुनः पुनः ॥
आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भुज्यते पौर्वदैहिकम् ॥
बालो युवा च वृद्धश्च यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत् फलं प्रतिपद्यते ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥
समुन्नमग्रतो वस्त्रं पश्चाच्छुद्ध्यति कर्मणा ।

उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम्॥
दीर्घकालेन तरसा सेवितेन तपोवने।
धर्मनिर्धूतपापानां संपद्यन्ते मनोरथाः॥
शकुनानामिवाकाशे मत्स्यानामिव चोदके।
पदं यथा न दृश्येत तथा ज्ञानविदां गतिः॥
अलमन्यैरुपालब्धैः कीर्तितैश्च व्यतिक्रमैः।
पेशलं चानुरूपञ्च कर्त्तव्यं हितमात्मनः॥

भरद्वाज उवाच।

ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम।
वैश्यः शूद्रश्च विप्रर्षे तद् ब्रूहि वदतां वर॥

भृगुरुवाच।

जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः।
वेदाध्ययनसंपन्नः षट्सु कर्मस्ववस्थितः॥
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते॥
सत्यं दानमथोऽक्रोध आनृशंस्यं क्रिया घृणा।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः॥
क्षेत्रजं सेवते कर्म वेदाध्ययनसङ्गतः।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते॥
वणिज्या पाशुपाल्यं च कृष्यादानरतिः शुचिः।
वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः॥
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥
शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते।

न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत् पवित्रं ज्ञानानां तथा चैवात्मसंयमः ॥
वार्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुच्छ्रितौ ।
नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात् ॥
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ।
यस्य सर्वे समारम्भा निराशीर्बन्धनाद्द्विज ॥
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ।
अहिंसः सर्वभूतानां मैत्रायणगतिं चरेत् ॥
परिग्रहान् परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः ।
अशोकं स्थानमातिष्ठेदिह चामुत्र चाभयम् ॥
तपो नित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥
सुखं वै ब्राह्मणो ब्रह्म निर्वेदेनाधिगच्छति ।
शौचेन सततं युक्तः सदाचारसमन्वितः ॥
सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम् ।
सत्यं ब्रह्म तपः सत्यं सत्यं विसृजति प्रजाः ॥
सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति ।
अनृतं तमसो रूपं तमसा नीयते ह्यधः ॥
तमोग्रस्ता न पश्यन्ति प्रकाशं तमसावृताः ।
स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च ॥
सत्यानृतं तदुभयं प्राप्यते जगतीचरैः ।
तथाप्येवंविधा वृत्तिः लोके सत्यानृते भवेत् ॥
शारीरमानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः ।

लोकसृष्टिं प्रपश्यन्ति न मुह्यन्ति विचक्षणाः॥
सुखं च नित्यं भूतानामिह लोके परत्र च ।
राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते॥
तथा तमोऽभिभूतानां भूतानां नश्यते सुखम्।
व्रतेन शाम्यते पापं स्वाध्याये शान्तिरुत्तमा॥
दानेन भोगा नित्याहुस्तपसा स्वर्गमाप्नुयात्।
दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च॥
सद्भ्यो यद्दीयते किंचित्तत्परत्रोपतिष्ठते।
असद्भ्यो दीयते किंचित्तद्दानमिह भुज्यते॥
यादृशं दीयते दानं तादृशं फलमश्नुते।
स्वधर्मचरणे युक्ता ये भवन्ति मनीषिणः॥
तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यति।

## भृगुभरद्वाजसंवादः।

### भीष्म उवाच।

हन्त वक्ष्यामि ते पार्थ ध्यानयोगं चतुर्विधम्।
यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्तीह महर्षयः॥
यथा स्वनिष्ठितं ध्यानं तथा कुर्वन्ति योगिनः।
महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः॥
नावर्त्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः।
जन्मदोषपरिक्षीणा स्वभावे पर्यवस्थिताः॥
निर्द्वन्द्वा नित्यसत्त्वस्था विमुक्ताः निष्परिग्रहाः।
असंगान्यविवादीनि मनःशान्तिकराणि च।
तत्र ध्यानेन संश्लिष्टमेकाग्रं धारयेन्मनः॥
पिण्डीकृतेन्द्रियग्राममासीनः काष्ठवन्मुनिः।

शब्दं न विन्देच्छ्रोत्रेण त्वचा स्पर्शं न विन्दयेत्॥
रूपं न चक्षुषा विन्द्याज्जिह्वया न रसांस्तथा।
घ्रेयाण्यपि च सर्वाणि जह्याद्ध्यानेन योगवित्॥
पञ्चवर्गप्रमाथीनि नेच्छेदेतानि वीर्यवान्।
ततो मनसि संगृह्य पञ्चवर्गं विचक्षणः॥
समादध्यात्मनो भ्रान्तमिन्द्रियैः सह पञ्चभिः।
विसञ्चारी निरालम्बं पञ्चद्वारं चलाचलम्॥
पूर्वं ध्यानपथे धीरः समादध्यान्मनोऽन्तरा।
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम्॥
एष ध्यानपथः पूर्वो मया समनुवर्णितः।
तस्य तत्पूर्वसंरुद्धमात्मनः षष्ठमान्तरम्॥
स्फुरिष्यति समुद्भ्रान्ता विद्युदन्धकारे यथा।
जलबिन्दुर्यथा लोलः पर्णस्थः सर्वतश्चलः॥
एवमेवास्य चित्तञ्च भवति ध्यानवर्त्मनि।
समाहितं क्षणं किञ्चिद्ध्यानवर्त्मनि तिष्ठति॥
पुनर्वायुपथं भ्रान्तं मनो भवति वायुवत्।
अनिर्वेदो गतक्लेशो गततन्द्रो नमत्सरी॥
समादध्यात् पुनश्चेतो ध्यानेन ध्यानयोगवित्।
विचारश्च विवेकश्च वितर्कश्चोपजायते॥
मुनेः समादधानस्य प्रथमं ध्यानमादितः।
मनसा क्लिश्यमानस्तु समाधानं च कारयेत्॥
न निर्वेदं मुनिर्गच्छेत् कुर्यादेवात्मनो हितम्।
पांशुभस्मकरीषाणां यथा वै राशयश्चिताः॥
सहसा वारिणा सिक्ता न यान्ति परिभावनाम्।

किञ्चित् स्निग्धं यथावत्स्याच्छुष्कचूर्णमधावितम् ॥
क्रमशस्तु शनैर्गच्छेत् सर्वं तत्परिभावनम् ।
एवमेवेन्द्रियग्रामं शनैः सम्परिभावयेत् ।
संहरेत् क्रमशश्चैव स सम्यक् प्रशमिष्यति ।
स्वयमेवं मनश्चैव पञ्चवर्गं च भारत ॥
पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति ।
न तत्पुरुषकारेण न च दैवेन केनचित् ॥
सुखमेष्यति तत्तस्य यदेवं संयतात्मनः ।
सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि ॥
गच्छन्ति योगिनो ह्येवं निर्वाणं तं निरामयम् ।
दुःखोपघाते शारीरे मानसे वाप्युपस्थिते ॥
यस्मिन्न शक्यते कर्तुं यतस्तन्नानुचिन्तयेत् ।
चिन्त्यमानं हि चाभ्येति भूयश्चापि प्रवर्तते ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्धि ज्ञानसामर्थ्यं न बालैः शमतामियात् ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृद्ध्येत्तत्र न पण्डितः ॥
न जानपदिकं दुःखमेकः शोचितुमर्हसि ।
अशोचन् प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥
सुखाद्बहुतरं दुःखं जीविते नात्र संशयः ।
स्निग्धस्य चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥
परित्यजति यो दुःखं सुखं वाप्युभयं नरः ।
अभ्येति ब्रह्म सोऽत्यर्थं न ते शोचन्ति पण्डिताः ॥
दुःखमर्था हि युज्यन्ते पालनेन च ते सुखम् ।

दुःखेन चाधिगम्यन्ते नाशं तेषां न चिन्तयेत् ॥
ज्ञानं ज्ञेयाभिनिर्वृत्तं बुद्धिज्ञानगुणं मनः।
प्रज्ञाकारणसंयुक्तं ततो बुद्धिः प्रवर्त्तते ॥
यदा तु कर्मणोपेता बुद्धिर्मनसि वर्त्तते।
तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना।
सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्तते ॥
मनस्त्वपहृतं पूर्वमिन्द्रियार्थनिदर्शकम्।
न समक्षगुणोपेक्षि निर्गुणस्य निदर्शनम् ॥
सर्वाण्येतानि संवार्य द्वाराणि मनसि स्थितः।
मनस्येकाग्रतां कृत्वा तत्परं प्रतिपद्यते ॥
यथा महान्ति भूतानि वर्तन्ते गुणसंचये।
तथेन्द्रियाण्युपादाय बुद्धिर्मनसि वर्तते ॥
यदा मनसि सा बुद्धिर्वर्ततेऽन्तरचारिणी।
व्यवसायगुणोपेता तदा संपद्यते मनः ॥
गुणवद्भिर्गुणोपेतं यदा ध्यानगुणं मनः।
तदा सर्वान् गुणान् हित्वा निर्गुणं प्रतिपद्यते ॥
अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम्।
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥
तपसा चानुमानेन गुणैर्जात्या श्रुतेन च।
निनीषेत्परमं ब्रह्म विशुद्धेनान्तरात्मना ॥
गुणहीनो हि तं मार्गं बहिः समनुवर्तते।
गुणाभावात् प्रकृत्या वा निस्तर्क्यं ज्ञेयसंमितम् ॥
नैर्गुण्यात् ब्रह्म चाप्नोति सगुणत्वान्निवर्तते।
गुणप्रचारिणी बुद्धिर्हुताशन इवेन्धने ॥

यथा पञ्च नियुक्तानि इन्द्रियाणि स्वकर्मभिः।
तथा हि परमं ब्रह्म विमुक्तं प्रकृतेः परम्॥
एवं प्रकृतितः सर्वे प्रवर्तन्ते शरीरिणः।
निवर्तन्ते निवृत्तौ च स्वर्गं चैवोपयान्ति च॥
पुरुषः प्रकृतिर्बुद्धिर्विषयाश्चेन्द्रियाणि च।
अहङ्कारोऽभिमानश्च समूहो भूतसंज्ञकः॥
श्रोत्रादीनि न पश्यन्ति स्वस्वमात्मानमात्मना।
सर्वज्ञः सर्वदर्शी च तानि सर्वाणि पश्यति॥
यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा।
न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता॥
तद्वद् भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता॥
पश्यन्नपि यथा लक्ष्म जनः सोमे न विन्दति।
एवमस्ति न चोत्पन्नं न च तन्न परायणम्॥
रूपवन्तमरूपत्वादुदयास्तमने बुधाः।
धिया समनुपश्यन्ति तद्गताः सवितुर्गतिम्॥
तथा बुद्धिप्रदीपेन दूरस्थं विपश्चितः।
प्रत्यासन्नं निनीषन्ति ज्ञेयं ज्ञानाभिसंहितम्॥
न हि खल्वनुपायेन कश्चिदर्थोऽभिसिद्ध्यति।
सूत्रजालैर्यथा मत्स्यान् बध्नन्ति जलजीविनः॥
मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा।
गजानाञ्च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते॥
अहिरेव ह्यहेः पादान् पश्यतीति हि नः श्रुतम्।
तद्वन्मूर्त्तिषु मूर्त्तिस्थं ज्ञेयं ज्ञानेन पश्यति॥

यथा चन्द्रो ह्यमावास्यामलिंगत्वान्न दृश्यते ।
न च नाशोऽस्य भवति यथा विद्धि शरीरिणाम् ॥
क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।
तद्वन्मूर्त्तिविमुक्तोऽसौ शरीरी नोपलभ्यते ॥
यथाऽऽकाशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः ।
तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः ॥
जन्म वृद्धिः क्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।
यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते ॥
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ।
ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ॥
यथाऽऽदर्शतले शुद्धे पश्यत्यात्मानमात्मनि ।
प्रसूतैरिन्द्रियैर्दुःखी तैरेव नियमैः सुखी ॥
तस्मादिन्द्रियरूपेभ्य यच्छेदात्मानमात्मना ।
इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः ॥
बुद्धेः परतरं ज्ञानं ज्ञानात् परतरं महत् ।
अव्यक्तात् प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ॥
मनः श्रोत्रादिभिर्युक्तं शब्दादीन् साधु पश्यति ।
यस्तांस्त्यजति शब्दादीन् सर्वांस्त्वव्यक्तयस्तथा ॥
विमुञ्चन् प्राकृतान् भावांस्तान् मुक्त्वाऽमृतमश्नुते ।
उद्यन् हि सविता यद्वत् सृजते रश्मिमण्डलम् ॥
स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ।
अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः ॥
प्राप्येन्द्रियगुणान् यं च सोऽस्तमावृत्य गच्छति ।
प्रणीतं कर्मणा मार्गं नीयमानं पुनः पुनः ॥

प्राप्नोत्ययं कर्मफलं प्रवृत्तं धर्ममात्मवित्।
विषया विनिवर्त्तन्ते निराहारस्य देहिनः॥
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते।
बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्त्तते॥
तदासं पद्यते ब्रह्म तत्रैव प्रलयं गतम्।
मनस्याकृतयो मग्ना मनस्त्वभिगतं मतिम्॥
मतिस्त्वभिगता ज्ञानं ज्ञानं त्वभिगतं परम्।
इन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः॥
न बुद्धिर्बुध्यते व्यक्तं सूक्ष्मत्वे तानि पश्यति।
यदा तैः पञ्चभिः पञ्च युक्तानि मनसा सह॥
तदा तद् दृश्यते ब्रह्म मणौ सूत्रमिवार्पितम्।
तदेव च यथासूत्रं सुवर्णे वर्त्तते पुनः॥
मुक्तास्वथ पुराणेषु मृण्मये राजते तथा।
तद्वद्गोषु मनुष्येषु तद्वद्धस्तिमृगादिषु॥
तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः।
येन येन शरीरेण यद्यत् कर्म करोत्ययम्॥
तेन तेन शरीरेण तत्तत् फलमुपाश्नुते।
यथा ह्येकरसा भूमिरोषध्यार्थानुसारिणी॥
तथा कर्मानुगा बुद्धिरन्तरात्मानुदर्शिनी।
ज्ञानपूर्वा भवेल्लिप्सा लिप्सा पूर्वाभिसंधिता॥
ज्ञेयं ज्ञानात्मकं विद्यात् ज्ञानं सदसदात्मकम्।
ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा॥
क्षयान्ते तत्फलं दिव्यं ज्ञातं ज्ञेये प्रतिष्ठितम्।
महद्धि परमं भूतं यत् प्रपश्यन्ति योगिनः॥

अबुद्धास्तं न पश्यन्ति ह्यात्मस्थं गुणबुद्धयः ।
मनसो महती बुद्धिर्बुद्धेः कालो महान् स्मृतः ॥
कालात् स भगवान् विष्णुर्यस्य सर्वमिदं जगत् ।
अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः ॥
अत्येति सर्वदुःखानि दुःखं ह्यन्तवदुच्यते ।
तद् ब्रह्म परमं प्रोक्तं तद्धाम परमं पदम् ॥
तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः ।
निःकल्मषं ब्रह्मचर्यमिच्छता चरितुं सदा ॥
निद्रा सर्वात्मना त्याज्या स्वप्नदोषमवेक्षता ।
स्वप्ने हि रजसा देही तमसा चाभिभूयते ॥
देहान्तरमिवापन्नश्चरत्यपगतस्पृहः ।
ज्ञानाभ्यासाज्जागरिते जिज्ञासार्थमनन्तरम् ॥
विज्ञानाभिनिवेशात्तु जागरत्यनिशं सदा ।

भीष्म उवाच ।

दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः ।
ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम् ॥
जन्ममृत्युजरादुःखैर्व्याधिभिर्मानसक्लमैः ।
दृष्ट्वैवं सततं लोकं घटेन्मोक्षाय बुद्धिमान् ॥
वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहंकृतः ।
प्रशान्तो ज्ञानवान् भिक्षुः निरपेक्षश्चरेत् सुखम् ॥
अथवा मनसः संगं पश्यन् भूतानुकम्पया ।
तत्राप्युपेक्षां कुर्वीत ज्ञानकर्मफलं जगत् ॥
अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम् ।
क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ॥

तस्मात् समाहितं बुद्ध्या मनो भूतेषु धारयेत् ।
नापध्यायेन्न स्पृहयेन्न बुद्ध्या चिन्तयेदसत् ॥
वाचा मोघप्रयोगेण मनोज्ञं तत् प्रवर्त्तते ।
विवक्षता च तद्वाक्यं धर्मं सूक्ष्ममवेक्षता ॥
सत्यां वाचमहिंसाञ्च वदेदनपवादिनीम् ।
कल्कापेतान्निःपरुषामनृशंसामपैशुनाम् ॥
इदमल्पं च वक्तव्यमविक्षिप्तेन चेतसा ।
प्राक् प्रबुद्धो हि संसारी विरागाद्याहरेद्यदि ॥
बुद्ध्याप्यनुगृहीतेन मनसा कर्म तामसम् ।
रजोभूतैर्हि करणैः कर्मणा प्रतिपद्यते ॥
स दुःखं प्राप्य लोकेऽस्मिन् नरकायोपपद्यते ।
निःसंदग्धमनीहो वै युक्तः सर्वपरिग्रहैः ॥
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः ।
ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान् ॥
निःप्रचारेण मनसा परं तदधिगच्छति ।
निगृहीतेन्द्रियस्यास्य कुर्वाणस्य मनो वशे ॥
देवताः संप्रकाशन्ते हृष्टा यान्ति तमीश्वरम् ।
कणकल्माषपिण्याकशाकयावकसक्तवः ? ॥
तथा मूलं फलं भैक्ष्यं पर्यायेणोपयोजयेत् ।
आहारं नियमं चैव देशे काले च सात्त्विकम् ॥
उष्णीषवान् यथा वस्त्रैस्त्रिभिर्भवति संवृतः ।
संवृतोऽयं तथा देही सत्त्वराजसतामसैः ॥

युधिष्ठिर उवाच ।

येन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः ।

जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य मानुषान्॥

भीष्म उवाच।

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
येन वृत्तेन वृत्तज्ञः स जगाम महत्सुखम्॥
जनको जनदेवस्तु मिथिलायां जनाधिपः।
और्द्ध्वदैहिकधर्माणामासीद्युक्तो विचिन्तने॥
तस्य स्म शतमाचार्या वसन्ति सततं गृहे।
दर्शयन्तः पृथग्धर्मान्नानापाषण्डवादिनः॥
स तेषां प्रेत्यभावेन प्रेत्यजातौ विनिश्चये।
आगमस्थः स भूयिष्ठमात्मतत्त्वेन तुष्यति॥
तत्र पञ्चशिखो नाम कापिलेयो महामुनिः।
परिधावन्महीं कृत्स्नां जगाम मिथिलामथ॥
सर्वसन्यासधर्म्माणां तत्त्वज्ञानविनिश्चये।
सुपर्यवसितार्थं च निर्द्वन्द्वो नष्टसंशयः॥
ऋषीणामाहुरेकं यं कामादवसितं नृषु।
शाश्वतं सुखमत्यन्तमन्विच्छन् स सुदुर्लभम्॥
यमाहुः कापिलं संख्याः परमर्षिं प्रजापतिम्।
स मन्ये तेन रूपेण विस्माययति हि स्वयम्॥
आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम्।
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम्॥
यत्र चासीनमागत्य कापिलं मण्डलं महत्।
इष्टिमन्त्रेण संयुक्तो भूयश्च तमसाऽसुरिः॥
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देहदर्शनः।
यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते॥

आसुरिर्मण्डले तस्मिन् प्रतिपेदे तदव्ययम् ।
तस्य पञ्चशिखः शिष्यो मानुष्याः पयसा भृतः ॥
ब्राह्मणी कापिली नाम काचिदासीत् कुटुम्बिनी ।
तस्याः पुत्रत्वमागत्य स्त्रियास्तत् पिबति स्तनौ ॥
ततः स कापिलेयत्वं लेभे बुद्धिञ्च नैष्ठिकीम् ।
एतन्मे भगवानाह कापिलेयस्य संभवम् ।
तस्य तत्कापिलेयत्वं सर्वविन्मनुत्तमम् ॥
सामान्यं जनकं ज्ञात्वा धर्मज्ञो ज्ञानमुत्तमम् ।
उपेत्य शतमाचार्यान् मोहयामास हेतुभिः ॥
जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात् ।
उत्सृज्य शतमाचार्यात् पृष्ठतोऽनुजगाम तम् ॥
तस्मै परमकल्याणं प्रणताय च धर्मतः ।
अब्रवीत् परमं यत्तत्सांख्ये मोक्षं विधीयते ॥
जातिनिर्वेदमुक्त्वा स कर्मनिर्वेदमब्रवीत् ।
यदर्थधर्मसंसर्गः कर्मणां च फलोदयः ॥
तमनाश्वासिकं मोहं विनाशि चलमध्रुवम् ।
दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ॥
आगमात् परमस्तीति ब्रुवन्नपि पराजितः ।
अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युजरामयः ॥
आत्मानं मन्यते मोहात्तदसम्यक् परं मतम् ।
अथ चेदेवमप्यस्ति यल्लोकेनोपपद्यते ॥
अजरोऽयममृत्युश्च राजाऽसौ मन्यते यथा ।
अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे ॥
किमधिष्ठाय तद्रूपाल्लोकयात्रा विनिश्चयम् ।

प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि ॥
प्रत्यक्षो ह्यागमो भिन्नः कृतान्तो वा न किंचन ।
यत्र तत्रानुमानेऽस्मिन् कृतं भावयतेपि च ॥
अन्यो जीवः शरीरस्य नास्तिकानां मते स्थितः ।
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥
नन्वेते हेतवः सन्ति यत्किंचिन्मूर्त्तिसंस्थितः ।
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ॥
आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ।
यथा रुरुः शृङ्गमथो पुराणं हित्वा त्वचं वाप्युरगो यथा वा ॥
विहाय गच्छत्यनवेक्षमाणस्तथा विमुक्तः प्रजहाति दुःखम् ।
द्रुमं यथा वाप्युदके पतन्तमुत्सृज्य पक्षी निपतत्यसक्तः ॥
तथा ह्यसौ दुःखसुखे विहाय मुक्तः परार्धां गतिमेत्य लिङ्गः ।
अपित्र भवति मैथिलेन गीतं नगरमुपाहितमग्निनाभिवीक्ष्य ॥
न खलु मद्दिद्ह्यतेऽत्र किंचित्स्वयमिदमाह किमस्य भूमिपालः ।
इदममृतपदं निशम्य राजा स्वयमिह पञ्चशिखेन भाष्यमाणम् ॥
निखिलमभिसमीक्ष्य निश्चितार्थः परमसुखी विजहार वीतशोकः ।
इति जनकमैथिलपञ्चशिखयोर्गोश्वर्योः संवादः ॥

इति श्रीभक्तिसागरे सेनजिदुपाख्यान-शम्याकभीष्मसंवाद-भृगुभरद्वाजसंवाद-जनकपञ्चशिखसंवादनिरूपणन्नाम षष्ठस्तरङ्गः ।

युधिष्ठिर उवाच ।

यदिदं कर्म लोकेऽस्मिन् शुभं वा यदि वाऽशुभम् ।
पुरुषं योजयत्येव फलयोगेन भारत ॥
कर्त्ताऽस्ति तस्य पुरुष उताहो नेति संशयः ।
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ॥

भीष्म उवाच।

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर॥
असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम्।
अस्तम्भमनहङ्कारं सत्वस्थं समये रतम्॥
तुल्यनिन्दास्तुतिं दान्तं शून्यागारनिवेशनम्।
चराचराणां भूतानां विदितं प्रभवाव्ययम्॥
अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च।
काञ्चने वाऽथ लोष्टे वा उभयोः समदर्शनम्॥
शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम्।
बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत्।
यैः कश्चित् सर्वतो लोके गुणैः स्यात् पुरुषो नृषु॥
भवत्यनयगान् सर्वांस्तान् गुणान् लक्षयामहे।
अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह॥
आत्मानं मन्यमानः सन् श्रेयः किमिह मन्यसे।
बद्धः पाशैश्च्युतः स्थानाद्विषतां वशमागतः॥
श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि।
प्रज्ञालाभात्तु दैत्येन्द्र उताहो धृतिमत्तया॥
प्रह्लाद स्वस्थरूपोऽसि पश्य व्यसनमात्मनः।
इति सञ्चोदितस्तेन धीरो निश्चितनिश्चयः॥
उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्तयन्।

प्रह्लाद उवाच।

प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः॥

स्वभावात् संप्रवर्त्तन्ते निवर्त्तन्ते तथैव च।
सर्वे भावास्तथा भावाः पुरुषार्थो न विद्यते॥
पुरुषार्थस्य चाभावे नास्ति कश्चित् स्वकारकः।
स्वयं न कुर्वत स्तस्य जातु मानो भवेदिह॥
यस्तु कर्त्तारमात्मानं मन्यते साध्वसाधु वा।
तस्य दोषवती प्रज्ञा अतत्त्वज्ञेति मे मतिः॥
यदि स्यात् पुरुषः कर्त्ता शक्रात्मश्रेयसे ध्रुवम्।
आरम्भास्तस्य सिद्धेयुर्न तु जातु पराभवेत्॥
अनिष्टस्य हि निर्वृत्तिर्निवृत्तिर्हि प्रियस्य च।
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः॥
अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च।
अप्रयत्नेन पश्यामः केषां चित्तु स्वभावतः॥
प्रतिरूपतराः केचिद्दृश्यन्ते बुद्धिमत्तराः।
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमम्॥
स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा।
शुभाशुभास्तदा तत्र कस्यचिन्मानकारणम्॥
स्वभावादेव तत्सर्वमिति मे निश्चिता मतिः।
आत्मप्रतिष्ठा प्रज्ञा वा मम नास्ति ततोऽन्यथा॥
कर्मजं त्विह मन्यन्ते फलयोगं शुभाशुभम्।
कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तं शृणु॥
यथा वेदयते कश्चिदोदनं वायसो वदन्।
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम्॥
विकारानेव यो वेद न वेद प्रकृतिं पराम्।
तस्य स्तम्भोऽभिमानश्च भवेद्बाल्यान्न पश्यतः॥

स्वभावभाविनो भावान् सर्वानेवेह निश्चयात् ।
बुद्ध्यमानस्य दर्पो वा मानो वा किं करिष्यति ॥
वेद धर्मविधिं कृत्स्नं भूतानामप्यनित्यताम् ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥
निर्ममो निरहङ्कारो निराशीर्मुक्तबन्धनः ।
स्वस्थोऽप्यपेतः पश्यामि भूतानां प्रभवाप्ययौ ॥
कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः ।
नायासो विद्यते शक्र पश्यतो लोकविद्यया ॥
प्रकृतौ च विकारे च न मे बुद्धिर्न च द्विषे ।
द्वेष्टारं च न पश्यामि यो मामद्य समापयेत् ॥
नोर्द्ध्वं नार्वाक् न तिर्यक् च न क्वचिच्छक्र कामये ।
न हि ज्ञेयेन विज्ञानेनाज्ञाने शर्म विद्यते ॥

शक्र उवाच ।

येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते ।
प्रब्रूहि तमुपायं मे सम्यक् प्रह्लाद पृच्छतः ॥

प्रह्लाद उवाच ।

आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया ।
वृद्धशुश्रूषया चैव पुरुषो लभते महत् ॥
स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः ।
स्वभावादेव तत्सर्वं यत्किंचिदनुपश्यति ॥
इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमन् ।
प्रीतिमांश्च तदा राजन्स्तद्वाक्यं प्रत्यपूजयत् ॥
स तदाभ्यर्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः ।
असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम् ॥

मोक्षधर्मे शक्रप्रह्लादसंवादः ।

युधिष्ठिर उवाच ।

यया बुद्ध्या महीपाल भ्रष्टश्रीर्विचरेन्महीम् ।
कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवादं बलेर्वैरोचनस्य च ॥
पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः ।
सर्वानेवासुरान् जित्वा बलिं पप्रच्छ वासवः ॥
यस्य स्म ददतो वित्तं न कदाचन हीयते ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥
स वायुर्वरुणश्चैव स रविः स च चन्द्रमाः ।
सोऽग्निस्तपति भूतानि जलञ्च सभवत्युत ॥
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ।

ब्रह्मोवाच ।

नैतत्ते साधु भगवन् यदेनमनुपृच्छसि ।
पृष्टस्तु नानृतं ब्रूयात्तस्माद्वच्यामि ते बलिम् ॥
उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः ।
वरिष्ठो भविता जन्तुः शून्यागारं शचीपते ॥

शक्र उवाच ।

यदि स्म बलिना ब्रह्मन् शून्यागारे समेयिवान् ।
हन्यामेतं न वा हन्यां तद् ब्रह्मन्ननुशाधि माम् ॥

ब्रह्मोवाच ।

मा स्म शक्र बलिं हिंसीर्मा बलिर्वधमर्हति ।
न्यायस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया ॥

बलिरुवाच।

न त्वं पश्यसि भृङ्गारं न छत्रं व्यजनं न च।
ब्रह्मदत्तां च मे मालां न त्वं पश्यसि वासव॥
गुहायां निहितानि त्वं मम रत्नानि पृच्छसि।
यदा मे भविता कालस्तदा त्वं तानि द्रक्ष्यसि॥
न त्वेतदनुरूपं ते यशसो वा कुलस्य वा।
समृद्धार्थो समृद्धार्थं यन्मां कथयितुमिच्छसि॥
न हि दुःखेषु शोचन्ते न प्रहृष्यन्ति चर्द्धिषु।
कृतप्रज्ञा ज्ञानतृप्ताः क्षान्ताः सन्तो मनीषिणः॥
त्वं तु प्राकृतया बुद्ध्या पुरन्दर विकत्थसे।
यदाहमिव भावी स्यास्तदा नैवं वदिष्यसि॥

भीष्म उवाच।

पुनरेव तु तं शक्रः प्रहसन्निदमब्रवीत्।
निश्वसन्तं यथा नागं प्रत्याहाराय भारत॥

शक्र उवाच।

यज्जघान सहस्रेण ज्ञातिभिः परिवारितः।
लोकान् प्रतापयन् सर्वान् यास्यस्मान् वितर्कयन्॥
दृष्ट्वा सुकृपणां चेमामवस्थामात्मनो बले।
ज्ञातिमित्रपरित्यक्तः शोचस्याहो न शोचसि॥
प्रीतिं प्राप्यातुलां पूर्वं लोकांश्चात्मवशे स्थितान्।
विनिपातमिमं चाद्य शोचस्याहो न शोचसि॥

बलिरुवाच।

अनित्यमुपलक्ष्येऽहं कालपर्यायधर्मतः।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत्॥

अन्तवन्त इमे देहा भूतानां च सुराधिप।
तेन शक्र न शोचामि नापराधादिदं मम॥
जीवितं च शरीरं च जात्यैव सह जायते।
उभे सह विवर्द्धेते उभे सह विनश्यतः॥
तदीदृशमहं भावमवशः प्राप्य केवलम्।
यदेवमभिजानामि का व्यथा मे विजानतः॥
भूतानां निधनं निष्ठा स्रोतसामिव सागरः।
नैतत् सम्यग्विजानन्तो नरा मुह्यन्ति वज्रधृक्॥
ये त्वेवं नाभिजानन्ति रजोमोहपरायणाः।
ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां विनश्यति॥
बुद्धिलाभात्तु पुरुषः सर्वं नुदति किल्बिषम्।
विपाप्मा लभते सत्वं सत्वस्थः संप्रसीदति॥
ततस्तु ये निवर्त्तन्ते जायन्ते वा पुनः पुनः।
कृपणाः परितप्यन्ति तेलाद्यैरभिनोदिताः॥
यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयाम्।
हस्तप्राप्तस्य वीरस्य तच्चैव पुरुषं विदुः॥
अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः।
एकः प्राप्नोति विजयमेकश्चैव पराजयम्॥
सुखदुःखे हि पुरुषः पर्यायेनाधिगच्छति।
पर्यायेनासि शक्रस्त्वं प्राप्तः शक्र न कर्मणा॥
कालः काले नयति मां त्वाञ्च कालो नयत्ययम्।
न मातृपितृशुश्रूषा न च दैवतपूजनम्॥
नान्यो गुणसमाचारः पुरुषस्य सुखावहः।
न विद्या न तपो दानं न मित्राणि न बान्धवाः॥

अशक्नुवन्ति परित्रातुं नरं कालेन पीडितम्।
न मामिनमनर्थं हि प्रतिघातशतैरपि॥
अशक्नुवन्ति परित्योढुमृते बुद्धिबलं नराः।
अर्थसिद्धिमनर्थं च जीवितं मरणं तथा॥
सुखदुःखफलं चैव न द्वेष्मि न च कामये।
हन्तं हन्ति हतो ह्येव यो नरो हन्ति कञ्चन॥
उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः।
हत्वा जित्वा च मघवन् यः कश्चित् पुरुषायते॥
अकर्त्ता ह्येव भवति कर्त्ता त्वेव करोति तत्।
को हि लोकस्य कुरुते विनाशप्रभवावुभौ॥
कृतं हि तत्कृतेनैव कर्त्ता तस्यापि चापरः।
महाविद्योऽल्पविद्यश्च बलवान् दुर्बलस्तथा॥
दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः।
सर्वं कालः समादत्ते गम्भीरः स्वेन तेजसा॥
तस्मिन् काले च संप्राप्ते का व्यथा मे विजानतः।
दग्धमेवानुदहति हतमेवानुहन्यते॥
नश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः।
नास्य द्वीपः कुतः पारं नावारः संप्रदृश्यते॥
नोत्तमस्य प्रपश्यामि विधेर्दिव्यस्य चिन्तयन्।
यदि ते पश्यतः कालो भूतानि न विनाशयेत्॥
स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते।
तुषभक्षन्तु मां ज्ञात्वा प्रविविक्तजने गृहे॥
बिभ्रन्तं गार्दभं रूपमागत्य परिगर्हसे।
इच्छन्नहं विकुर्यां हि रूपाणां बहुधात्मनः॥

विभीषणानि पानीच्य पलायेथास्त्वमेव मे ।
कालः सर्वं समादत्ते कालः सर्वं प्रयच्छति ॥
कालेन विहितं सर्वं मा कृथाः शक्र पौरुषम् ।
पुरा सर्वं प्रव्यथितं मयि क्रुद्धे पुरन्दर ॥
नमस्तस्यै दिशेऽप्यस्तु यस्यां वैरोचनो बलिः ।
इति मामभ्यपद्यन्त बुद्धिमात्सर्यमोहिताः ॥
नाहं तदनुशोचामि नात्मभ्रंशं शचीपते ।
एवं मे निश्चिता बुद्धिः शास्तु तिष्ठाम्यहं वशे ॥
दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् ।
दुःखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥
कल्याणरूपसंपन्नो दुर्भगः शक्र दृश्यते ।
अलक्षणो विरूपश्च सुभगो दृश्यते परः ॥
नैतदस्य कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत्त्वमेवं गतो वज्रिन् यच्चाप्येवं गता वयम् ॥
न कर्म भवताऽप्येतत् कृतं मम शतक्रतो ।
ऋद्धिर्वाऽप्यथवानर्द्धिः पर्यायकृतमेव तत् ॥
पश्यामि त्वा विराजन्तं देवराजमवस्थितम् ।
श्रीमन्तं द्युतिमन्तं च गर्जमानं ममोपरि ॥
एवं चैतन्न मे कालो समाक्रम्य स्थितो भवान् ।
पातयेयमहं त्वाद्य सवज्रमपि मुष्टिना ॥
न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः ।
कालः स्थापयते सर्वं कालः पचति वै तदा ॥
मां चेदभ्यागतः कालो दानवेश्वर पूजितम् ।
गर्जन्तं प्रतपन्तं च कमन्यं नागमिष्यते ॥

द्वादशानान्तु भवतामादित्यानां महात्मनाम्।
तेजांस्येकेन सर्वेषां देवराजभृतानि मे॥
अहमेव ददाम्यापो विसृजामि च वासव।
तपामि चैव त्रैलोक्यं विद्योताम्यहमेव च॥
संरक्षामि विलुम्पामि ददाम्यहमथाददे।
संयच्छामि नियच्छामि लोकेषु प्रभुरीश्वरः॥
तदद्य वै निवृत्तं मे प्रभुत्वममराधिप।
कालसैन्यावगाढस्य सर्वन्न प्रतिभाति मे॥
नाहं कर्त्ता न चैव त्वं नान्यः कर्त्ता शचीपते।
पर्यायेण हि भुज्यन्ते लोकाः शक्र यदृच्छया॥
बहूनीन्द्र सहस्राणि समतीतानि वासव।
बलवीर्योपपन्नानि यथैव त्वं शचीपते॥
त्वामप्यतिबलं शक्र देवराजं बलोत्कटम्।
प्राप्ते काले महावीर्यः कालः संशमयिष्यति।
य इदं सर्वमादत्ते तस्माच्छक्र स्थिरो भव।
मया त्वया च पूर्वैश्च न स शक्यो निवर्त्तितुम्॥
यामेतां प्राप्य जानीषे राज्यश्रियमनुत्तमाम्।
स्थिता मयीति तन्मिथ्या नैषा ह्येकत्र तिष्ठति॥
स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियम्।
मां च लोला परित्यज्य त्वामगाद्विबुधाधिप॥
नैवं शक्र पुनः कार्षीः शान्तो भवितुमर्हसि।
त्वमप्येवंविधं ज्ञात्वा क्षिप्रमन्यं गमिष्यति॥

मोक्षधर्मे बलिवासवसंवादः।

भीष्म उवाच।

अनिर्वार्येण शोकेन शरीरं चोपतप्यते।
अमित्राश्च प्रहृष्यन्ति शोके नास्ति सहायता॥
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत्।
सन्तापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते श्रियः॥
संतापाद्भ्रश्यते चायुर्धर्मश्चैव सुरेश्वर।
विनीय खलु तद्दुःखमागतं वैमनस्यजम्॥
ध्यातव्यं मनसा हृद्यं कल्याणं स विजानता।
यदा यदा हि पुरुषः कल्याणे कुरुते मनः॥
तदा तस्य प्रसिध्यन्ति सर्वार्थानी न संशयः।

एकः शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता।
तेनानुशिष्टः प्रवणादिवोदकं
यथा नियुक्तोऽस्मि तथा करोमि॥

यथा यथास्य प्राप्तव्यं प्राप्नोत्येव तथा तथा।
भवितव्यं यथा यच्च भवत्येव तथा तथा॥
यत्र यत्रैव संयुक्तो धाता गर्भं पुनः पुनः।
तत्र तत्रैव वसति न यत्र स्वयमिच्छति॥
भावो योऽयमनुप्राप्तो भवितव्यमिदं मम।
इति यस्य सदा भावो न स मुह्येत्कदाचन॥
पर्यायैर्हन्यमानानामभियोक्ता न विद्यते।
दुःखमेतत्तु यं द्वेष्टा कर्त्ताऽहमिति मन्यते॥
ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यवृद्धांश्च महामुनींश्च।
कान्नापदो नोपनयन्ति लोके परापरज्ञा हि न संभ्रमन्ति॥

न पण्डितः क्रुध्यति नापि सज्जते न चापि संसीदति न प्रहृष्यति ।
न चार्थकृच्छ्रव्यसनेषु शोचते स्थितः प्रकृत्या हिमवानिवाचलः ॥
यमर्थसिद्धिः परमा न हर्षयेत्तथैव कालव्यसनं न हर्षयेत् ।
सुखं च दुःखं च तथैव मध्यमं निषेवते यः स धुरन्धरो नरः ॥
यां यामवस्थां पुरुषोऽधिगच्छति तस्यां रमेतापरितप्यमानः ।
एवं प्रवृद्धं प्रणुदन्मनोजं सन्तापमायासकरं शरीरात् ॥
न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण च ॥
न शीलेन न वृत्तेन तथा नैवार्थसंपदा ।
अलभ्यं लभ्यते मर्त्यैस्तत्र का परिदेवना ॥
यदेवमनुजातस्य धातारो विदधुः पुरा ।
तदेवानुचरिष्यामि किं मे मृत्युः करिष्यति ॥
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥
एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः ।
कुशली सर्वदुःखेषु स वै सर्वधनो नरः ॥

इति शक्रनमुचिसंवादः ।

भीष्म उवाच ।

पुत्रदारैः सुखैश्चैव वियुक्तस्य धनेन वा ।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ॥
धैर्येण युक्तं सततं शरीरं न विशीर्यते ।
विशोकता सुखं धत्ते चारोग्यमुत्तमम् ॥
आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ।
यश्च प्राज्ञो नरस्तात सात्त्विकीं वृत्तिमाश्रितः ॥
तस्यैश्वर्यं च धैर्यं च व्यवसायश्च कर्मसु ।

वेदज्ञानि द्वयान्याहुः प्रवृत्तानीतराणि च ॥
प्रवृत्तानि विशिष्टानि सर्वधर्मोपधारणात् ।
सधर्म्माः साखिला वेदाः प्रवृत्तेभ्यो विनिःसृताः ॥
प्रवृत्तानि द्वयान्याहुरात्मज्ञानीतराणि च ।
आत्मज्ञानि विशिष्टानि जन्मजन्मोपधारणात् ॥
धर्मद्वयं हि यो वेद स धर्मज्ञः स धर्मवित् ॥
ज्ञानवानेव कर्माणि कुर्वन् सर्वत्र सिध्यति ।
एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ॥
तत्र चेह विधिः सोऽस्याद् ज्ञानं चेत्पुरुषं प्रति ।
उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ॥
पौरुषं कारणं केचिदाहुः कर्मसु मानवाः ।
दैवमेके प्रशंसन्ति स्वभावमपरे जनाः ॥
पौरुषं कर्म दैवन्तु फलवृत्तिस्वभावतः ।
त्रयमेतत्पृथग्भूतमविवेकन्तु केचन ॥
एतद्देवं च नैवंच न चोभे नानुभे तथा ।
कर्मस्था विप्र यं ब्रूयुः सत्त्वस्थाः समदर्शिनः ॥
आरम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः ॥
परिनिष्ठितकार्यं हि स्वाध्यायेन द्विजो भवेत् ।
कुर्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥
त्रेतादौ केवला वेदा यज्ञा वर्णाश्रमास्तथा ।
संरोधादायुषस्ते च तत्राधर्मेण पीडिताः ॥
गवां भूमेश्च ये चापामोषधीनां च ये रसाः ।
अधर्मान्तर्हिता वेदा यज्ञा वर्णाश्रमास्तथा ॥

विक्रियन्ते स्वधर्मस्थाः स्थावराणि चराणि च ।
नान्यत्र विद्या तपसो नान्यत्रेन्द्रियनिग्रहात् ॥
नान्यत्र सर्वसन्त्यागात्सिद्धिं विन्दति कश्चन ।
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।
स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च ॥
वसत्येको महानात्मा येन सर्वमिदं ततम् ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥
यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा ।
यावानात्मनि वेदात्मा तावानात्मा परात्मनि ॥
य एवं सततं वेद सोऽमृतत्वाय कल्पते ।
सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ॥
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ।
शकुन्तानामिवाकाशे मत्स्यानामिव चोदके ॥
यथा गतिर्न दृश्येत तथा ज्ञानविदां गतिः ।
कालः पिबति भूतानि सर्वाण्येवात्मनात्मपि ॥
यस्मिंस्तु पच्यते कालस्तं वेदेह न कश्चन ।
अक्षरं च क्षरं चैव द्वैधीभावो ऽयमात्मनः ॥
क्षरः सर्वेषु भूतेषु दिव्यं त्वमृतमक्षरम् ।
नवद्वारं पुरं गत्वा हंसो हि नियतं वशी ॥
ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ।
हंसोक्तं च क्षरं दैव कूटस्थं यत्तदक्षरम् ॥
तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनाम् ।

व्यास उवाच।

पृच्छतस्तव सत्पुत्र यथावदिव तत्त्वतः।
सांख्यज्ञानेन संयुक्तं यदेतत्कीर्तितं मया॥
योगकृत्यं तु ते कृत्स्नं वर्तयिष्यामि तच्छृणु।
एकत्वं बुद्धिमनसोरिन्द्रियाणां च कृत्स्नशः॥
आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम्।
तदेतदनुशान्तेन दान्तेनाध्यात्मशालिना॥
आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्मणा।
योगदोषान् समुच्छिद्य पञ्च यान् कवयो विदुः॥
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम्।
क्रोधं शमेन जयति कामं संकल्पवर्जनात्॥
सत्त्वसंसेवनाद्धीरो निद्रा मुच्छेत्तुमर्हति।
धृत्या शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा॥
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा।
अप्रमादाद्भयं जह्याद्दम्भं प्राज्ञोपसेवनात्॥
एवमेतान्योगदोषान् जयेन्नित्यमतन्द्रितः।
अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेव च॥
वर्जयेद्रुषतीं वाचं हिंसायुक्तां मनोनुदाम्।
ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा॥
शौचमाचारसंशुद्धिरिन्द्रियाणां च निग्रहः।
एतैर्विवर्द्धते तेजः पाप्मानं चापकर्षति॥
सिध्यत्यस्य च सर्वार्था विज्ञानं च प्रवर्द्धते।
समः सर्वेषु भूतेषु लब्धालब्धेन वर्त्तयेत्॥
धूतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः।

कामक्रोधौ वशे कृत्वा निनीषेद् ब्रह्मणः पदम् ॥
मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः ।
पूर्वरात्रापरार्द्धे वा धारयेन्मन आत्मनि ॥
जन्तोः पञ्चेन्द्रियस्यास्य यदेकं छिद्रमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृत्ते पादादिवोदकम् ॥
मनस्तु पूर्वमादद्यात् कूर्मीणामिव मत्स्यहा ।
ततः श्रोत्रं ततश्चक्षुः जिह्वा घ्राणं च योगवित् ।
तत एतानि संयम्य मनसि स्थापयेद्यतिः ॥
यदैतान्यवतिष्ठन्ति मनः षष्ठान्यथात्मनि ।
प्रसीदन्ति च संस्थाप्य तदा ब्रह्म प्रकाशते ॥
विधूम इव दीप्तार्च्चिरादित्य इव दीप्तिमान् ।
विद्युताग्निरिवाकाशे दृश्यतेऽऽत्मा तथात्मनि ॥
सर्वतस्तत्र सर्वत्र व्यापकत्वाच्च दृश्यते ।
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥
धृतिमन्तो महाप्राज्ञाः सर्वभूतहिते रताः ।
एवं परिमितं कालमाचरन् शंसितव्रतः ॥
आसीनो हि रहस्यैको गच्छेदक्षरसाम्यताम् ।
कुर्यात् परिचयं योगे त्र्यैकाल्ये नियतो मुनिः ॥
गिरिशृङ्गे तथा चैत्ये निकट्टिम्नस्थलेषु च ।
एकाग्रं चिन्तयेन्नित्यं योगान्नोद्वेजयेन्मनः ॥
येनोपायेन शक्येत सन्नियन्तुं चलं मनः ।
तं च युक्तो निषेवेत न चैव विचलेत्ततः ॥
एवं स्वस्थात्मनः साधोः सर्वत्र समदर्शिनः ।
षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्तते ॥

एतस्मिन्नियतो मार्गे विरमन्नवमो स्थितः ।
अपि वर्णावकृष्टस्तु नारीवाधर्मकाङ्क्षिणी ॥
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ।

शुक उवाच ।

यदिदं वेदवचनं कुरु कर्म त्यजेति वा ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥
एतद्वै वेत्तुमिच्छामि तद्भवान् प्रब्रवीतु मे ।
एतच्चान्यच्च वैरूप्यो वर्त्तते प्रतिकूलतः ॥

भीष्म उवाच ।

इत्युक्तः प्रत्युवाचेदं पराशरसुतस्तु ताम् ।
कर्मविद्या मयावेतौ व्याख्यास्यामि चराचरौ ॥
यां दिशं विद्यया यान्ति याञ्च गच्छन्ति कर्मणा ।
शृणुष्वैकमना वत्स गह्वरं ह्येतदन्तरम् ॥
अस्ति धर्म इति प्रोक्तं नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशमिमं मम भवेदथ ॥
द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च सुभाषितः ॥
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥
कर्मणा जायते प्रेत्य मूर्त्तिमान् षोडशात्मकः ।
कर्म लोके प्रशंसन्ति स्वल्पबुद्धिरता नराः ॥
तेन ते देहजालानि रमयन्त उपासते ।
विद्यया जायते नित्यमव्यक्तं ह्यव्ययात्मकम् ॥
येऽस्य बुद्धिं परां प्राप्ताः कर्मनैपुण्यदर्शिनः ।

न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्ति च॥
कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति॥
यत्र गत्वा न म्रियते यत्र गत्वा न जायते।
न पुनर्जायते यत्र यत्र गत्वा न वर्त्तते॥
यत्र तद् ब्रह्म परममव्याक्तममचलं ध्रुवम्।
अव्याकृतमनायासममृतं चापि योगि च॥
द्वन्द्वैर्न यत्र बाध्यन्ते मानसेन च कर्म्मणा।
समाः सर्वत्र मैत्राश्च सर्वभूतहिते रताः॥
विद्यामयोऽन्यः पुरुषस्तात कर्ममयोऽपरः।
देवो यः संश्रितस्तस्मिन्नबिन्दुरिव पुष्करे॥
क्षेत्रज्ञं तं विजानीयान्नित्यं योगजितात्मकम्।
तमो रजश्च सत्वं च विद्धि जीवगुणात्मकम्॥
जीवमात्मगुणां विद्यादात्मानं परमात्मनः।
सचेतनं जीवगुणं वदन्ति स चेष्टते जीवयते च सर्वम्॥
ततः परं क्षेत्रविदो वदन्ति प्राकल्पयद्यो भुवनानि सप्त।
विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः॥
अमृतं यज्ञशेषं स्याद्भोजनं हविषा समम्।
भृतशेषं तु योऽश्नाति तमाहुर्विघसाशिनम्॥
विघसं भृतशेषन्तु यज्ञशेषमथामृतम्।
अचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः॥
अतिथिस्त्विन्द्रलोकस्य देवलोकस्य चर्त्विजः।
जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः॥
सम्बन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ।

वृद्धबालातुरकृशास्त्वाकाशप्रभविष्णवः ॥
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ।
छाया स्वा दासवर्गश्च दुहितृ कृपणं परम् ॥
तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः ।
गृहधर्मपरो विद्वान् धर्मशीलो जितक्लमः ॥
तत्त्वार्थबद्धः कर्माणि धर्मं वा किञ्चिदाचरेत् ।
गृहस्थवृत्तयस्तिस्रस्तासां निश्रेयसं परम् ॥
कुम्भधान्यैरुञ्छशिलैः कापोतीवास्थितैस्तथा ।
यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्द्धते ॥
स्वर्गलोको गृहस्थानामुदारमनसां हितः ।
स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्टिदः ॥

व्यास उवाच ।

गृहस्थस्तु यदा पश्येद्वली पलितमात्मनः ।
अपत्यस्यैव चापत्यं वनमेव तदाश्रयेत् ॥
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत् ।
तानि चाग्नीन् परिचरेद्यजमानो दिवौकसः ॥
नियतो नियताहारः षष्ठभक्तोऽप्रमत्तकः ।
तदग्निहोत्रं ता गावो वेदाङ्गानि च सर्वशः ॥
अफालकृष्टं व्रीहियवं नीवारं विघसानि च ।
हवींषि संप्रयच्छेत मखेष्वत्रापि पञ्चसु ॥
वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तयः स्मृताः ।
सद्यः प्रक्षालकाः केचित्केचिन्मासिकसंचयाः ॥
वार्षिकं संचयं केचित् केचिद्द्वादशवार्षिकम् ।
कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव च ॥

अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः।
ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः॥
भूमौ विपरिवर्त्तन्ते तिष्ठन्ति प्रपदैरपि।
स्थानासनैर्वर्त्तयन्ति सवनेष्वभिचिन्तने॥
दन्तोलूखलिकाः केचिदश्मकुट्टास्तथा परे।
शुक्लपक्षे पिबन्त्येके यवागूं क्वथितां सकृत्॥
कृष्णपक्षे पिबन्त्यन्ये भुञ्जते वा यथागमम्।
मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः॥
वर्त्तयन्ति यथान्यायं वैखानसगतिं श्रिताः।
एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम्॥
चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत्।
सद्यस्कारां निरूप्येष्टिं सर्ववेदान् सदक्षिणान्॥
आत्मयाजी चात्मरतिरात्मक्रीडात्मसंश्रयः।
आत्मन्यग्नीन् समारोप्य त्यक्त्वा सर्वपरिग्रहान्॥
सद्यस्कांश्च यजेद्यज्ञान् निष्टांश्चैवेह सर्वदा।
त्रींश्चैवाग्नीन्यजेत्सम्यगात्मन्येवात्मनेच्छया(?)त्॥
केशलोमनखान् छित्वा वानप्रस्थो मुनिस्ततः।
आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्मभिः॥
अभयं सर्वभूतेभ्यो दत्वा यः प्रव्रजेद्द्विजः।
लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते॥

शुक उवाच।

वर्त्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा।
योक्तव्योत्मा कथं शक्त्या वेद्यं चैकाक्षतापरम्॥

व्यास उवाच।

प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम्।

यत्कार्यं परमार्थन्तु तदिहैकमनाः शृणु ॥
कषायं धारयित्वा यः श्रेणिस्थानेषु च त्रिषु।
तद्भवानेवमभ्यस्य वर्त्ततां श्रूयतां तथा ॥
एक एव चरेद्धर्मसिध्यर्थमसहायवान्।
एकश्चरति यः पश्यन्न जहाति न हीयते ॥
अनग्निरनिकेतश्च ग्राममन्नार्थमाश्रयेत्।
अश्वस्तनविधानः स्यान्मुनिर्भावसमाहितः ॥
लघ्वाशी नियताहारः सकृदन्ननिषेविता।
कपालं वृक्षमूलानि कुचेलमसहायवान् ॥
उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम्।
यस्मिन् वाचः प्रविशन्ति कूपे चस्ता द्विपा इव।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित्।
ब्राह्मणानां विशेषेण नैव ब्रूयात् कथंचन ॥
यद् ब्राह्मणस्य कुशलं तदेव सततं वदेत्।
तूष्णीमासीत निन्दायां कुर्वन् भैषज्यमात्मनः ॥
येन पूर्णमिवाकाशं भवत्येकेन सर्वदा।
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥
येन केन चिदाच्छन्नो येन केन चिदाशितः।
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥
अहेरिव गणाद्भीतः सौहित्यान्नरकादिव।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥
न क्रुध्येन्न प्रहृष्येच्च मानितो मानितश्च यः।
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥
अनभ्याहतचित्तः स्यादनभ्याहतवान् भवेत् ।
निर्युक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम् ॥
अभयं सर्वभूतेभ्यो भूतानामभयं यतः ।
तस्य मोहादिमुक्तस्य भयं नास्ति कुतश्च न ॥
यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापि धीयन्ते पदजातानि कौञ्जरे ॥
एवं सर्वमहिंसायां धर्मार्थमपि धीयते ।
अमृतः सन्नित्यवसति यो हिंसां न प्रपद्यते ॥
अहिंसकः समः सत्यो धृतिमान् संयतेन्द्रियः ।
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥
एवं प्रज्ञा न तृप्तस्य निर्भयस्य निराशिषः ।
न मृत्युरतिगो भावः स मृत्युमधिगच्छति ॥
विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत्स्थितम् ।
स्वस्थमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ॥
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
निर्मुक्तबन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः ॥
सर्वाणि भूतानि सुखे वसन्ति सर्वाणि दुःखस्य भृशं त्रसन्ति ।
तेषां भयोत्पादनजातखेदः कुर्यान्न कर्माणि हि श्रद्दधानः ॥
सर्वात्मानं महात्मानं विधूममिव पावकम् ।
तपस्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥
यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः ।
आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलम् ।

अन्यो ह्यनान्तरात्मास्ति यः सर्वमनुपश्यति ॥
ज्ञानदीपनदीपेन पश्यन्नात्मानमात्मना ।
सर्वतः स्रोतसङ्घोरां नदीं लोकप्रवाहिनीम् ॥
लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम् ।
सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम् ॥
अव्यक्तप्रभवां शीघ्रां दुस्तरामकृतात्मभिः ।
प्रतरस्व नदीं बुद्ध्या कामग्राहसमाकुलाम् ॥
संसारसागरगमां योनिपातालदुस्तराम् ।
आत्मजन्मोद्भवां तात जिह्वा वार्त्तां दुरासदाम् ॥
यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः ।
तान्तीर्णः सर्वतो मुक्तो विधूतात्मात्मविच्छुचिः ॥
उत्तमां बुद्धिमास्थाय ब्रह्माभूयाद्भविष्यसि ।
सन्तीर्णः सर्वसंसारात् प्रसन्नात्मा विकल्मषः ॥
भूमिस्थानीव भूतानि पर्वस्थानि शामय ।
अक्रुद्ध्यन्न प्रहृष्यंश्च न नृशंसमतिस्तथा ॥
ततो द्रक्ष्यसि सर्वेषां भूतानां प्रभवाव्ययम् ।
एवं वै सर्वधर्मेभ्यो विशिष्टं मेनिरे बुधाः ॥
धर्मं धर्मविदां श्रेष्ठा मुनयस्तत्त्वदर्शिनः ।
आत्मनो व्यापिनो ज्ञानमिदं पुत्रानुशासनम् ॥
प्रयताय प्रवक्तव्यं हितायानुगताय च ।
आत्मज्ञानमिदं पुण्यं सर्वगुह्यतमं महत् ॥
अब्रवं यदहं तात आत्मसाक्षिकमञ्जसा ।
नैव स्त्री न पुमानेव नैव चेदं नपुंसकम् ॥
अदुःखमसुखं ब्रह्म भूलभव्यभवात्मकम् ।

नैतज्ज्ञात्वा पुमान् स्त्री वा पुनर्भवमवाप्नुते ॥
यथा मतानि सर्वाणि कथितानि मया तव ।
तत्प्रीतियुक्तेन गुणान्वितेन पुत्रेण सत्पुत्र दमान्वितेन ॥
पृष्टोऽसि संप्रीतिमता हितार्थं ब्रूयास्ततस्येह यदुक्तमेतद् ।
यदा चायं न बिभ्येति यदा चास्मान्न बिभ्यति ॥
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ।
यदा न कुरुते भावं सर्वभूतेषु पापकम् ॥
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ।
कामबन्धनमेवैकं नान्यदस्तीह बन्धनम् ॥
कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते ।
कामतो मुच्यमानस्तु धूमाभ्रादिव चन्द्रमा: ॥
विरजा: कालमाकाङ्क्षन् धीरो धैर्येण वर्तते ।
आपूर्यमाणमचलप्रतिष्टं समुद्रमाप: प्रविशन्ति यद्वत् ॥
सकामकामो न तु कामकाम: स वै कामात्स्वर्गमुपैति देही ।
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दम: ॥
दमस्योपनिषद्दानं दानस्योपनिषत्तप: ।
तपसोपनिषत्त्याग: त्यागस्योपनिषत्सुखम् ॥
सुखस्योपनिषत्स्वर्ग: स्वर्गस्योपनिषच्छम: ।
निष्प्रचारं मन: कृत्वा प्रतिष्टाप्य च सर्वश: ॥
यामयं लभते तुष्टिं सा न शक्या ह्यतो ऽन्यथा ।
येन तृप्यत्यभुञ्जानो येन तृप्यत्यवित्तवान् ॥
येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ।
संगुप्तान्यात्मनो द्वाराण्यभिधाय विचिन्तयन् ॥
यो ह्यास्ते ब्राह्मण: शिष्ट: स आत्मरतिरुच्यते ।

समाहिते परे सत्त्वे क्षीणकाममवस्थितम् ॥
सर्वतः सुखमन्वेति वपुश्चन्द्रमसं यथा ।
अविशेषाणि भूतानि गुणांश्च बहवो मुनेः ॥
सुखेनापोह्यते दुःखं भास्करेण तमो यथा ।
तमतिक्रान्तकर्माणमतिक्रान्तगुणक्षयम् ॥
ब्राह्मणं विषयाश्लिष्टं जरामृत्यू न विन्दतः ।

व्यास उवाच ।

हृदि कामद्रुमश्चित्रो मोहसंचयसंभवः ।
क्रोधमानमहास्कन्धो विधित्सापरिषेचनः ॥
तस्य चाज्ञानमाधारः प्रमादः परिषेचनम् ।
सोऽभ्यसूयापलाशो हि पुरादुष्कृतसारवान् ॥
संमोहचिन्ताविटपः शोकशाखोभयाङ्कुरः ।
मोहनीभिः पिपासाभिर्लताभिरनुवेष्टितः ॥
उपासते महावृक्षं खलु ध्वान्तं फलेप्सवः ।
आयासैः संयताः पाशैः फलदं परिवेष्ट्य तम् ॥
यस्तान् पाशान् वशे कृत्वा तं वृक्षमपकर्षति ।
गतः स दुःखयोरन्तं त्यजमानस्तयोर्द्वयोः ॥
आरोहत्यकृतप्रज्ञः सन्तापेन हि पादपम् ।
स तमेव ततो हन्ति विषग्रन्थिरिवातुरम् ॥
तस्यानुगतमूलस्य मूलमुद्धृयते बलात् ।
योगप्रसादात् कृतिना साम्येन परमासिना ॥
एवं यो वेद कामस्य केवलस्य निवर्त्तनात् ।
वधं वै कामशास्त्रस्य स सुखान्यभिवर्त्तते ।
दुष्टापूर्त्तादसाधूनां विगुणा जायते प्रजा ।

लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः॥
यज्ञात्प्रजा प्रभवति नभसोऽभ इवामलम्।
अग्नौ यासाहुतिर्ब्रह्मन्नादित्यमुपगच्छति॥
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।
यथा सर्वरसैस्तृप्ते नाभिनन्दति किंचन॥
शङ्कमानः फलं यज्ञे न यजेरन् कथञ्चन।
जायतेऽसाधवो धूर्त्ता लुब्धा वित्तप्रयोजनाः॥
ब्राह्मं वेदमधीयन्तस्तोषयन्त्यमरानपि।
अखिलं दैवतं सर्वं ब्रह्म ब्रह्मणि संश्रितम्॥
नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनैः।
सतां वर्त्मानुवर्त्तन्तो यजन्ते त्वविहिंसया॥

इति मोक्षधर्मे शुकानुप्रश्नः।

---

चिरकारिषु धीरेषु गुणोद्देश समाश्रयान्।
चिरेण मित्रं बध्नीयाच्चिरेण च कृतं त्यजेत्॥
चिरेण हि कृतं मित्रं चिरन्धारणमर्हति।
रागे दर्पे च माने च द्रोहे पापे च कर्मणि॥
अप्रिये चैव कर्त्तव्ये चिरकारी प्रशस्यते।
बन्धूनां सुहृदाञ्चैव भृत्यानां स्त्रीजनस्य च॥
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते।
एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः॥
चिरेण निश्चयं ज्ञात्वा चिरं न परितप्यते।
चिरं धारयते रोषं चिरं कर्म्म नियच्छति॥
पश्चात्तापकरं कर्म न किञ्चिदुपपद्यते।

चिरं वृद्धानुपासीत चिरमन्वास्य पूजयेत्॥
चिरं धर्मं निषेवेत कुर्याच्चान्वेषणं चिरम्।
चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च॥
चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम्।
ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम्॥
चिरं पृष्टोऽपि च ब्रूयाच्चिरं न परितप्यते।
चिरकारी हि मेधावी नापराध्यति कर्मसु॥
चिरकारी महाप्राज्ञो गौतमस्याभवत्सुतः।
चिरेण सर्वकार्याणि विमृश्यार्थान्प्रपद्यते॥
चिरं सञ्चयत्यर्थांश्चिरं जाग्रंश्चिरं स्वपन्।
चिरं कार्याभिपन्नश्च चिरकारी तथोच्यते॥
व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्याऽपरान् सुतान्।
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति॥
स चिरेण तथोक्त्वा च स्वभावाच्चिरकारिकः।
विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम्॥
पितुराज्ञां कथं कुर्मं न हन्यां मातरं कथम्।
पितुराज्ञापरो धर्मः स्वधर्मो मातृलक्षणम्॥
अस्वतन्त्रं च पुत्रत्वं किं नु मां नानुपीडयेत्।
स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत्।
पितरं वाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात्॥
मुच्यते बन्धनात् पुष्पं फलं वृन्तात्प्रमुच्यते।
क्लिश्यन्नपि सुतस्नेहैः पिता पुत्रं न मुञ्चति॥
एवं विचिन्तितं तावत्पुत्रस्य पितृगौरवम्।
पिता ह्यल्पतरं स्थानं चिन्तयिष्यामि मातरम्॥

यो ह्ययं मम सङ्घातो मर्त्यत्वे यावभौतिकः ।
अस्य मे जननीहेतुः पावकस्य यथारणिः ॥
मातृदेहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ।
श्रिया हीनोऽपि यो गेहमवेति प्रतिपद्यते ॥
पुत्रपौत्रोपपन्नोऽपि जननीं यः समाश्रितः ।
अपि वर्षशतस्यान्ते सद्द्विहाय नवच्चरेत् ॥
समर्थं वा ऽसमर्थं वा कृशं वाप्यथवाऽकृशम् ।
रचत्येव सुतं माता नान्यः पोष्टा विधानतः ॥
तदा सवृद्धो भवति तदा भवति दुःखितः ।
तदा शून्यं जगत्तस्य यदा मात्राद्वियुज्यते ॥
कुक्षिसंधारणाद्धात्री जननाज्जननी स्मृता ।
अङ्गानां वर्द्धनादम्बा वीरसत्वेन वीरसूः ॥
स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम् ।
नापराधोऽस्ति नारीणां नर एवापराध्यति ॥
सर्वकार्यापराध्यत्वान्नापराध्यति वाङ्गना ।
एवं विमृशतस्तस्य चिरकारितया बहु ॥
दीर्घः कालो व्यतिक्रान्तस्ततोऽस्याभ्यागमत्पिता ।
मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थितः ॥
विमृश्य तेन कालेन पत्न्यः संस्था व्यतिक्रमम् ।
सोऽब्रवीद्भृशसन्तप्तो दुःखेनाश्रूणि वर्त्तयन् ॥
श्रुतधैर्य्यप्रभावेन पश्चात्तापमुपागतः ।
आश्रमं मम संप्राप्तस्त्रिलोकेशः पुरन्दरः ॥
अतिथिव्रतमास्थाय ब्राह्मणं रूपमास्थितः ।
स मया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः ॥

अर्घ्यं पाद्यं यथान्यायं मया च प्रतिपादितः।
परवानस्मि वेत्युक्तः प्रणयिष्यति तेन च॥
अत्र वा कुशले जातस्त्रिया नास्ति व्यतिक्रमः।
एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः॥
अपराध्यति धर्मस्य प्रमादस्त्वपराध्यति।
ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्द्ध्वरेतसः॥
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे।
हत्वा साध्वीं च नारीं च व्यसनित्वाच्च वासिताम्॥
भर्त्तव्यत्वेन भर्त्ता च को नु मां तारयिष्यति।
अन्तरेण मयाज्ञप्तश्चिरकारीत्युदारधीः॥
यद्य चिरकारी स्यात्स मां त्रायेत किल्बिषात्।
चिरकारिक भद्रं ते भद्रं ते चिरकारिक॥
यद्य चिरकारी त्वं ततोऽसि चिरकारिकः।
त्राहि मां मातरं चैव तपो यच्चार्ज्जितं मया॥
आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः।
सहजं चिरकारित्वमतिप्रज्ञतया तव॥
सफलं ते तथा तेऽस्तु भवाद्य चिरकारिक।
एवं स गौतमो राजन् महर्षिर्दुःखितस्तदा॥
चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके।
चिरकारी तु पितरं दृष्ट्वा परमदुःखितः॥
शस्त्रं त्यक्त्वा ततो मूर्द्ध्ना प्रसादायोपचक्रमे।
गौतमस्तं ततो दृष्ट्वा शिरसा पतितं भुवि॥
पत्नीं वै वनिगकारां परामभ्युपगमन्मुदम्।
नहिसन्ति न संभेदं पत्नीता मद्दात्मनः॥

विजने चाश्रमस्थेन पुत्रश्चापि समाहितः।
ततः पित्रा चिरं स्तुत्वा चिरञ्चाघ्राय मूर्द्धनि॥
चिरं दोर्भ्यां परिष्वक्तश्चिरं जीवेत्युदाहृतः।
एवं स गौतमः पुत्रं प्रीतिहर्षसमन्वितः॥
अभिनन्द्य महाप्राज्ञः स्त्रिया सह परन्तप।
उपास्य वहुलास्तस्मिन्नाश्रमे सुमहातपाः॥
समाः स्वर्गगतो विप्रः पुत्रेण सहितस्तदा।
मोक्षधर्मे चिरकारिकोपाख्यानं नाम॥

इति श्रीभक्तिसागरे परमार्थनिरूपणे शक्रप्रह्लादसंवाद-बलिवासवसंवाद-शक्रनमुचिसंवाद-शुकानुप्रश्न चिरकारिकोपाख्याननिरूपणन्नाम सप्तमस्तरङ्गः।



भीष्म उवाच।

ईशोयं सततं देही नृपते पुण्यपापयोः।
ततो ज्ञानसमुत्थेन तमसा रुध्यतेऽपि च॥
यथाञ्जनमयो वायुः पुनर्मानःशिलं रजः।
अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन् दिशः॥
तथा कर्मफलैर्देही रञ्जितस्तमसा वृतः।
विवर्णो वर्णमाश्रित्य देहेषु परिवर्त्तते॥
ज्ञानेन हि सदा जन्तुरज्ञानप्रभवं तमः।
व्यपोहति तदा ब्रह्म प्रकाशति सनातनम्॥
अस्मिन्नर्थे पुरा गीतं शृणुष्वैकमना नृप।
यथा दैत्येन वृत्रेण भ्रष्टैश्वर्येण चेष्टितम्॥
निर्जितेनासहायेन हृतराज्येन भारत।

अशोचता शत्रुमध्ये बुद्धिमास्थाय केवलम् ॥
भ्रष्टैश्वर्यं पुरावृत्तमुशना वाक्यमब्रवीत् ।
कच्चित्पराजितस्याद्य न व्यथा तेऽस्ति दानव ॥

वृत्र उवाच ।

सत्येन तपसा चैव विदित्वा संशयं ह्यहम् ।
न शोचामि न हृष्यामि भूतानामागतिं गतिम् ॥
कालसञ्चोदिता जीवा मज्जन्ति नरकेऽवशाः ।
परितुष्टानि सर्वाणि दिव्यान्याहुर्मनीषिणः ॥
क्षपयित्वा तु तत्कालं गणितं कालनोदिताः ।
सावशेषेण कालेन सम्भवन्ति पुनः पुनः ॥
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
निर्गच्छन्त्यवशा जीवाः कामबन्धनबन्धनाः ॥
एवं संसरमाणांश्च जीवानहमदृष्टवान् ।
यथा कर्म तथा लाभ इति शास्त्रानुशासनम् ॥
तिर्यग्गच्छन्ति नरकं मानुष्यं दैवमेव च ।
सुखे दुःखे प्रिये द्वेष्ये चरित्वा पूर्वमेव च ॥
कृतान्तविधिसंयुक्तः सर्वो लोकः प्रपेद्यते ।
गतं गच्छन्ति चाध्वानं सर्वभूतानि सर्वदा ॥
कालसंख्यानसंख्यातं सृष्टिस्थितिपरायणम् ।
तं भाषमाणं भगवानुशना प्रत्यभाषत ॥
धीमन्दुष्टप्रलापांस्त्वं तात कस्मात्प्रभाषसे ।

वृत्र उवाच ।

प्रत्यक्षमेतद्भवतस्तथान्येषां मनीषिणाम् ।
मया यज्जयलुब्धेन पुरा तप्तं महत्तपः ॥

गन्धानादाय भूतानां रसांश्च विविधानपि ।
अवर्द्धंन्समाक्रम्य लोकान् वै स्वेन तेजसा ॥
ज्वालामालापरिक्षिप्तो वैहायसचरस्तथा ।
अजेयस्सर्वभूतानामसन्नित्यमपेतभीः ॥
ऐश्वर्यं तपसा प्राप्तं भ्रष्टं तच्च स्वकर्मणा ।
धृतिमास्थाय भगवन्नशोचामि ततस्त्वहम् ॥
युयुत्सुना महेन्द्रेण पुरा सार्द्धं महात्मना ।
ततो मे भगवान् दृष्टो हरिर्नारायणः प्रभुः ॥
नूनं तु तपस्तस्य सावशेषं ममास्ति वै ।
यदहं प्रष्टुमिच्छामि भगवन् कर्मणः फलम् ॥
ऐश्वर्यं वै महद् ब्रह्म वर्णे कस्मिन् प्रतिष्ठितम् ।
निवर्त्तते वापि पुनः कथमैश्वर्यमुत्तमम् ॥
कस्माद् भूतानि जीवन्ति प्रवर्त्तन्ते यथा पुनः ।
किं वा फलं परं प्राप्य जीवस्तिष्ठति शाश्वतः ॥
केन वा कर्मणा शक्यमथ ज्ञानेन केन वा ।
तदवाप्तुं फलं विप्र तन्मे व्याख्यातुमर्हसि ॥
इतीदमुक्तः स मुनिस्तदानीं प्रत्याह यत्तच्छृणु राजसिंह ।
मयोच्यमानः पुरुषर्षभत्वमनन्यचित्तः सहसोदनीयैः ॥

उशनोवाच ।

नमस्तस्मै भगवते देवाय प्रभविष्णवे ।
यस्य पृथ्वीतलं तात साकाशं बाहुगोचरम् ॥
मूर्द्धा यस्य त्वनन्तं च स्थानं दानवसत्तम ।
तस्याहं ते प्रवक्ष्यामि विष्णोर्माहात्म्यमुत्तमम् ।
तयोः संवदतोरेवमाजगाम महामुनिः ।

सनत्कुमारो धर्मात्मा संशयच्छेदनाय वै ॥
सुपूजितो सुरेन्द्रेण मुनिनोशनसा तथा ।
निषसादासने राजन् महार्हे मुनिपुङ्गवः ॥
तमासीनं महाप्राज्ञमुशना वाक्यमब्रवीत् ।
ब्रूह्यस्मै दानवेन्द्राय विष्णोर्माहात्म्यमुत्तमम् ॥
सनत्कुमारस्तु ततः श्रुत्वा प्राह वचोऽर्थवत् ।
विष्णोर्माहात्म्यसंयुक्तं दानवेन्द्राय धीमते ॥
शृणु सर्वमिदं दैत्य विष्णोर्माहात्म्यमुत्तमम् ।
विष्णौ स्थितं जगत्सर्वमिति विद्धि परन्तप ॥
सृजत्येष महाबाहो भूतग्रामं चतुर्विधम् ।
एष वा ह्रियते काले काले विसृजते पुनः ॥
अस्मिन् गच्छन्ति विलयमस्माच्चाप्रभवत्युत ।
नैव ज्ञानवता शक्यस्तपसा नैव चेज्यया ॥
संप्राप्तुमिन्द्रियाणान्तु संयमेनैव शक्यते ।
बाह्ये चाभ्यन्तरे चैव कर्मणा मनसि स्थितः ॥
निर्मलीकुरुते बुद्ध्या सोऽमुत्रानन्त्यमश्नुते ।
यथा हिरण्यकर्त्ता वै तप्तमग्नौ विशोधयेत् ॥
बहुशोऽतिप्रयत्नेन महतात्मकृतेन ह ।
तद्वज्जातिशतैर्जीवः शुद्ध्यते येन कर्मणा ।
यत्नेन महता चैवाप्येकजातौ विशुद्ध्यते ।
लीलयाल्पं यथा गात्रात्प्रमृज्यादात्मनो रजः ॥
बहुयत्नेन महता दोषनिर्हरणं तथा ।
यथा ह्यल्पेन माल्येन वासितं तिलसर्षपम् ॥
न मुञ्चति स्वकं गन्धं तद्वत्सूक्ष्मस्य दर्शनम् ।

तद्दैव बहुभिर्माल्यैर्वास्यमानं पुनः पुनः ॥
विमुञ्चति स्वकं गन्धं माल्यगन्धे च तिष्ठति ।
एवं जातिगतैर्युक्तो गुणैरेवं प्रसङ्गिषु ॥
बुद्ध्या निवर्त्तते दोषो यत्नेनासज्जेन ह ।
कर्मणा स्वानुरक्तानि विरक्तानि च दानव ॥
यथा कर्मविशेषांश्च प्राप्नुवन्ति तथा शृणु ।
यथावत्संप्रवर्त्तन्ते यस्मिंस्तिष्ठन्ति वा विभो ॥
तत्तेनुपूर्व्यामाख्यास्ये तदिहैकमनाः शृणु ।
अनादिनिधनः श्रीमान् हरिर्नारायणः प्रभुः ॥
स वै सृजति भूतानि स्थावराणि चराणि च ।
एष सर्वेषु भूतेषु चरस्थावर एव च ॥
एकादशविकारात्मा जगत्पिबति रश्मिभिः ।
पादौ तस्य महीं विद्धि मूर्द्धानं दिवमित्युत ॥
बाहवस्तु दिशो दैत्य श्रोत्रमाकाशमेव च ।
तस्य तेजोमयः सूर्यो मनश्चन्द्रमसि स्थितम् ॥
बुद्धिर्ज्ञानगता नित्यं रजस्त्वणसु प्रतिष्ठितः ।
भ्रुवोरनन्तरास्तस्य यशा दानवसत्तम ॥
नक्षत्रचक्रं नेत्राणि पादयोर्भूश्च दानव ।
रजस्तमश्च सत्वं च विद्धि नारायणात्मकम् ॥
सोश्रमाणां फलं तात कर्मणस्तत्फलं विदुः ।
अकर्मणः फलं चैव स एव परमव्ययः ॥
छन्दांसि यस्य रोमाणि त्वक्षरं च सरस्वती ।
बह्वाश्रयो बहुमुखो धर्मो हृदि समाश्रितः ॥
स ब्रह्म परमो धर्मस्तपश्च सदसच्च सः ।

श्रुतिशास्त्रग्रहोपेतः षोडशर्त्विक्क्रतुश्च सः ॥
पितामहश्च विष्णुश्च सोऽश्विनौ स पुरन्दरः ।
मित्रोऽथ वरुणश्चैव यमोऽथ धनदस्तथा ॥
ते पृथग्दर्शनास्तस्य स विन्दति तथैकताम् ।
एकस्य विद्धि देवस्य सर्वं जगदिदं वशे ॥
नानाभूतस्य दैत्येन्द्र तस्यैकत्वं तदव्ययम् ।
जन्तुः पश्यति ज्ञानेन ततः सत्वं प्रकाशते ॥
शतं सहस्राणि चतुर्दशेह परा गतिर्जीवगुणस्य दैत्य ।
आरोहणं तत्क्रममेव विद्धि स्थानं तथा निःसरणं च तेषाम् ॥
सदैव संहारमुपप्लवानि संभाव्य सन्तिष्ठति जीवलोके ।
ततोऽव्ययं स्थानमनन्तमेति देवस्य विष्णोरथ ब्रह्मणश्च ॥
शुद्धां गतिं तां परमां परैति शुद्धेन नित्यं मनसा विचिन्वत् ।
ततो ऽव्ययस्थानमुपैति ब्रह्म दुष्प्रापमभ्येति स शाश्वतं वै ॥
इत्येतदाख्यातमहीनसत्व नारायणस्येह वरं मया ते ।

वृत्र उवाच ।

एवं विषादो न च मेऽस्ति कश्चित्सम्यक् च पश्यामि वचस्तवैतत् ।
श्रुत्वा तु ते वाचमहीन सत्व विकल्मषोऽस्म्यद्य तथा विपाप्मा ॥
प्रवृत्तमेतद्भगवन् महर्षेर्महाद्युतेश्चक्रमनन्तवीर्यम् ।
विष्णोरनन्तस्य सनातनं तत्स्थानं विसर्गा यत्र सर्वे प्रवृत्ताः ॥
स वै महात्मा पुरुषोत्तमो वै तस्मिन् जगत्सर्वमिदं प्रतिष्ठितम् ।

भीष्म उवाच ।

एवमुक्त्वा स कौन्तेय वृत्रः प्राणानवासृजत् ।
योजयित्वा तथात्मानं परं स्थानमवाप्तवान् ॥

इति सनत्कुमारवृत्रसंवादः ।

---

युधिष्ठिर उवाच।

अयं स भगवान् देवः पितामह जनार्दनः।
सनत्कुमारो वृत्राय यत्तदाख्यातवान् पुरा॥

भीष्म उवाच।

मूलस्थायी महादेवो भगवान् स्वेन तेजसा।
तत्स्थः सृजति तान् भावान्नानारूपान्महामनाः॥
तुरीयार्द्धेन तस्येमं विद्धि केशवमच्युतम्।
तुरीयार्द्धेन लोकांस्त्रीन्भावयत्येष बुद्धिमान्॥
अर्वाक्स्थितस्तु यः स्थायी कल्पान्ते परिवर्त्तते।
स शेते भगवानप्सु योऽसावतिबलः प्रभुः॥
तान्विधाता प्रसन्नात्मा लोकांश्च इति शाश्वतान्।
सर्वाण्यशून्यानि करोत्यनन्तः सनातनः संचरते च लोकान्॥
स चनिरुद्धः सृजते महात्मा तत्स्थं जगत्सर्वमिदं विचित्रम्।

जैमिनिरुवाच।

कस्मान्मानुषतां प्राप्तः कृतकृत्योऽपि स प्रभुः।
वासुदेवोऽखिलाधारः सर्वकारणकारणम्॥

पक्षिण ऊचुः।

नमस्कृत्य सुरेशाय विष्णवे प्रभविष्णवे।
पुरुषायाप्रमेयाय शाश्वतायाव्ययाय च॥
चतुर्व्यूहात्मने तस्मै निर्गुणायागुणाय च।
वरिष्ठाय गरिष्ठाय वरेण्यायामिताय च॥
यज्ञाङ्गायाखिलाङ्गाय वेदान्तैरीरिताय च।
यस्मादणुतरं नास्ति यस्मान्नास्ति बृहत्तरम्॥
येन विश्वमिदं व्याप्तमेतेन जगदादिना।

आविर्भावतिरोभावदृष्टादृष्टविलक्षणम् ॥
वदन्ति यत्सृष्टमिदं तथैवाप्युपसंहृतम् ।
ब्रह्मणे वादिदेवाय नमस्कृत्वा समाधिना ॥
ऋक्सामाद्यङ्गिरन् वक्तैर्यः पुनाति जगत्त्रयम् ।
प्रवक्ष्यामो मतं कृत्स्नं व्यासस्याद्भुतकर्मणः ॥
येन भारतमुद्दिश्य धर्माद्याः प्रकटीकृताः ।
आपो नारा इति प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः ॥
अयनन्तस्य ताः पूर्वं तेन नारायणः स्मृतः ।
स देवो भगवान्पूर्वं व्याप्य नारायणो विभुः ॥
चतुर्द्धा संस्थितो ब्रह्मन् सगुणो निर्गुणस्तथा ।
एका मूर्त्तिरनिर्देश्या शुक्लां पश्यन्ति तां बुधाः ॥
ज्वालामालोपरुद्धाङ्गी निष्ठा सा योगिनां परा ।
दूरस्था चान्तिकस्था च विज्ञेया सा गुणातिगा ॥
वासुदेवाभिधाना सा निर्ममत्वेन दृश्यते ।
रूपवर्णादयस्तस्या न भावाः कल्पनामयाः ॥
अस्त्येव सा सदा शुद्धा सुप्रतिष्ठैकरूपिणी ।
द्वितीया पृथिवी मूर्द्धा शेषाख्याधारयत्यधः ॥
तामसी सा समाख्याता तिर्यक्त्वं समुपाश्रिता ।
तृतीया कर्मकुरुते प्रजापालनतत्पराम् ॥
सत्वोद्रिक्ता तु सा ज्ञेया सत्त्वसंस्थानकारिणी ।
चतुर्थी जलमध्यस्था शेते पन्नगतल्पगा ॥
रजस्तस्या गुणः सर्गं स करोति सदैव हि ।
या तृतीया हरेर्मूर्त्तिः प्रजापालनतत्परा ॥
सा तु धर्मव्यवस्थानं करोति नियतं भुवि ।

प्रोद्धृता न सुरा हन्ति धर्मव्युच्छित्तिकारिणः ॥
याति देवान्सतत्वस्थान् धर्मरक्षापरायणान् ।
यदा यदा हि धर्मस्य ग्लानिः समुपजायते ॥
अभ्युत्थानमधर्मस्य तदात्मानं सृजत्यसौ ।
भूत्वा पुरा वराहेण तुण्डेनायोनिरस्य च ॥
एकया दंष्ट्रयोत्खाता नलिनीव वसुन्धरा ।
कृत्वा नृसिंहरूपं च हिरण्यकशिपुर्हतः ॥
विप्रचित्तिमुखाश्चान्ये दानवा विनिपातिताः ।
वामनादींस्तथैवान्यान्न संख्यातुं समुत्सहे ॥
अवतारांश्च तस्येमान् माथुरः सांप्रतस्त्वयम् ।
इति सा सात्विकी मूर्त्तिरवतारं करोति वै ॥
प्रद्युम्नेति च सा ख्याता रक्षाकर्मण्यवस्थिता ।
देवत्वेऽथ मनुष्यत्वे तिर्य्यग्योनौ च संस्थिता ॥
गृह्णाति तत्स्वभावं च वासुदेवेच्छया सह ।
इत्येतत्ते समाख्यातं कृतकृत्योपि यत्प्रभुः ॥
मानुषत्वं गतो विष्णुरनादिनिधनोऽव्ययः ।
इति चतुर्व्यूहावतारकथनम् ॥

युधिष्ठिर उवाच ।

शोकदुःखाच्च मृत्योश्च त्रसन्ते प्राणिनः सदा ।
उभयं नो यथा न स्यात्तन्मे ब्रूहि पितामह ॥

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं समङ्गस्य च भारत ॥

नारद उवाच ।

उरसेव प्रणमसे बाहुभ्यां तरसीव च ।
संप्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ॥
उद्वेगं न हि ते कश्चित्सुसूक्ष्ममपि लक्षये ।
नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ॥

समंग उवाच ।

भूतं भव्यं भविष्यच्च सर्वं वै तत्तु नारद ।
तेषां तत्त्वानि जानाति ततो न विमना ह्यहम् ॥
अगाधाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद ।
अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ॥
विहितेनैव जीवन्ति अरोगा हि दिवौकसः ।
बलवन्तोऽबलाश्चैव तस्मादस्मान् सभाजय ॥
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
शोकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः ॥

यदा न शोचेन्न हि किन्तु तत्स्याद्धर्मेण वा नारद कर्मणा वा ।
कृतान्तवश्यानि यदा सुखानि दुःखानि कायं न विधर्षयन्ति ॥
यस्मै प्राज्ञः कथयन्ते मनुष्याः प्रज्ञामूलो हीन्द्रियाणां प्रसादः ।
मुह्यन्ति शोचन्ति तथेन्द्रियाणि प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ॥
मूढस्य दर्पः स पुनर्मोह एव मूढस्य नायं न परोऽस्ति लोकः ।
न ह्येव दुःखानि सदा भवन्ति सुखस्य वा नित्यशो लाभ एव ॥
भवात्मकं सम्परिवर्त्तमानं न मादृशः संज्वरं जातु कुर्यात् ।
इष्टान् भोगान्नानुरुन्ध्येत्सुखं वा न चिन्तयेद् दुःखमभ्यागतं वा ॥
समाहितेन स्पृहयेत् परेषां नानागतञ्चाभिनन्देच्च लाभम् ।
न चापि हृष्येद्विपुलेऽर्थलाभे तथाऽर्थनाशे न च वै विषीदेत् ॥

न बान्धवा न च वित्तं कुलीनं न च श्रुतं न च मन्त्रा न वीर्यम्।
दुःखात्त्रातुं सर्व एवोत्सहन्ते परत्र शीलेन तु यान्ति शान्तिम्॥

नास्ति बुद्धिरयुक्तस्य न योगाद्विन्दते सुखम्।
धृतिश्च दुःखत्यागश्चोभयं तु सुखं नृप॥
प्रियं हि हर्षजननं हर्ष उत्सेक वर्द्धनम्।
उत्सेको नरकायैव तस्मात्तान् संत्यजाम्यहम्॥
एतान् शोकमयोत्सेकान् मोहनान् सुखदुःखयोः।
पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात्॥
अर्थकामौ परित्यज्य विशोकोऽधिगतज्वरः।
तृष्णामोहौ तु संत्यज्य चरामि पृथिवीमिमाम्॥
न च मृत्योर्न वा धर्मान्नलोभान्न कुतश्च न।
पीतामृतस्येवात्यन्तमिह चामुत्र चाभयम्॥
तेन नारद संप्राप्तो न मां शोकः प्रबाधते।
इति मोक्षधर्मे समंगनारदसंवादः॥

युधिष्ठिर उवाच।

अतत्त्वज्ञस्य शास्त्राणां सततं संशयात्मनः॥
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह।

भीष्म उवाच।

गुरुपूजा च सततं वृद्धानां पर्युपासनम्॥
श्रवणं चैव शास्त्राणि कूटस्थं श्रेय उच्यते।
अत्राप्युदाहरन्तीममितिहासं पुरातनम्॥
गालवस्य च संवादं देवर्षेर्नारदस्य च।
वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियम्॥
श्रेयस्कामं जितात्मानं नारदं गालवोऽब्रवीत्।

भगवन्नाश्रमाः सर्वे पृथगाचारदर्शनाः ॥
इदं श्रेय इदं श्रेय इति सर्वे प्रबोधिताः।
तांस्तु विप्र स्थितान्दृष्ट्वा शास्त्रैः शास्त्राभिनन्दितः ॥
स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे।
शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा ॥
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम्।
एतस्मात्कारणाच्छ्रेयः कलिलं प्रतिभाति मे ॥
ब्रवीतु भगवांस्तन्मे उपपन्नोऽस्म्यधीहि भो।

नारद उवाच।

आश्रमास्तात चत्वारो यथा संकल्पिताः पृथक्।
तान् सर्वाननुपश्य त्वं समाश्रित्येति गालव ॥
तेषां तेषां तथा हि त्वमाश्रमाणां ततस्ततः।
नाना रूपं गुणोद्देशं तस्य विप्र स्थितं पृथक् ॥
नयन्ति चैव ते सम्यगभिप्रेतमसंशयम्।
ऋज्वपश्यंस्तथा सम्यगाश्रयाणां परां गतिम् ॥
यत्वनिश्रेयसं सम्यक् तथैवासंशयात्मकम्।
अनुग्रहं च मित्राणाममित्राणां च निग्रहम् ॥
संग्रहं च निसर्गस्य श्रेय आहुर्मनीषिणः।
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ॥
सद्भिश्च समुदाचारः श्रेय एतदसंशयम्।
मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम् ॥
वाक् चैव मधुरा प्रोक्ता श्रेय एतदसंशयम्।
दैवतेभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि ॥
असन्त्यागश्च भृत्यानां श्रेय एतदसंशयम्।

सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम्॥
यद्भूतहितमत्यन्तमेतत्सत्यं ब्रवीम्यहम्।
अहङ्कारस्य च त्यागः प्रणयस्य च निग्रहः॥
सन्तोषश्चैकचर्या च कूटस्थं श्रेय उच्यते।
धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च॥
ज्ञातार्थानां च जिज्ञासा श्रेय एतदसंशयम्।
शब्दरूपरसस्पर्शान् सह गन्धेन केवलान्॥
नात्यर्थमुपसेवेत श्रेयसोऽर्थी कथञ्चन।
नात्यर्थमुपसेवेत श्रेयसोर्थी कथञ्चन॥
नक्तंचर्या दिवास्वप्नमालस्यं पैशुनं मदम्।
अतियोगमयोगञ्च श्रेयसोऽर्थी परित्यजेत्॥
आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया।
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात्॥
निर्गुणास्त्वेव भूयिष्टमात्मसंभाविता नराः।
दोषैरन्यान् गुणवतः चियन्त्यात्मगुणक्षयात्॥
अनुच्यमानास्तु पुनस्ते मन्यन्ते महाजनान्।
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः॥
अब्रुवन् कस्यचिन्निन्दामात्मपूजामवर्णयत्।
विपश्चिद्गुणसंपन्नः प्राप्नोत्येव महद्यशः॥
अब्रुवन् चातिसुरभिर्गन्धः सुमनसां शुचिः।
तथैवाव्याहरन्भाति विमलो भानुरम्बरे॥
एवमादीनि वाक्यानि परित्यक्तानि मेधया।
ज्वलन्ति यशसा लोके यान्ति न व्याहरन्ति च॥
न लोके दीप्यते सूर्यः केवलात्मप्रशंसया।

तः समासो गृह्यते प्रतिपदोक्तत्वान्न तु कर्तृकरणे कृतेति तेन त्वयका कृतमित्यत्र निषेधो नेत्युक्तम्। तदनवधानात्। तथाहि। तृतीयासमासार्थेत्यादि विभाषा दिक्समास इत्यतः समासग्रहणेऽनुवर्तमाने पुनः समासग्रहणाल्लभ्यते। तत्र वाक्यं लौकिकमलौकिके निषेधवैयर्थ्यात्। तच्च प्रतिपदोक्तसमासग्रहे सत्येव सम्भवति। अन्यथा न त्वत्कृतमित्यादि कर्तृकरणतृतीयासमासप्रकृतिभूतालौकिकवाक्ये ऽकजभावार्थं संज्ञानिषेधसम्भवात्। एवञ्च यावत्प्रतिपदोक्तसमासग्रहणं न सिद्धं तावदलौकिकवाक्यस्यैव तादर्थ्याद्ग्रहणं स्यादिति त्वयका कृतमिति लौकिकवाक्योदाहरणमनुपपन्नमिति। न च तृतीयासमास इति सर्वनामत्वविधातस्य भावित्वादकृतव्यूहपरिभाषयाऽलौकिकवाक्यस्यानामकचो निवृत्तिसिद्धेः किं तदर्थं समास इति लौकिकवाक्यनिवृत्त्यर्थमेव तत्स्यादिति वाच्यम्। तृतीयासमास इति समासस्यैव त्वन्मते सर्वनामत्वनिवृत्तेरवयवस्य सर्वनामत्वादकृतव्यूहपरिभाषाऽप्रवृत्तेः इष्टविषयेऽतिभवकानित्यत्वेनाकृतव्यूहपरिभाषानभ्युपगमादित्यलम्। यच्च द्वन्द्वे च प्रविष्टानां सर्वादीनां सर्वनामसंज्ञा निषिध्यते तेन मासपूर्वाणां पूर्वापराधरा-

णामित्यादावामो न सुट् । समुदायस्य संज्ञानिषेधे ऽप्यवयवस्य सर्वनामत्वात्तदन्तविधिनाऽङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति सर्वनामोत्तरपदत्वात् सुट् स्यात्। नचैवमपि सर्वनामसञ्ज्ञायां तदन्तविधिसद्भावात् सर्वाद्यन्तत्वात् समुदायस्य सर्वनामत्वात् सुट् दुर्वारः सर्वनामसंज्ञायां तदन्तविध्यभावस्य प्रागेव प्रपञ्चितत्वात्। परन्तु द्वन्द्वे यानि सर्वादीनीति न सम्बन्धः कारकाणां क्रिययैवान्वयात्। न च विद्यमानानीत्यध्याहारः गौरवात्। निषिध्यायाः भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्चेति। तच्चिन्त्यम्। सर्वादीनि सर्वनामानीति नेति च द्वन्द्वे चेति सूत्रेऽनुवर्त्तते तथाच द्वन्द्वे सर्वादीनि सर्वनामानि न भवन्तीति वचनव्यक्तिलाभे सर्वाद्यधिकरणनिषेधस्यैव लाभादनन्यगत्या विद्यमानानीत्यध्याहारस्वीकारात्। भूतले देवदत्तो न पचतीत्यत्र भूतलस्येवेहापि द्वन्द्वस्याध्याहारं विनैवान्वयाच्च॥

## पद्दन्नो—।

शीर्षं छन्दसीत्यतः छन्दसीत्यनुवर्त्तते ऽपोभीतिसूत्रस्थे मासश्छन्दसीतिवार्त्तिके छन्दोग्रहणात् क्वचिद्भाषायामपि पदादयो भवन्तीति ज्ञाप्यत इत्याहुरिति

कैय्यटः । काशिकायान्तु केचिच्छन्दोग्रहणमनुवर्त्तय-न्तीत्युक्ताऽन्ये नानुवर्त्तयन्तीति मन्तारं पङ्क्थासुद्वर्तित-स्य चेतिभाष्यप्रयोगोपष्टब्धमुक्तम् । युक्तं चैतत् । छन्द-सीत्यस्य ये च तद्धित इत्यत्राननुवृत्तेर्ह्रदत्तादिसंमतत्वान्मण्डूकप्लुताश्रयणे स्वरितत्वकल्पने च गौरवात् । मानाभावात् । मासश्छन्दसीति छन्दोग्रहणानाञ्च-स्याच्च । यत्तु निर्जरस इत्यत्र रामयोरित्यादौ च सुड-नपुंसकस्येत्यादि भसंज्ञान्तमनुपन्यस्य दतः दतेत्यत्रो-पन्यस्तम् । तदनवधानात् । तथाहि । स्वादिष्विति पद-त्वस्य प्रगनुक्तत्वेन तन्निमित्तरुत्वयलोपप्रसक्तौ तन्नि-वृत्तये भत्वमप्यनुपन्यसनीयमिति निर्जरस इत्यत्र रामयोरित्यादौ च नोक्तोपन्यास इति यदि तदा दतः दतेत्यत्राप्युक्तरीत्या जशोऽप्रसक्तौ तदुपन्यासो व्यर्थः । यदि च कार्यान्तरार्थेन स्वादिष्विति पदत्वेन प्रसक्तस्य जशो निवृत्तये भत्वस्य ततः पूर्वमनुवृत्त्यर्थमुपजीव्य-स्य सुदन्नयामित्याद्यर्थमवश्यं वक्तव्यस्य च स्वौदिष्विति पदत्वस्य ततः पूर्वं च तदुपजीव्यस्य सर्वनामस्थानसं-ज्ञासूत्रस्य दतः दतेत्यत्रोपन्यसनन्तदा निर्जरस इत्या-दावपि तुल्यम् ॥

## अल्लोपोऽनः ।

अत्र प्राञ्चः । अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः

स्यादिति तथा सत्यनस्त्वचणेत्यादावतिव्याप्तिरिति केचि-त्। तन्न। प्राचां ग्रन्थे हि भस्येत्यकारस्य विशेषणं तदर्थं कार्यकालं संज्ञापरिभाषमिति यजाद्यसर्वना-मस्थानपरस्येति। तत्परञ्च येननाव्यवधानमिति न्यायेन नकारमात्रव्यवहितस्याकारस्य गृह्यते तेनोक्तदोषान-वकाशात्। अत्र च व्याख्यानेऽन इत्यस्याङ्गेन सामाना-धिकरण्यान्वयोऽनुकूलः अङ्गावयवस्येति व्याख्याने तु वैय्यधिकरण्यान्वयापत्तिरिति। यूष्ण इत्यत्राल्लोपस्य स्थानिवद्भावे तदभावे वा न षात्परत्वप्रयुक्तो णः। किं त्वाद्ये ऽड्व्यवाय इति द्वितीये ष्टुत्वेन। तथा च षग्रहणमु-त्तरार्थमित्याकरे स्थितमितीह रषाभ्यामित्यस्योपन्या-सो रभसादिति प्रकाशोक्तावुत्तरार्थतयापीह षग्रहणं स्थितम्। ततश्च यूष्ण इत्यादौ रषाभ्यामित्यस्य प्रवृत्तिः केन वार्यतामिति केचित्। तन्न। षग्रहणमुत्तरार्थमि-तिवृत्तिग्रन्थमड्डादिव्यवायेपि णत्वं वक्ष्यति तस्मादपि यथा स्यादिति मिश्रैर्व्याख्यायार्थिहार्थमपि कस्मान्न भवत्यत आह ष्टुत्वेनैव सिद्धमेतदित्युत्तरग्रन्थोऽवतारि-तस्तेन प्रयोजनाभावाद्रषाभ्यामित्यत्र षो न सम्बध्यते किं त्वट्कुप्वाङित्यादावेवेति प्रतीतेः। तस्मादिह रषा-भ्यामित्युपन्यासो रभसादिति युक्तमुक्तम्। यत्तूत्तरा-र्थतयापीह षग्रहणं स्थितमित्युक्तिः सा न प्रकृतोपयो-

गिनी । तस्येह स्थितत्वेपि न नकारेण सम्बन्धः प्रयोजनाभावादिति । यत्तु पद्दन्न इति सूत्रे प्रभृतिग्रहणं प्रकारार्थं तेन पदङ्घ्रिस्सरणोऽस्त्रियां, स्वान्तं ह्नन्मानसं मन इति सङ्गच्छत इति । तदयुक्तम् । एतेषां पदादीनां पदाद्यादेशत्वे पादादिभ्यः पृथक् पदादिवचनस्य कोशेऽसंगतत्वात् । न हि स्थान्यादेशयोः कोशे पृथगुपादाने प्रयोजनमस्ति । स्थान्युपादानेनैव तदर्थाभिधानसामर्थ्यादादेशस्यानुपादानेपि क्षत्यभावात् । अत एव दन्तनासिकानामपि दत्नासादीनाममरेणानभिधानमिति । न च पदाद्यादेशानां छान्दसत्वेन केषांञ्चिद्भाषाविषयत्वं न सर्वेषामिति दतादीनां कोशेऽनुपन्यासे विरोधो न विरुद्ध इति वाच्यम् । पदादीनां छान्दसत्वस्य प्रागेव प्रत्याख्यानात् । उक्तज्ञापकेन मासशब्दस्य भाषाविषयत्वावश्यकत्वे तदनुपन्यासविरोधस्यापरिहार्यत्वाच्च । किंच पदङ्घ्रिरित्यादौ पदादयः पादाद्यादेशपदाद्यनुकरणानीति न प्रकृते पदाद्यादेशत्वं पदादीनामिति न प्रकृतसङ्गतिः ॥

## आङो नाऽस्त्रियाम् ।

पुंसीति नोक्तं नपुंसके अमुनेत्यसिध्यापत्तेः मुत्वस्यासिध्या इकोऽचीति नुमोऽप्रवृत्तेः नादेशे तु

मुत्वं नासिद्धं न मु न इति निषेधात्। यत्तु नमुन इति निषेधो नुम्येवास्तु नेत्यकारस्योच्चारणार्थ-त्वादिति वाच्यम्। अमुष्मै कुलायेत्याद्यसिध्यापत्ते-रिति। तत्र नुम्यमुनेत्यसिध्यापत्त्या शङ्काया निर्मूलत्व-मुत्तरे एतदनुक्तेर्न्यूनत्वं चेत्यवधेयम्। नच नेत्युक्त्या नादेशोऽपि संग्राह्यः। तत्र विशिष्टविधाने नकारविधा-नाभावाच्च। किं च स्मायादौ मुत्वस्यासिद्धत्वेन पूर्वं स्मायादिसिद्धौ सत्यपि मुत्वेऽजादिपरत्वाभावान्नुम-प्रसक्तौ कथममुष्मा इत्याद्यसिद्धिरिति॥

# अच्च घेः।

अदिति तपरत्वं बुद्धावित्यादौ टाब् माभूत्। औत-स्तित्वं स्वरितार्थम्। न विभक्ताविततीत्वनिषेधस्तु नानित्य-त्वादिति तत्रैवोक्तमिति प्रकाशः। तत्र इतीति हेतौ। तत्रैवोक्तं न विभक्तावित्यत्रैव ङेरैतश्च तकार उच्चार-णार्थ इत्युक्तमित्यर्थः। तत्र चकारोऽतस्तकारसमुच्च-यार्थः। तुपाठे तु स चार्थः। तथा चानित्यत्वान्निषेध-स्याप्रवृत्त्या सम्भावितत्वमिति प्रसक्तं स्वरितत्वं लक्ष्ये-ऽदर्शनान्नास्तीति प्रयोजनाभावादौत्सर्गिकनिषेधाच्च तकारस्यनेत्संज्ञा। संनिपातपरिभाषया टाबभावसिद्धेरु-च्चारणार्थत्वमेवेति भावः। एवं च यथाश्रुतार्थमर्थमभि-

प्रेत्य पूर्वापरविरोधाद्युद्भावनं केषाञ्चित् प्रत्युक्तम् । यत्तु युक्तं चोच्चारणार्थत्वं न तु स्वरितार्थत्वं स्तीर्णे बर्हिषि समिधाने अग्नाविल्यादौ स्वरितत्वादर्शनादिति । तच्चिन्त्यम् । औतः स्वरितत्वेऽप्यग्निशब्देकारस्योदात्तेऽदादेशे स्वरितेन सहैकादेश उदात्तेनेत्युदात्तैकादेशविधानेन स्वरितत्वादर्शनसम्भवेनौतः स्वरितत्वाभावे प्रकृतोदाहरणे तददर्शनस्याप्रयोजकत्वात् । क्वावरमित्यादावुदात्तार्थमेकादेश उदात्तेनेत्यत्रानुदात्तस्येत्यनुवृत्तेस्तैरेवान्यत्र प्रतिपादनादिति। यथाश्रुतस्वरितार्थमपि नातीवदुष्यतीत्येके । तन्मन्दम् । औतः स्वरितत्वेनाव्ययमित्यादिवच्छेषनिघात उदात्तैकादेशासंभवादिति ॥

## अनङ् सौ ।

सोर्डेविधानेन सिद्धेऽनङ्विधानं क्वचिदनङः सत्त्वं ज्ञापयति तेनोशनसः सम्बुद्धौ वाऽनङ् वाच्य इति न वक्तव्यमिति प्राञ्चः । तच्चानङ् सावित्यतः सोर्डेत्यत्र किं लाघवं ङित्वसामर्थ्येन टिलोपविधिकल्पनायां प्रत्युत गौरवम् । अस्यैव सूत्रस्य ऋदुशनसित्यत्राप्यनुवर्त्तनीयत्वेनोशनेत्यत्र सर्वनामस्थाने चेति दीर्घप्रसङ्गश्चेति चिन्त्यम् । गौणत्वेऽप्यनङ्णित्वे भवतः । येन विधिरित्यादिसूत्रेषु परमसखायावित्यादेर्भाष्ये उदाहरणात् । अयं

बहुव्रीहिः तत्पुरुषे हि टचा भाव्यमिति कैयटेन तद्व्याख्यानात् । नेति हरदत्तः । अत एव शेषोऽप्यसखीति सूत्रे शोभनः सखाऽस्य सुसखिरिति स उदाजहार । न्यासकारोऽप्येवम् । तयोरयं भावः । समासान्तविधेरनित्यत्वेन भाष्यं तत्पुरुषपरमिति ॥

## हल्ङ्याप्—॥

ननु संयोगान्तलोपेन सिद्धौ किमाद्यहल्पदेनेति चेन्न । संयोगान्तलोपस्यासिद्धत्वेन सखेत्यादौ नलोपानापत्तेः । अभिनोऽत्रेत्याद्यसिद्धेश्च । हरदत्तस्तु न ङिसम्बुध्योरिति ज्ञापकान्नकारविभक्त्योरानन्तर्ये सति संयोगान्तलोपस्यासिद्धत्वेन सखेत्यादौ नलोपसिद्धिः । नकारेत्याद्युक्त्या पचन्नित्यत्र नलोपो नेति । अत्र प्रकाशकृतः । नैतद् ज्ञापकं हि चर्मन्निति नपुंसकार्थत्वादिति । तत्र केचित् । नपुंसके लुका लुप्ते प्रत्ययलक्षणाभावेन सम्बुद्धौ वा नपुंसकानां नलोपो वाच्य इत्यस्यावश्यकतया च सम्बुद्धिग्रहणस्य नपुंसकविषयत्वासंभवेनोक्तज्ञापकस्यानित्यत्वादिति तन्न । न लुमतेत्यस्यानित्यतया प्रत्ययलक्षणासम्भवेन तेन च सम्बुद्धौ वेत्यस्यानावश्यकतया सम्बुद्धिग्रहणस्य नपुंसकविषयत्वसम्भवात् । यदप्यभिनोऽत्रेत्युक्तमपि संयोगान्तलोपो

रौत्वे इति सिद्धकाण्डे पाठात् सिद्धमिति । तदपि चिन्त्यम् । उत्वे सिद्धत्वेऽपि पूर्वरूपत्वे तदभावात्तदसिद्धेस्तादवस्थ्यात् संयोगान्तलोपापवादे संयोगादिलोपे वौरिति दीर्घासिद्धे सुपीरित्याद्यसिद्धेश्चेति । इह ङ्यन्तादावन्नादित्यादिप्रक्रियायन्ययोजनं तत्प्रदीपादवधेयम् । एवमन्यत्राप्यूह्यमिति संक्षेपः । अव्ययास्मद्युष्मत्षट्संज्ञकास्त्रिषु सरूपा इत्याचार्यवचः । केचित्त्वव्ययमिह न पठन्ति । अव्ययानां निर्लिङ्गत्वादव्ययीभावस्य क्लीबत्वमपि लिङ्गान्तराभावाच्चेति च तत्र हेतुमाहुः । तच्चिन्त्यम् । त्रिषु सरूपा इत्यस्य लिङ्गविशेषप्रयुक्तकार्यविशेषरहिता इत्यर्थस्वीकारात् । यथाश्रुते तु युष्मदस्मदोर्लिङ्गयोगस्य भाष्यकैयटयोराकमसूत्रे तद्धितश्चासर्वविभक्तिरिति सूत्रे कैयटे च षट्संज्ञकानां लिङ्गयोगस्यात एव तेभ्यः स्त्रीप्रत्ययनिषेधप्रत्याख्यानस्याकच्सूत्रे कैयटे स्त्रियामितिसूत्रस्थभाष्ये चोक्तत्वेनासङ्गतेः । न च युष्मदस्मद्भ्यां टाबभावाय टिलोपपक्षस्याप्यङ्गीकारेण षड्भ्यः स्त्रीप्रत्ययनिषेधेन चास्मदादीनां लिङ्गायोगपक्षस्याप्यनुमितत्वात्तत्पक्षाभिप्रायेण यथाश्रुतेऽप्युपपत्तिरिति वाच्यम् । तथा सत्यलिङ्गासंख्यमव्ययमिति तद्धितश्चेति सूत्रे भाष्यकृताऽव्ययादाप्सुप इत्यत्राव्ययस्यालिङ्गत्वेनाब्ग्रहणप्रत्याख्यानस्य वार्त्तिककृतो-

क्त्वेऽप्यव्ययादाप्सुप इत्यनेन सदृशं त्रिषु लिङ्गेष्वित्यनेन चाव्ययस्यापि लिङ्गयोगपक्षस्यानुमानेनाव्ययत्वागस्यानुचितत्वात्। अव्ययीभावस्य भाष्येऽव्ययत्वप्रत्याख्यानाच्च। यत्तु बहुवचनान्तं कौरव्यादिशब्दमदन्तेष्वनुपन्यस्येरन्तेषु तादृशस्योडुलोमशब्दस्योपन्यसनम्। यच्चादन्तेषु उडुलोमा इति नित्यबहुवचनान्तमनुपन्यस्येदन्तेषु तदुपन्यसनं तदनवधानात्। आचार्यैस्तु तद्धितनिरूपणप्रस्तावे गार्ग्यादीनामुक्तवैलक्षण्यस्य स्फुटत्वादिह ते नोपन्यस्ताः॥

## एरनेकाचः—।

अत्र गतिकारकेत्यादिप्रक्रियाग्रन्थे क्विबन्तस्येति स्वर्नदृष्टिस्तेषा तत्र यथाश्रुतो नानियमः। निन्युरित्यादौ यणभावापत्तेः किन्तु विशेषविषयः। विशेषस्य पदपूर्वोपधस्येति वार्त्तिकोक्तो गृह्यते विशेषान्तरस्यानुपस्थितेः। तथा चोपधापूर्वस्मिन् पदे गतिकारकत्वनियमोऽनेनोच्यते। एवं च पदपूर्वोपधस्याङ्गस्य चेद्गतिकारकपूर्वोपधस्यैवेति पर्य्यवसितम्। तेन परमधियौ देवदत्तपरमधियावित्यादौ न यण्। परमदीध्यौ परमप्रध्यौ निन्यतुरित्यादौ यण् भवति। यत्तु गतिकारकेतरपूर्वपदस्य यण् नेष्यत इति। तन्न देवदत्तपरमधियावित्यत्र

यण् स्यात् । परमदीध्याविल्यादौ च न स्यादिति दोषः । दुर्धियः वृश्चिकभियेत्यादौ दुष्टा धीर्यस्येत्यर्थे दुरो धीशब्दार्थक्रियायोगाभावेन तं प्रत्यगतित्वात् वृश्चिकसम्बन्धिनो भीरित्युत्तरपदलोपिसमासे वृश्चिकस्याकारकत्वाच्च न दोष इति केचित् । तच्चिन्त्यम् प्रकृष्टा धीरित्यादाविवेहापि धीशब्दार्थे दुःशब्दार्थान्वयात्तस्य गतित्वानपायात् । अन्यथा तत्र प्रध्यं प्रध्य इति स्वग्रन्थविरोधात् । ग्रन्थान्तरविरोधाच्च ॥

## स्यत्यात्—।

वेति केचिदिति मूलमुपादाय स्यत्यादिति विकृतिनिर्देशो यणविषय एवोत्वं यथा स्यादिति गुणविषये मा भूदतिसखिरागच्छतीत्येवमर्थं स्यादिति दीर्घयोर्ग्रहणे न प्रमाणमिति तेषामाशयः । तेनोत्वाभावे सख्यः सूख्य इत्यादि भवति । उभयमप्येतद्भाष्ये स्थितमिति प्रकाशः । तत्र यद्यपि दीर्घग्रहणे प्रमाणाभावो न विकल्पवादिनामाशयः तथा सति दीर्घे उत्वस्याभावेन विकल्पासिद्धेः । तथापि विकृतनिर्देशेन दीर्घयोरपि ग्रहणमिति प्रागुक्तव्याख्याते सन्हितदीर्घग्रहणम् । एवं चैतद्भाष्यकैयटापर्यालोचनमूलकमिति केषाञ्चिदुक्तिराशयानवबोधनिबन्धनेति ध्येयम् ।

एवं शुक्ष्युः पक्ष्युरिति प्रकाशस्तत्रेत्थं सूपपत्तिः यद्यपि संयोगपूर्वकस्येति च भाष्यादसंयोगाद्यः । एतच्च केचिदित्यस्वरसाविष्करणं प्रमाणाभावव्याख्याभेदकृतो विकल्प इति तदाशय इति भावः। उभयमपीत्यस्य यणविषय एवोत्वं दीर्घयोर्ग्रहणं वेत्यपूर्वस्येति प्रतिषेध इति ज्ञायते तथा च पूर्वस्माद्विधौ स्थानिवद्भावेन क्वचि चेति शिष्टितेकारस्याभावे संयोगपूर्वस्येवर्णस्य प्रतिषेधाभावे यणो दुर्वारत्वेनोत्वस्यापि प्रवृत्तौ बाधकाभावादिति दिक् ॥

## इत्यजन्ताः पुंलिङ्गाः ।

यस्त्वावन्ते लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वादिति । तद्भसात् । नहि लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वं भवति । न च लिङ्गविशिष्टपरिभाषयेति स्वादिष्वन्वेतीति वाच्यम् । रमाशब्दस्य प्रातिपदिकत्वाभावेन प्रतिपदिकत्वादित्यस्यानुचितत्वात् । एकादेशस्य पूर्वान्तत्वेन ग्रहणात् प्रातिपदिकत्वोक्तौ लिङ्गविशिष्टपरिभाषोपन्यासस्य वैयर्थ्यात् । उभयोर्हेतुत्वेनोपन्यास इति यदि तदा समुच्चयार्थकचकाराद्यनुक्तेर्न्यूनता । न च प्रातिपदिकत्वाल्लिङ्गविशिष्टपरिभाषया स्वादय इत्यन्वयः । लाघवादप्रत्यय इति पर्युदासस्य

प्राक् स्वयं स्त्रीकारादेकादेशस्य पूर्वान्तत्वेन ग्रहणात् प्रातिपदिकत्वात् । निषेधेऽपि प्राक् प्रवृत्तप्रातिपदिकस्वस्यान्तवत्वेन सत्त्वादप्रातिदिकत्वस्य हेतोः स्वरूपासिद्धेः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य स्त्रीप्रत्ययविशिष्टस्य ग्रहणमिति लिङ्गविशिष्टपरिभाषार्थः । तथा च प्रातिपदिकग्रहणे आबन्तस्यापि ग्रहणादुक्तपरिभाषाप्रवृत्तिस्त्रीकारेणाबन्तत्वादित्युक्तरेव युक्तत्वादिति ॥

## सर्वनाम्नः स्याट् ।

अत्र याडित्यनुवर्त्य सप्तम्या विपरिणमय्य तस्मिन् परतो याट्संनियोगेन सर्वनाम्नोऽसुड्विधानेन सिद्धौ स्याट्ह्रस्वविधानं चिन्त्यप्रयोजनमिति प्रकाशः । तत्रासुड्विधानेऽमुष्यै इत्यादि न सिध्येदिति केचित् । तन्न आवेकादेशस्य परादित्वेन प्रत्ययत्वात्तदादेशस्यासुडः प्रत्ययत्वेन तदवयवस्य सस्य षत्वेऽमुष्यै इत्यादिसिद्धेः। अत एवातिखट्व इत्यादावेकादेशस्याप्त्वात्तदादेशस्य ह्रस्वस्याप्त्वेन ततः परस्य सोर्लोपो दीर्घग्रहणेन वारितः । न च सर्वनामत्वाय पूर्वान्तवत्वेऽस्यावश्यकत्वे उभयत आश्रयणादन्तादिवत्वाभाव इति वाच्यम् । लिङ्गविशिष्टपरिभाषयाप्त्ववत्वाभावेऽपि सर्वनामकार्यसम्भवात् । एकस्मिन् कार्ये उभयत आश्रयणा-

भावाच्च। न चैत्रमय्येरिति साम्प्रतिषेधादुत्वमत्वे न स्यातामिति वाच्यम्। असेरित्यस्य अः सेर्यस्येति कृतत्यदाद्यत्वस्येत्यर्थाश्रयणात्। न चाटोऽचाट्स्त्यद इत्यत्रोत्वाद्यभावस्य ओकारसकाररेफसहितस्य प्रतिषेधो वाच्यस्तत्रादस्यतीत्यचादसो ऽपदत्वादिह च पदाधिकारादुत्वाद्यप्राप्तौ सग्रहणमनर्थकमित्यमदस्याप्यदस उत्वादि ज्ञापयति तेनामुमित्यादि सिध्यतीत्याकरसिद्धं तच्चैवं सति विरुध्येतेति वाच्यम्। लाघवोपष्टम्भस्य अः सेर्यस्येति व्याख्यानस्यादोऽचेत्याद्यतिप्रसङ्गवारकस्याप्याकरसिद्धत्वात्। न मुन इत्यस्य चोक्तार्थज्ञापकत्वादिति न कश्चित् क्षुद्रोपद्रवः। यत्तु वस्तुतस्तु आमि सर्वनाम्नः सुट् याटो ह्रस्वश्चेति सूत्रयितुं युक्तं न चैवं याट एव ह्रस्वापत्तिः। दीर्घोच्चारणसामर्थ्यात्। ह्रस्वोच्चारणेऽप्यकारसामर्थ्यादेवातो गुणस्य वारयितुं शक्यत्वादिति तन्न एवं हि सति जेखय इत्यादावनुष्टत्स्यामीत्यस्य याट इत्यत्रापि सम्बन्धे सर्वस्यामित्यादौ ङेराद्येव याट् स्यात् न तु सर्वत्र व्याख्यानमत्र शरणं च मण्डूकप्लुतेश्चाश्रयणं च सूत्रविपर्यासो न चमत्कारमावहतीति किञ्च कथं दीर्घोच्चारणसामर्थ्यं न हि याटो ह्रस्वाभावेऽपि दीर्घोच्चारणम-

र्थं प्रवतीति इत्सोच्चारणेऽपीत्यादिना भवदुक्तस्यैवान-
र्थक्यस्यापरिहारादिति ॥

## विभाषा दिक्समासे—।

न बहुव्रीहाविति निषेधे प्राप्ते विकल्पोऽयमिति
प्रकाशस्तु द्यापाततः । तस्यालौकिकप्रक्रियावाक्यान्तर्ग-
तसर्वादिविषयत्वादस्य च समासविषयत्वादिति केचित् ।
तन्न तस्यालौकिवाक्यविषयत्वेऽपि समास एव फलव-
त्त्वात् । यत्तु अतिखट्वायेत्यत्र लाक्षणिकत्वान्न याट्
एवमतिसर्वायेत्यत्र न स्याडिति वदन्ति । तत्र न ह्यतिदे-
शविषये लक्षणप्रतिपदोक्तपरिभाषा प्रवर्त्तते अतिदेश-
वैयर्थ्यापत्तेः स्याटस्तत्वस्यात्र एव नास्ति संज्ञोपसर्जनयोः
पाठात् पर्युदासादिति केचित् तद्भावानवबोधात् । तेषां
ह्ययं भावः । याडाप इत्यादावङ्गाधिकारादाबन्ताङ्गात्
धस्येत्यादिरर्थस्तत्र च प्रत्ययग्रहणे यस्मात् स विहित
इति तदादिग्रहणस्य स्त्रीप्रत्यये निषेधेन प्राप्तोऽपि याट्
लाक्षणिकत्वाद्गौणत्वान्न । गुणभूतस्त्रीप्रत्यये तदादिनि-
यमाङ्गीकारात् । गौणलाक्षणिकयोर्हि लोकपर्यायत्वं
प्रसिद्धम् । तस्मादिह आपो विवक्षितमुत्तरत्र च सर्वश-
ब्दस्येति विशेष इति ।

## ङिति ह्रस्वश्च ।

यत्त्वत्र नित्यस्त्रीत्वमीदूतोर्विशेषणं ह्रस्वयोस्तु स्त्रियामित्येव न तु नित्यस्त्रीत्वपर्यन्तमिति केचित् तन्न । अतिश्रियै ब्राह्मण्यै इति भाष्योदाहरणाल्लिङ्गान्तरानभिधायकत्वरूपस्य नित्यस्त्रीत्वस्येदूद्विशेषणत्वायोगात् । अत एव ङिति ह्रस्वस्येत्यत्रैवंविधो नियमो नाश्रीयत इति सामान्यत एव कैयटेनाभिहितं पदान्तरसमभिव्याहाराभावेऽपि स्त्रीत्वबोधकत्वरूपस्य तु ह्रस्वयोरपि सम्भवात् अत एव नित्यस्त्रीत्वप्रापकस्याख्यत्वेन ह्रस्वो विशेषितः काशिकायाम् । हरदत्तेनाचाख्यापदकृत्यव्याख्यावसरे आख्यपदसामर्थ्यात् पदान्तरमनपेक्ष्य यौ स्त्रियामाचक्षाते इत्याश्रीयते इष्वशनिप्रभृतीनां तूभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति ङिति ह्रस्वस्येति संज्ञा भवत्येवेत्युक्तम् । न च व्यावर्त्याभावादंशे न नित्यत्वसम्बन्धः । अतिकौशाम्ब्यादीनां व्यावर्त्यानां सद्भावात् । इत्युक्तग्रामणीखलप्वोरेवानित्यस्त्र्याख्यावित्यत्र वर्णयोः ईदूदंशोऽपि नित्यात्वतं(?) व्यावर्त्याभाव इत्यर्द्धजरतीयस्याप्रामाणिकत्वादिति । इदं त्ववधेयम् । स्त्र्याख्याविति अत्र वर्णयोः संज्ञित्वे एकसंज्ञाधि-

काराद्गुरुसंज्ञया नदीसंज्ञासमावेशो न स्यात् । तथा च वाल्मीकिन्यो इत्यत्र गुरोरनृत इतीकारस्य प्लुतो न स्यादिति तदन्तस्यैव नदीसंज्ञोक्ताचार्यैः । तत्राङ्गाधिकारे तदन्तविधिसत्त्वे लक्ष्म्यादावङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति व्यपदेशिवद्भावेन वा आडादिसिद्धिरित्यभिप्रायः । न चैवमाच्छीनद्योरित्यनेन तुदन्तीत्यादौ कथं नुम् शतुर्नदीपरत्वाभावादिति वाच्यम् । तत्र नदीग्रहणस्य स्वरितत्वेन तदवयवस्य ङीपो नदीशब्देन ग्रहणाच्छतुस्तत्परत्वसम्भवात् । एतेन जानतीत्यादौ शतुरनुम इत्यनुमः शतुः पराया नद्या उदात्तत्वं व्याख्यातम् । इह तु संज्ञासमावेशप्रयोजनाभावादर्णयोरेव नदीत्वमुक्तम् । तदन्तस्यापि नदीत्वे त्वत्यभावः । ङेरामित्यादौ नद्यन्तत्वोक्तिस्तु पक्षद्वयसाधारणी । अङ्गाधिकारेण तदन्तविधिलाभात् ॥

## इदुद्भ्याम् ।

यत्त्वेतत्सूत्रानुपन्यसनं प्राचः प्रामादिकमेवेति तन्न । परत्वादौत्वेऽपि पुनः प्रसङ्गविज्ञानेन ङेरामित्येव सिद्धे रेतुस्तत्र मनाङ्य(?)चेष्टाचित्वात्तमपि बाधते इति किमिति प्राचा ध्वनितत्वात् ॥

## अचि र-।

ननु मध्येऽपवादन्यायेनोत्वदीर्घौ बाधतां गुणान्तूत्तरं कथं बाधेतेत्याशङ्क्यापवादशब्दस्य बाधकत्वोपलक्षणत्वात् परशब्दस्य चेष्टवाचित्वात्तमपि बाधते इति प्रकाशकृतः। तन्निर्मूलं क्लिष्टं चेत्यन्ये। तन्न। अचि-रादेशे जस्युपसंख्यानगुणपरत्वादिति मूलसत्वात्। एवं सति बाध्यविशेषचिन्ताङ्गीकारे उक्तक्लेशावश्यकत्वाच्च। जस्ग्रहणं ङिसर्वनामस्थानोपलक्षणं प्रियतिस्राश्रिति भाष्ये उदाहरणादिति कैयट इत्यास्तां तावत्॥

## इत्यजन्ताः स्त्रीलिङ्गाः।

---

## अतोऽम्।

यत्तु मित्येव च्छेदो लाघवात्। तत्र सोर्मे कृते ज्ञानमिति सिद्धं द्वितीयैकवचने त्वादेः परस्येत्यकारस्य मकारे अत इति तकार उच्चारणार्थ इति भवतैवोक्तत्वान्निमित्तस्याकारसन्निपातस्य दीर्घे सत्यथ विरोधात्। प्रकाशकृतस्तु सुपिचेति दीर्घस्तु प्राप्नोति सन्निपातपरिभाषया अनित्यत्वादित्याहुः। केचित्तु दीर्घविधौ सा न प्रवर्तत इत्यनूद्य रुधादिभ्यः अम्

श्रान्नलोप इति सूत्रयोः सुपि चेति दीर्घत्वे सन्निपातपरिभाषाप्रवृत्तेर्भाष्यकृता ध्वनितत्वाच्चायुक्तमिति । तेषामयं भावः । कष्टायेत्यादिज्ञापकेन कल्पितं वाक्यं न यमात्रविषयमपि तु सुपि चेत्येतद्विषयमात्रपरमन्यथाऽसन्देहाल्लाघवाच्च मत इत्येवावच्यत् । अत एवेङ्क्षादिति सूत्रे भाष्ये हल्ग्रहणाननुवृत्तौ हे कुण्डेत्यादावादेः परस्येत्यकारलोपे सुपि चेति दीर्घत्वे हे कुण्डामिति प्रसज्येतेति कथादिसूत्रस्थभाष्याविरोधादि च रामायेत्यत्रत्यप्रक्रियाप्रदीपादवधेयम् । यत्तु मांसि मांसेत्याद्युपन्यस्य वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तमित्यादि तत्र सन्दर्भशुद्धिः कथमिति चिन्त्यम् ॥

## अस्थिदधि—।

प्रियदध्नेत्यत्र दधिशब्दस्योरः प्रभृतित्वेन प्राप्तः कप् प्रियदध्नेति भाष्योदाहरणेनानित्यत्वान्न । न च तयोदाहरणं भाष्ये न दृष्टमिति नास्तीति क्वाचित्कादर्शनस्याभावासाधकत्वात् । सार्वत्रिकस्य च तस्यासिद्धेः । जराया इति सूत्रे नुमनङोर्विप्रतिषेधस्य दध्ना सक्थ्नेत्युदाहरणे सकलपुस्तकसिद्धे सक्थिशब्दाननङवकाशस्य प्रियसक्थनेत्यस्येव दधिशब्दानङवकाशस्य प्रियदध्नेत्यस्यावश्यकत्वाद्बहुधा तस्योपलम्भाच्चेति । मधुशब्दसु-

पन्यस्येऽमस्तु सान्वादय इति जरन्तः। अत्र मधुशब्द-
स्य नपुंसकमात्रवृत्तित्वेन नुः प्रस्थः सानुरस्त्रियामिति
पुंनपुंसकसाधारणसानुशब्दस्य कथं तत्साम्यं अत एवै-
वं मध्वादय इत्युक्त्वा सानुशब्दः पृथगव्युत्पादितोऽन्यै-
रिति नाशङ्कनीयम्। "मकरन्दस्य मद्यस्य माक्षिकस्यापि
वाचकः। अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुरिति"
शाश्वतकोशे पुंनपुंसकत्वेन मधुशब्दस्योक्तत्वात्। ग-
णरत्नेऽप्यर्द्धर्चादिषु मधुशब्दस्योदाहृतत्वाच्च। स चोक्त-
कोशबलाद्विषयविशेषे एव "मधुमङ्गनाः स्मरसखं रसख-
ण्डनवर्जितमिति" रघुश्लोके उक्तावष्टम्भेन मधुशब्दं मल्लि-
नाथो व्याचख्यौ। मधोस्तृप्ता इवासत इत्यादिलिङ्गव्यत्य-
योदाहरणन्तु भाष्ये क्षौरवार्चिनित्यनपुंसकमधुशब्दा-
भिप्रायेण। एवं च नित्यनपुंसकमधुवदम्बुशब्दः पुंनपुंस-
कमधुशब्दवच्च सान्वादिशब्दा इत्यर्थ इति। प्रियक्रो-
ष्टूणीत्यत्र परत्वात्तृज्वद्भावे पुनः प्रसङ्गविज्ञानादजन्त-
लक्षणो नुमिति व्याचख्युः। यत्तु इकोऽत्वतृज्वद्भावगु-
णेभ्यो नुम् पूर्वविप्रतिषेधेनेति भाष्यवार्तिकविरुद्धमि-
दमिति। तन्न। पूर्वविप्रतिषेधे क्रोष्टुने अरण्यायेति
भाष्योदाहरणेन काशिकायां विभाषा तृतीयेतिसूत्रे
एवैतद्वचनोदाहरणेन चास्य पूर्वविप्रतिषेधस्य विभा-
षेति तृज्वद्भावविषयत्वावधारणात्। न च वैकल्पि-

कष्टुवद्भावग्रहणवैयर्थ्यमिति वाच्यम् । प्रियक्रोष्टुने-त्यादिव्याप्त्या तस्यार्थवत्त्वात् । न च तृज्वद्भावेन परत्वा-न्नुमो बाधे सकृद्गतिन्यायाश्रयणेन पुनरप्रवृत्तौ प्रिय-क्रोष्ट्रे इति स्यात् । तच्च प्राप्तिकं पुंवद्भावेनेष्टमेवेति वाच्यम् । प्रियतिसृणी इत्यादौ तिस्रभावेन बाधि-तस्य नुमः पुनः प्रसङ्गविज्ञानेन प्रवृत्तेरिहापि तृज्व-द्भावेन बाधितस्य प्रवृत्तेः प्रसङ्गात् । अत एव सन्निपा-तपरिभाषया न नुमित्यप्यनाशङ्कनीयम् । नुमः पूर्वा-वयवत्वेन सन्निपातविघातकत्वाभावाच्चेति दिक् । प्रद्यवे इत्यत्रैकदेशविकृतस्यापि प्रद्युशब्दस्य प्रद्योशब्दादन-न्यत्वाद्भाषितपुंस्कत्वविकल्प इति प्राञ्चः । नन्वेकदेशवि-कृतमनन्यवदित्यस्य भाष्येऽनाश्रयणात्तत्प्रयोजनस्य स्था-निवदादेशोऽनल्विधावित्यनेन साधितत्वात् प्रकृते त-दनुपपत्तेः कथमेतत् । अयं हि स्थानिवद्भावः शास्त्रीय-कार्यातिदेश इति सिद्धान्तात् प्रकृते च पुंवद्भावस्य शास्त्रीयस्थानिकार्यत्वाभावात् भाषितपुंस्कत्वस्य शास्त्री-यत्वाभावादिति चेत् । इत्थम् । स्थानिवदादेश इत्यनेन शास्त्रीये कार्ये कर्त्तव्ये स्थानिधर्मः शास्त्रीयोऽशास्त्रीयो वा ऽतिदिश्यते । अत एव वृक्षायेत्यत्र स्थानिन्य-प्रवर्तमानेऽपि सुपि चेति दीर्घत्वे कर्त्तव्ये स्थानिवद्भा-वेन सुप्त्वमाश्रितं भाष्ये एतदर्थमेवोक्तं स्थान्यलाश्रय

एवानल्विधाविति निषेध इति अत एवात्रधिष्टेत्यत्राङो यमहन इत्यात्मनेपदे कर्त्तव्ये ऽशास्त्रीयस्यापि हन्तित्वस्यातिदेशः । न च स्वं रूपमिति शास्त्रीयाया हन्संज्ञाया इहातिदेशः स्वं रूपमित्यस्य भाष्ये प्रत्याख्यानात् । अत एव च समाद्येत्यत्र रायल्लोपाविति पूर्वविप्रतिषेधेन णिलोपे प्रत्ययलक्षणेन वृद्धौ स्थानिवद्भावेनादित्वादटो जग्ध्यादेशप्रसङ्गः स्थानिवदादेश इत्यशास्त्रीयमपि स्थानिगतमनादिष्टाद्चः पूर्वत्वमचः परस्मिन्निति शास्त्रीये कार्ये कर्त्तव्येऽतिदिश्य णिलोपस्य स्थानिवद्भावेन निराकृत आकरे । एवं च स्थानिगतभाषितपुंस्कत्वमतिदिश्य द्युभ्यां पुंस्त्वविकल्पप्रवर्त्तनं निर्बाधमित्यलं पल्लवितेन ॥

## इत्यजन्ता नपुंसकलिङ्गाः ।

## हो ढः ।

यत्तु लिट्स्वित्यत्र चयो द्वितीया इति प्रवर्तनमयुक्तम् । चर्त्वस्यासिद्धत्वादिति । तद्दुदः स्थेत्यत्रोक्तादिशोपेक्ष्यम् । यदपि स्वोक्तेऽर्थे प्रातिशाख्यमुपष्टम्भकमुक्तम् । ऊष्मोदयं स्पर्शमेके द्वितीयमाज्भरपदान्तभाजमित्यत्रापदान्तेत्यादि विशेषणं सङ्गच्छत इति तदपि

न लोके तदविषयत्वात् । कथमन्यथा प्राङ्क्ष्वष्ठ इत्यत्र तदुपन्यसनं भवतो भवत्स्वित्यत्र वृत्तिकृतश्च सङ्गच्छेतेति दिक् ॥

## दादेः—।

यत्तु धातोरित्यावर्त्यते तच्चैकमुपदेशकालं लक्षयति तेनाधोक् दामलिड्धतेर्दामलिडित्यत्राव्याप्त्यतिव्याप्ती नेति । तद्भाष्यविरुद्धम् । तथाहि भाष्ये अधोगित्यव्याप्तिवारणाय धातोरिति दादेरपेक्षयाऽवयवषष्ठी तेन धातोरवयवस्य दादेरित्यर्थः । उपदेशे दादेरित्यर्थे तु वैयधिकरण्येनान्वयो मुधैव स्यादिति स्पष्टमेव । एवं दामलिड्धतेर्दामलिडित्येव भाव्यमिति युक्तमुत्पश्यामः । तथा चैकाचःसूत्र इव वृत्तावपि धातोरिति वैयधिकरण्यमाश्रित्य दकारादेर्धातोरित्यूचुः ॥

## वाह ऊठ् ।

यत्तु विश्वौह इत्यादौ छन्दस्येव ण्विरिति पक्षे णिजन्तादिजिति केचित् । तन्न । एवं सति णिलोपस्याचः परस्मिन्निति स्थानिवत्त्वेन वाहो भत्वाभावादूठो ऽप्रवृत्तेः । नच क्विपि णिलोपे क्वौ लुप्तं न स्थानिवदित्युक्तरूपनिर्वाहः । क्वौ विधिं प्रति न स्थानिव-

दित्यौत्सर्गिकत्वेन क्वौ लुप्तमित्यस्य सर्वत्र प्रवृत्त्यभावा-
त्। अत एव पिपठिषि ब्राह्मणकुलानीत्यत्र क्वावकार-
लोपस्य स्थानिवत्त्वान्न नुम् इत्याकरः। पादयतेः
क्विपि तु पद्ः पदेतिभाष्योदाहरणात् क्वौ लुप्तमि-
त्याश्रीयते। किञ्चात्र क्वौ लुप्तमित्याश्रयणे क्विनिमित्तं
यजादिसंप्रसारणं स्यादित्युक्तरूपमसंभव्येव। न च वाम्य-
त्ः किच्वं कुतो नेति प्रश्ने प्रयोजनाभावादित्युक्तरिति
वाक्काम्यतीत्यत्र सम्प्रसारणं प्रयोजनं स्यादित्याशङ्कायां
वच्यादिभ्यो यो विहितः कित् तत्र सम्प्रसारणमित्या-
श्रितं तथा च प्रकृतेऽपि तत एव न सम्प्रसारणमिति
वाच्यम्। तथापि वाक्काम्यतीत्यत्र सम्प्रसारणाशङ्कावा-
रणायाथवा धातोः स्वरूपग्रहणे इति समाधाना-
न्तरस्य कैयटेनोक्तत्वात्तस्य तत्पक्षसंप्रसारणप्रसङ्गानुद्धा-
रात्। अपि च वच्यादिभ्यो विहित इति धातोः स्वरूप-
ग्रहणे इति परिहारद्वयैकरूप्याय प्रकृते क्वौ लुप्तमि-
त्यनाश्रयणस्यैवौचित्यम्। श्ववयाः श्वेतवाः। चका-
रादुक्थशा इति प्राचोऽन्येषां च ग्रन्थे दृश्यते। एतच्च
काशिकाद्यनुसारेण। भाष्ये तूक्थशस्शब्दस्य सामान्येन
कः सिद्धः न तस्य निपातनं क्रियत इत्युक्तम्। अत
एवोक्थाशा इत्येतदपि सम्बुद्ध्यर्थं निपातनं कर्तव्यं यदि
मन्त्रे दर्शनमस्तीति कैयटेन यदिशब्दः प्रयुक्तः॥

## दिव औत् ।

त उच्चारणार्थं इति केचित् । तन्न तस्य लोप इति सूत्रस्थेनानुबन्धानामेकान्तत्वे दिव औत् सर्वादेशः स्यादिति भाष्येण विरोधात् । न चैवं सति स्वरितत्वं स्यात्तच्च पृथिवी उतद्यौरिति लक्ष्यविरुद्धमिति वाच्यम् । व्यत्ययेनोक्तलक्ष्यसिद्धौ भाष्यबलादन्यत्र स्वरितत्वस्येष्टत्वात् । द्योशब्देनापि दिवसमानार्थेनोक्तलक्ष्यसिद्धेश्च । द्यौष्पितरित्यत्र स्वरितपाठस्यौतास्तत्वं विनाऽनुपपत्तेश्च । न च प्रत्ययस्वरेण फिट्स्वरेण वा दिव इकारस्योदात्तत्वे स्रंसनधर्मिणो वस्यानुदात्ते औकारे इकारे यणि उदात्तस्वरितयोरित्युक्तस्वरसिद्धौ किं तित्वेनेति वाच्यम् । औकारेणेकारस्य फिडन्तत्वनत्वविघाते भाविन्यक्तत्व्यूहपरिभाषया पूर्वं फिट्स्वरप्रवृत्तेरौकारस्यैव फिट्स्वरेणोदात्तत्वावश्यकत्वात् । सर्वनामस्थाने परे पुंसोऽसुङ्च्चेत्यनेनैव न्यायेनासुङन्त एव समासान्तोदात्तत्वं प्रवर्तत इत्यसुङ उदात्तत्वासिद्धिरिति तत्र सूत्रे तैरभ्युपगमाच्च । द्युभिरक्तुभिरित्यादावेवमेव दिव उदात्तत्वाच्च । न हि दिव उत्तित् किं तु तपर इति दिक् ॥

## मो नो धातोः।

न च पदान्तत्वेन सिद्धौ प्राचः क्वचित्का झल्यनुवृत्तिरनर्थिकेति वाच्यम्। प्रसामः सौ कृतनत्वस्य शान्त्यर्थकस्य स्वरादिषु पाठादव्ययत्वेन लुग्विषयेऽन्तरङ्गत्वापीति लुक्सामान्यमन्तरङ्गस्यापि बाधकं न तु सुपो धात्विति लुगेवेति मते सुपो लोपाप्रवृत्तौ पदान्तत्वाभावान्नत्वं न स्यादिति झल्निमित्तनत्वे सत्यव्ययत्वेन सुलुक्प्रवृत्तिरिति झल्ग्रहणमित्यभिप्रायात्। न च स्वरादिषु प्रशान्पाठसामर्थ्यात् पूर्वं सुलोपाप्रवृत्तिः। झल्ग्रहणस्यैव सिद्धे सामर्थ्यकल्पने गौरवापत्तेः। न च लोपं विना लुग्विषयाभावादानुपूर्व्यादेव लोप इति वाच्यम्। एवमपि प्रतिपत्तिगौरवमित्यभिप्रायात्॥

## किमः कः।

त्यदादीनामित्यनुवर्त्तते तेनोपसर्जनस्य न। यत्त्वास्य सामर्थ्यादिह सूत्रे द्विपर्यन्ता इति नियमत्याग इति तदनवधानात्। नहि त्यदादयो द्विपर्यन्ता इति नियमः। त्यदादीनि चेत्यादौ व्यभिचारात्। किन्त्वत्र द्विपर्यन्तानामिति। तथा च वार्त्तिकं त्यदादीनां द्विपर्यन्तानामकारवचनमिति॥

## न ङिसंबुद्ध्योः ।

यत्तु ङ्यन्तस्य संबुद्ध्यन्तस्य च पदस्येति व्याख्यानं तूचितम् । एवं हि प्रत्ययलक्षणं सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्त्तव्य इति । तन्न । छन्दसि संबुद्धेः सुपां सुलुगिति लुकः सत्त्वे तत्रापि निषेधापत्तिः परमे व्योमन्नित्यादौ सुपां सुलुगिति सप्तम्येकवचनस्य पूर्वसवर्णस्वादिष्विति पदत्वेन नलोपः प्राप्तो निषिध्यते । ततः संयोगान्तलोपः । एतच्च सुपां सुलुगिति सूत्रे प्रकाशे भाष्यादौ च स्पष्टम् । एवं च प्रत्ययलक्षणार्थनिषेधसामर्थ्यानुसरणक्लेशानापत्तिस्तु एवं च ङावुत्तरपदे प्रतिषेध इति वार्त्तिकमपि नारम्भणीयं भवतीत्यपरं लाघवम् । प्राचां लुगन्तोदाहरणं तु वार्तिककारानुसारेणेति ध्येयम् ॥

## हन्तेरत्पूर्वस्य ।

अत्र कुव्यवायहादेशेषु प्रतिषेधो वक्तव्यः । किं प्रयोजनं वृत्रघ्नः सुघ्नः प्राघानि । हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवतीत्याकरः । अन्ये तु हन्तेः अत्पूर्वस्येति योगद्वयं तत्राद्येनोपसर्गस्थान्निमित्तात् परस्य हन्तेर्नस्य णो विधीयते । प्रहण्यादित्यादि । द्वितीयेन हन्तेर्नस्य

णो नियम्यते । स च योगविभागसामर्थ्यादनन्तरस्येति न्यायं बाधित्वा सर्वोऽपि व्यवहितः क्षुमति चेत्यादिरव्यवहितो हन्तेरिति च । एवं च वृत्रघ्न इत्यत्र प्रातिपदिकान्तेति णत्वविकल्पोऽपि न । भाष्यं तु वार्त्तिकाशयवर्णनमात्रपरं न वस्तुस्थितिः । वार्त्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्त्तिकस्यार्थोपसंग्रहस्यैव न्याय्यत्वादित्याहुः । तच्चिन्त्यम् । तथा सति योगविभागसामर्थ्याद्व्यवहितं क्षुमति चेत्येव णो नियम्येत न तु प्रातिपदिकान्तेत्यादिर्मानाभावात् । किं वारीति तपरत्वं तत्कालावधारणार्थं न वा ॥ आद्ये बहुवृत्रहाणीत्यत्र णत्वं न स्यात् । द्वितीये प्रावघानीत्यत्रापि स्यात् । यदि तु तपरत्वात् प्रावघानीत्यत्र न णत्वं एकाजुत्तरपद इत्यत्रारम्भसामर्थ्याच्च नित्यत्वे सिद्धेऽतिरिच्यमानं णग्रहणं नियमेन व्यावर्तितस्यापि विधानार्थमिति बहुवृत्रहाणीत्यत्र णत्वम् । बाध्यसामान्यचिन्ताश्रयणाच्च नाद्यदोषोऽपीति विभाव्यते । तथापि णग्रहणं स्पष्टार्थमिति तत्तत्स्वग्रन्थविरोधात् । इह च तत्प्रयोजनानुक्तेर्न्यूनत्वात् । अनन्तरस्येति न्यायं बाधित्वेति वदङ्गिर्बाध्यविशेषचिन्ताया एवाश्रयणाच्च । अपि च उपसर्गादित्यस्योत्तरत्रानुवृत्तेरत्पूर्वस्येत्यत्रापि सम्बन्धे तद-

येनो नियमः स्यादिति प्रघ्न इत्यादाविव स्यान्न तु वृत्रघ्न इत्यादावपि। न च योगविभागवैयर्थ्यं एकयोगत्वे प्रघ्न इत्यादौ हन्तेरित्यस्यैवात्पूर्वग्रहणसामर्थ्यादिष्टव्यहितबाधसिद्धेरिति वाच्यम्। प्रघ्नन्तीत्यादिव्यावृत्त्या तत्सार्थक्यादिति दिक्॥

## उगिदचाम्—।

नलोपिनोऽञ्चतेरितीह व्याचख्युः। अत्रेदं चिन्त्यम्। उखास्रदित्यादावुगितश्चेति ङीपोऽतिप्रसङ्गवारणायोगिदचामित्यज्ग्रहणं भेदेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमार्थमित्याश्रीयते। अधातुग्रहणं च अधातुभूतपूर्वस्य सुध्यातोरञ्चतिनियमेन नुम्निवृत्तौ प्राप्तायां तद्विध्यर्थं तेन गोमत्यतेर्गोमानिति भवतीत्याकरः। तत्र नलोप्यञ्चतिग्रहणे उक्तनियमोऽपि नलोप्यञ्चतिघटित एव स्यादिति प्राञ्चीत्यादौ ङीबभावापत्तिः। न च सनकारेऽञ्चतौ नुम्तदभावयोर्विशेषाभावादञ्चेर्नुम् न। नलोप्यञ्चतिमात्र इत्यभिप्रायेणेह नलोपिन इत्यभिधानमिति वाच्यम्। सनकारस्य नुमि अत्यञ्चावित्यादौ नियतनकारनकारश्रुतेर्विशेषस्यासत्त्वात्। यदि तु नश्चापदान्तस्येत्यत्र न इति जातिनिर्देशान्नद्वयस्यैकोऽनुस्वारस्तस्य च परसवर्णे रूपेऽविशेष इति

तदा सूत्राभिप्रायं नलोपिग्रहणमिति । वस्तुतो नपुंसकस्य झलच इति सूत्रे गोमतीत्यादौ झल्ग्रहणेनोगिल्लक्षणेन च नुमाऽनुस्वारपरसवर्णयोर्नद्वयश्रवणमाशङ्क्य न व्यञ्जनपरस्यैकस्यानेकस्य वा भेद इति समाहितं भाष्ये तेनेह व्यक्तिनिर्देश इति गम्यत इति नोक्ताभिप्रायकमिदम् । अयोगवाहानामविशेषेणोपदेशे त्वनुस्वारगरदिनिरमित्ते(?) पूर्वस्यानुस्वार उभयोः परसवर्णे द्वयश्रवणं विशेष इति बोध्यम् । विधौ नियमार्थमिति व्यक्तिनिर्देशोऽपि । न चोगिदचामित्यत्राजग्रहणमावश्यकमञ्चतिसामान्यघटितनियमार्थमाश्रीयते । द्वितीयं तु सनकारस्याप्यञ्चतेर्नुमप्राप्तौ तन्निवृत्तये नलोप्यञ्चतिपरं नुम्विधौ नियमार्थमिति व्यक्तिनिर्देशेऽपि नलोपीत्यावश्यकमिति वाच्यम् । तादृगाङ्कृतिबोधकस्याकरस्यानुपलब्धेरिति ॥

## अवर्णस्त्वसावनञः ।

## मघवा बहुलम् ।

अत्र वार्त्तिकम् । अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् । मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादिति । अयमर्थः । अर्वणो मघोनश्चादेशो न

कर्त्तव्यः । ऋधातोर्विचि गुणोऽरित्यस्मात् मघशब्दाच्च छन्दसीवनिपाविति वनिपि मतुपि चार्वा अर्वन्ताविति मघवा मघवानिति च रूपद्वयस्य सिद्धत्वात् । नन्वेवं सर्वत्र रूपद्वयप्रसङ्गोऽत आह । इष्टाज्जुविधिश्छन्दसि भवतीति भाष्यमवतार्य कैयटेन व्याख्यातं भाषाशब्दा अपि नियतविषयाः किं पुनश्छान्दसा इति । एतच्चार्वन्शब्दविषयम् । मघवन्शब्दस्य तु त्रादेशपक्षेऽपि रूपद्वयस्य सर्वत्र स्वीकारात् । एवञ्चार्वन्शब्दः छान्दस इत्युक्तं भवति । अत एवार्वन्शब्दस्य भाषायामसाधुत्वं कैयटहरदत्ताभ्यामुक्तम् । एवं च ऋधातोर्वनिपि अर्वेति लोकेऽपीति केषांचिदुक्तिः प्रत्युक्ता । प्रत्युक्तं चार्वन्मघवन्शब्दयोर्भाषायामसाधुत्वं अर्वणस्तृ मघोनश्चेति भाष्यादिति हरदत्तोक्तिमनूद्य भाष्यस्य विशेषविषयत्वस्य प्रागेवोक्तत्वादिति तद्दूषणं मघवन्शब्दविषयभाष्यस्य मध्योदात्तमघवन्शब्दविषयत्वेनोक्तत्वेऽप्यर्वन्शब्दविषयस्य विशेषविषयत्वस्यानुक्तेरस्थानत्वाच्च । तथा च छान्दसेन वनिपा व्युत्पादितस्यार्वन्शब्दस्यैव सौ अनर्वन्शब्दस्यान्यथापि प्रयोग इति व्यवस्था छान्दसत्वप्रयुक्ता । अत एव छन्दस्युभयदर्शनादित्युदाहरणे भाष्योक्तेरमान्यर्वणः पदानीत्यत्र षष्ठ्यन्तार्वन्शब्दप्रयोगो व्यवस्थापनीयः । सत्यपि सूत्रे तस्य

छान्दसत्वेनैव व्यवस्थापनीयत्वेनेतरव्यवस्थायाऽपि तेनैव सिद्धे सूत्रे वैयर्थ्यमिति छान्दसत्वादेर्भावः। मतुपा तु भाषासाधारणेन व्युत्पादितोऽयंवन्शब्दो यथेच्छं स्वादौ प्रयोक्तव्य इति न तु मघोनस्त्रादेशस्य मतुपा प्रत्याख्यानमनुपपन्नं रूपे स्वरे च वैलक्षण्यात्। तथाहि। त्रादेशपक्षे दीर्घविधौ संयोगान्तलोपस्यासिद्धत्वान्मघवन्निति रूपं मतुपि तु मघवानिति। श्वन्नुक्षन्नित्यादिना निपातितस्य कनिप्रत्ययान्तस्य मघवन्शब्दस्य त्रादेशे वकार उदात्तः। मतुपि ह्रस्वनुड्भ्यामिति प्राप्तस्यापि मतुप उदात्तत्वस्य न गोश्वन्निति प्रतिषेधादकाराकार इति। अनुपपन्नं च कैयटाद्युक्तं मघोनश्छान्दसत्वं श्वन्नुक्षन्निति निपातितस्य भाषाविषयत्वे बाधकाभावादिति चेत्। उच्यते वार्त्तिककारीयप्रत्याख्यानानुरोधेन त्रादेशपक्षेऽपि बाहुलकाद्दीर्घे संयोगान्तलोपो नासिद्ध इति न रूपभेदः। बाहुलकादेव च वकाराकार उदात्त इति न स्वरभेदः। नच प्रत्याख्यानानुरोधेन त्रादेशश्छन्दोमात्रविषय इति कल्प्यतां तथा च मतुप्यपि छन्दसि बहुलं छन्दसीति दीर्घाभावस्वरव्यत्ययाभ्यां त्रादेशसमानरूपस्वरं मघवन्नित्येव कुतो न कल्प्यत इति वाच्यम्। भाषासाधारण्येन प्रतीयमानस्य त्रादेशस्य मतुपा भाषासाधारणेन प्रत्याख्याने छान्दसत्वकल्पनाया गौर-

वत्त्वात् । बाहुलकाश्रयणाश्रावयोः समानत्वात् । न च बाहुलकाश्रयणेऽपि आदेशानुरोधेन मतुबन्त एव रूपस्वरकल्पनाऽस्त्विति वाच्यम् । यथोत्तरं मुनीनां प्रामाण्यमिति वार्त्तिकस्वरसानुरोधेन सौत्रादेशपक्ष एव बाहुलकाश्रयणमित्यादरस्य युक्तत्वात् । अत एव छन्दसीवनिपौ चेति वार्त्तिके मघमस्यास्तीति मघवा । बहुलमित्येतन्न कर्त्तव्यं श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वादिति कैयटोऽपि संगच्छते । अन्यथा भाषायां शब्दद्वयसिद्धिकथनस्य प्रकृतानुपयोगापत्तेः । मघोनश्छान्दसत्वाभिधानं तु वनिबन्तमघवन्शब्दाभिप्रायमिति सर्वं निरवद्यम् । अत्रेदं निर्गलितम् । मघवन् शब्दोऽन्तोदात्तो भाषासाधारणः । वनिबन्तमध्योदात्तश्छान्दसः । मघवन्शब्दो मध्योदात्तो भाषासाधारण इति ॥

## पथिमथि—।

यत्तु ननु गुणा अभेदका इति पक्षे सूत्रेऽनुनासिकोच्चारणे ऽप्यान्तरतम्यादनुनासिकः स्यादित्याशङ्क्याह । आ. आदित्युक्त्वा गुणानामभेदकत्वेऽपि शुद्धैकव्यक्तेः सूत्रे निर्देशान्नातिप्रसङ्ग इति त्वसङ्गतम् । अभेदकत्वे दोषस्य दुरुद्धरत्वात् एका व्यक्तिर्ग्रहणत इत्युक्त्या हि

व्यक्त्यन्तरं न निर्दिष्टमित्यर्थः फलितः स च गुणानां भेदकत्वे सत्येव संगच्छते नान्यथेति। तत्तुरगारूढस्य तुरगविस्मरणमनुसरति इति॥

# इतोऽत्—।

अन्नेत इति तपरत्वं पन्थानमिच्छति पथीयति अस्मात् क्विप्यल्लोपयलोपयोः स्वादौ पन्थाः पन्थियावित्यादिरूपेऽत्वाभावार्थमिति केचित्। तन्न। पथिमथ्यृभुक्षामादित्यात्वे सुविधौ नलोपस्यासिद्धत्वेन नस्यात्वे सौ पन्थया इति रूपं स्यादिति कथं पन्था इत्युक्तिरिति तावच्चिन्तनीयम्। न च बहिरङ्गपरिभाषया ऽत्वस्यासिद्धत्वान्नलोपप्रवृत्तिरिति वाच्यम्। एवं बहिरङ्गपरिभाषया पूर्वत्रासिद्धमित्यस्य बाधे॥

"शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा।
मतो वत्वे झलो जश्त्वे गुडलिरामान्निदर्शनम्॥"

इति पूर्वत्रासिद्धे वचनप्रयोजनस्यासिद्धिप्रसङ्गात्। किञ्च अल्लोपस्य स्थानिवत्वात् न्यादेशाप्रवृत्तौ पन्थियावित्याद्यपि चिन्त्यम्। न च क्वौ लुप्तं न स्थानिवदित्यल्लोपस्य स्थानिवत्वाभावः। क्वौ विधिं प्रतीत्यस्यैवोत्सर्गत आश्रयणात्। न तु क्वौ लुप्तमित्यस्य। तस्य क्वचिदेव सखोः सुतीरित्यादौ यणा-

ध्यप्रवृत्तये आश्रयणात् । अभ्युपगतं चेदं दीधीवेवीटामित्यत्र पिपठिषीत्यादिसिद्धये कैयटेन । न चेत इति तपरकरणादिहापि क्वौ लुप्तमित्यस्याश्रयणं हरदत्तेन तकारस्योच्चारणार्थत्वाश्रयणात् । आचारक्विप्यनुनासिकस्य क्विझलोरितिदीर्घे नामधातौ भवदुदाहृते ततः कर्तरि क्विपि पथोनित्यत्र तत्सार्थक्याच्च । वस्तुतः शाविति नियमादिह न दीर्घ इति तत्र वक्ष्यते । अत एव प्रकाशेऽनैव इति सूत्रे इकारान्ता एवैताः प्रकृतय इति कौमारमते आचारक्विबन्तात्तिप्शपोर्लघूपधगुणे पथेनतीत्यादि न स्यादिति पण्डितचरणाः । तस्मात् पथौः पथ्यावित्यादि प्रकाशोक्तमेव साधु । दत्वं स्नुत्वं भृज्जाविति प्राञ्चः । न च स्नुत्वे दत्वमसिद्धमिति पूर्वं स्नुत्वं पुनर्दत्वमिति वक्तुं युक्तम् । झलां जश् झशीति निर्देशेन ग्रस्य न जश्त्वमिति ज्ञापनेन भृज्जतीति निर्देशोपपादनाय दत्वस्नुत्वक्रमावश्यकत्वेन स्नुत्वे दत्वं नासिद्धमिति कल्पनात् । एतच्चैकयोगनिर्दिष्टानामित्यत्र सीरदेववृत्तौ स्पष्टम् । त्वमहमित्यत्र शेषे लोपोदाहरणे त्वमतो गुण इति पररूपोदाहरणं केषाञ्चिदसङ्गतम् । पररूपस्यान्तरङ्गत्वेन पूर्वं प्रवृत्तत्वात् । स्वपरग्रन्थविरोधाच्च ॥

## साम—।

गौणतायां सुडभावान्नार्यमिति केचिदिति मूल-मुपादाय साम इति यद्यपि सुड्ग्रहणं न स्थानि-विशेषणं बाधात्तथाप्युपलक्षणं तु भवतीत्यादिनो-क्तिसम्भवस्तन्मतस्य प्रकाशे स्पष्टः। तत्र केचि-दित्यस्वरसो भाष्यादिविरोधः अत एव प्रकाशः। तथा च भाष्ये साक्षादुदाहृतमतित्वाकमतिमाकमि-तीति। एवञ्चैतद्दूषणायासः केषाञ्चिन्मुधैवेति बो-ध्यम्॥

## युस्मदस्मदोः षष्ठी—।

इहापादादौ किम्। युष्मान् रक्षतु गोविन्दो-ऽस्मान् कृष्णः सर्वदावत्विति प्राञ्चः। वेदैरशेषैः संवेद्योऽस्मानित्याद्यन्ये। तदुभयं चिन्त्यम्। गोविन्दोऽ-स्मानित्यादौ संध्यभावेऽस्मानित्यादेर्नवाक्षरत्वेनानुष्टुप्पा-दत्वाभावेन सन्धौ चौभयत आश्रयणे नान्तादिवदित्य-स्मदोऽभावेन कथमिदं प्रत्युदाहरणमिति। तस्माद्युष्मद-स्मदोर्व्यत्ययेन पाठे सर्वदेत्यत्र च सदेति पाठे युष्म-दस्मदुदाहरणमिति बोध्यम्। अतएव॥

"रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता

स एव नाथो भगवानस्माकं मधुसूदनः ॥"

इति काशिकायामुदाहृतम् । प्राचामुक्तावेकवाक्यस्थपदात् परत्वाभावस्तु नाशङ्क्यः । गोविन्दो युष्मानस्मान् रक्षत्वित्येकवाक्यत्वात् । कथा इत्यादेश्च पदादित्वसंपादकत्वात् ॥

## पश्या-।

यत्तु दर्शनमिह ज्ञानमात्रमदर्शनं लोप इत्यत्र यथेति तन्न । अग्निचिदादौ क्विपादिनां लोपेऽपि ज्ञानस्य सत्वाददर्शनमित्यत्र दर्शनशब्देन ज्ञानमात्रग्रहणायोगादिति ॥

## सपूर्वायाः-।

यत्तु हरिस्त्वां त्रायते स मामित्यत्र त्रायत इति क्रियानुषङ्गाभ्युपगमेऽप्येकतिङ्वाक्यमिति परिभाषितैकत्वानपायादिति केचित् । तच्चिन्त्यम् । तथा सत्ययं दण्डो हरानेनेत्यत्रास्तीति गम्यमानक्रियया दण्डस्य पृथगन्वयेऽप्युक्तपरिभाषितैकवाक्यत्वानपायाद्धरेत्यस्य तिङ्ङतिङ इति निघातापत्तेः ॥

## चौ।

यत्तु लुप्ताकारनकार इति तत्राकारलोपेन नका-

त्वाच्च । न हि भवन्मते झषस्तथोरिति कृते जश्त्वं सुल-भमुक्तपरिभाषाविरोधात् । यदि तु प्रकृतसूत्रादिदृष्ट्या नत्वादेरसिद्धत्वेन तद्दृष्ट्या संनिपातविघाताभावात् परिभाषाया अप्रवृत्तिरत एव जग्धमित्यादौ सन्निपाते न जग्ध्यादेशे तन्निमित्तं तस्य धत्वम् । अत एवेकोयणाचीत्यनन्तरं मय उञो वेत्येव सिद्धे यथास्थितसूत्रं किम्वुमित्यादौ वत्वस्यासिद्धत्वद्वारा ऽनुस्वाराभावार्थमित्याकरः । अन्यथेको यणचीत्यनन्तरं पाठेऽप्युक्तपरिभाषया ऽनुस्वाराभावसिद्धेरलग्नतापत्तिः । अत एव दो दद्धोरित्यत्र दान्तधान्तपक्षौ दर्शितौ भाष्ये । अत एव पास्पृद्धयासैद्धामित्यादौ जश्त्वाद्युपन्यस्तं माधवादिरीतिर्विभाव्यते विभाव्यतां नाम नन्वेतावता पूर्वापरग्रन्थविरोधः परिहर्तुं शक्यः इति दिक् ॥

## इति हलन्ताः स्त्रीलिङ्गाः ।

यत्तु विमलद्युशब्देऽझलन्तत्वान्न नुमित्युदाहृत्य वाःशब्दे तदुपन्यसनं तदनवधानात् । विश्वसृडादौ प्रतिविधेयमिति प्रक्रिया । तत्रादिना देवेडुपयडादि । प्रतिविधानं च काम्यच्सूत्रे सृजिदृशोरिति सूत्रे चोपयक्ष्यामि रज्जुसृड्भ्यामिति भाष्यप्रयोगात् कत्वविषये षत्वमभ्युपगम्यत इति । यत्तु व्रश्चादिसूत्रे सृजियज्योः

पदान्ते षत्वं कुत्वापवाद इति स्वग्रुत्विजोस्तु निपातनादेव कुत्वमस्त्वक्षस्थलस्वतेरौणादिके ऋच्प्रत्यये बोध्य इति क्विन्प्रत्ययस्येति प्रत्ययग्रहणप्रयोजनत्वेन भाष्यकृदुपन्यस्तस्य मानोऽस्रगित्यत्र स्रजेः कुत्वस्यैवं सत्यनुपपत्तिः । पदान्तत्वाभावे झल्यस्वाक्षीदित्यादौ सावकाशस्य कुत्वापवादत्वाभावाच्च । न च पदान्ते षत्वमपवादः पृथक्त्वाद्वालक्षणाभावात् । न च कुत्वस्यासिद्धत्वात् षत्वमिति वाच्यम् । स्पृग्दृष्टगादिष्वपि षत्वापत्तेः । प्रत्ययग्रहणसामर्थ्यात्तत्र कृते षि तस्य जशि वस्य कुत्वमिति तु प्रकृतेऽपि समानम् । स्वग्रुत्विजोर्निपातनात् कुत्वमिति तु प्रकृतेऽपि समानम् । स्वग्रुत्विजोर्निपातनात् कुत्वस्वीकारेऽपदान्ते तदापत्तेः । पदान्ते प्राप्तस्य कुत्वस्य षेण बाधे प्रसक्ते कुत्वप्रतिसवमात्रमनेन निपात्यत इति पदान्तमात्रविषयं कुत्वमिति चेन्न । तत्सन्नियोगेन निपातितस्य स्वगित्यमागमस्यापि पदान्तविषयतापत्तेः । सन्नियोगपरिभाषाविरुद्धं किञ्चित् पदान्तविषयं किञ्चित्सर्वविषयमिति तद्युक्तिं विनाऽभ्युपगन्तुमशक्यमिति ॥

## इति हलन्ता नपुंसकलिङ्गाः ।

---

स्वरादेर्वाधकोन्तोदात्तत्वं काशिकायामुक्तमसंगतं स्वधगित्यादिलक्ष्यविरोधादिति केचित् । स्वधकस्तो-मस्वस्तय इत्यादावन्तोदात्तस्यापि स्वधः पाठादौत्स-र्गिकमन्तोदात्तत्वमङ्गीकृत्य व्यत्ययेन क्वचिदाद्युदात्त-त्वकल्पनात् काशिकोक्तान्तोदात्तत्वसामञ्जस्यात् । यच्च माङ्नमोः स्वरादिषु पाठः सत्ववचनत्वेऽप्यव्ययत्वार्थं इत्यत्र लक्ष्मीवाचकस्य माशब्दस्याव्ययत्वापत्तिरिति दूषणं तद्भ्रमात् । तस्य माङ्त्वाभावात् ॥

## कृन्मेजन्तः ।

पिबध्या इत्यत्र कर्त्तरि शबिति तद्भ्रमात् । अ-व्ययकृतो भाव इति सिद्धान्तादिति केचित् । तद्भावा-नवबोधात् । तत्र हि कर्त्तरि शबिति सूत्रोल्लेखः तथा च यकि प्राप्ते व्यत्ययेन शबिति तेषां भावः । स्वस्यैव परशबनुक्तेर्न्यूनतेति दिक् ॥

## इत्यव्ययानि ।

---

## वनो र च ।

यत्तु वन्नन्तात्तदन्ताच्चेति व्याख्यातम् । तत्र वन्नन्ता-दिति व्यर्थं व्यपदेशिवद्भावेन वन्नन्तान्तादित्यत एव वन्नन्तस्यापि ङीप्सम्भवात् । व्यपदेशिवद्भावोऽप्रा-

तिपदिकेनेत्याश्रयणे टिड्ढादिसूत्रेऽपि तथा वाच्यं स्यात्। तदन्तविधिसद्भावादसम्भवयुक्तिकं च। अन्यत्र स्वयं तथा व्याख्यानेन विरुद्धं च॥

## प्रत्यय—।

ननु निर्दिष्टपरिभाषया आपोऽव्यवहितपूर्वस्यात इत्यर्थलाभात् सर्विकेत्यादावसंभवः। न च वचनसामर्थ्यादिह ककारातिरिक्तेनाव्यवधानमाश्रीयत इति वाच्यम्। कात्पूर्वस्य व्यवहितसाधारणस्याश्रयणेन वचनसामर्थ्यादश्विकेत्यादावेकादेशात् पूर्वं भवति इत्वमिति कल्पनस्यापि संभवादिति चेन्न। न यासयोरिति ज्ञापकान्न चेत्युक्तकल्पनस्यैवोचितत्वादिति॥

## त्यक्त्यपोश्च।

इह कौमुद्यां दक्षिणस्यां जाता दाक्षिणात्येत्युक्तं तन्न विग्रहवाक्यं किन्तु अर्थकथनम्। त्यब्विधावव्ययसाहचर्यादाजन्तदाक्षिणाशब्दात्त्यब्विधानादिति बोध्यम्॥

## यञश्च।

यत्त्वकारलोपे कृते हलन्तहितस्य हल उत्तरस्य तद्धितयकारस्य प्रमाणं नास्तीति कौस्तुभम्। तत्र उप-

धाभूतस्येति व्यर्थम् । न च यस्येतिलोपलस्याभीयत्वेनासिद्धत्वादीत्यरस्य हल उत्तरस्य तस्याभावात्तदर्थं तदिति वाच्यम् । वचनसामर्थ्येनाल्लोपस्यासिद्धत्वाभावात् । कथमन्यथा आपत्यस्येत्यत्रोपधाभूतस्येति तैर्नानुवर्त्तितम् । किञ्चैवं सत्यल्लोपे कृते हलस्तद्धितस्येति किमर्थमुदाहृतम् । न ह्युपधालोपस्याल्लोपापेक्षा प्रत्युत परत्वादुपधालोप एव प्रागुदाहर्त्तुमुचितः । नन्वनयोः परस्परमसिद्धत्वेन प्रागुदाहरणे कामचारः विप्रतिषेधस्य आभीयासिद्धत्वे जनसनखनामिति सूत्रे भाष्यकृता सिद्धान्तितत्वात् ॥

## काण्डान्तात् ।

यत्त्विह द्विकाण्डेत्यत्र द्वयसचो लुगित्यनूद्य प्रथमस्य द्वितीयस्य ऊर्ध्वमाने मतौ ममेति सिद्धान्तादयुक्तमिति । तत्पुरुषस्याङ्गुलेरिति च सूत्रे द्व्यङ्गुलमित्यत्र द्विगोर्नित्यमिति द्वयसचो लुगिति । तत्परस्वग्रन्थविरोधादुपेक्ष्यम् । अन्यत्तु प्रक्रियाप्रदीपादवधेयम् ॥

## पुरुषात् प्रमाणे-।

द्विपुरुषहस्तिभ्यामित्यत्र पठ्यमानेन वार्त्तिकान्तरेण लुगित्यनूद्योक्तसूत्रस्य भाष्यवार्त्तिककाराभ्यामस्य-